# तन्त्रकौमुदी

महामहोपाध्यायदेवनाथठक्कुरतर्कपञ्चाननकृता

मिथिलाविद्यापीठग्रन्थमाला
प्राचीनाचार्यग्रन्थावली
त्रयोविंशतं पुष्पम्

# तन्त्रकौमुदी

महामहोपाध्याय-तर्कपञ्चानन
देवनाथठक्कुर
आगमाचार्येण
कृता

दरभंगा-राजकीयपुस्तकालयस्थेन
विहारविश्वविद्यालयान्तर्गत-
दरभंगास्थचन्द्रधारीमिथिलामहाविद्यालयरीडरेण
श्रीरमानाथझाशर्मणा
सम्पादिता

# Tantrakaumudi

of

## Devanath Thakur

*Edited by*

**Shri Ramanath Jha**

of Darbhanga Raj Library

and

Reader, Bihar University.

**Chandradhari Mithila College,**

*Darbhanga*

**Sake 1890** **A.D. 1969**

# भूमिका

तर्कपञ्चाननस्यागमाचार्यस्य देवनाथठक्कुरस्य सप्तसु कौमुदीषु द्वे मन्त्रकौमुदी तन्त्रकौमुदी च तन्त्रशास्त्रीये। तयोः प्रथमा मन्त्रकौमुदी मिथिला-विद्यापीठ-ग्रन्थमालायां प्राचीनचार्यग्रन्थावलीसु अष्टमं पुष्पं मयैव सम्पादिता प्रकाशमानीता। अपरा च तन्त्रकौमुदी तस्यामेव ग्रन्थमालाया-मद्य प्रकाशमानीयते। विद्यापीठनिदेशक-महोदयानां डाक्टर श्रीशीतांशुशेखर-बागचीशमर्णामेवानुकम्पया ग्रन्थस्यास्य प्रकाशनं सम्भवमभूदिति तेषामतीव-ानुग्रहं ज्ञापयामि।

ग्रन्थस्यास्य प्रकाशनार्थं चतस्रो मातृका मयोपलब्धाः, सर्वा अपि तालपत्रेषु लिखिताः प्राचीनाः, किन्तु तासां तिस्रः खण्डिताः। आद्या एकत्रिंशत्तमं पत्रमारभ्यैकषष्ट्यधिकशततमं पत्रं यावदाद्यन्तहीना प्रतिपत्रं शतशः कीटविद्धा नातिशुद्धा किन्तु सुपठा। मध्येऽप्यत्र कतिचित् पत्राणि नष्टानि। द्वितीया च मातृका तथैव अष्टाविंशतितमपत्रादारभ्य चत्वारिंशद-धिकैकशततमं पत्रं यावदाद्यावन्ते च खण्डिता नातिशुद्धा किन्तु स्पष्टाक्षरा। तृतीयाऽर्धदग्धा किन्तु शुद्धा आदितो नवाधिकशततमं पत्रं यावत्; अतएव अर्धं नष्टाखण्डिताऽपूर्णा। बहुषु स्थलेषु सर्वाभ्योऽपि मातृकाभ्यः पाठनिर्णये उपकृतो मुख्यत एकामेव मातृकामवलम्ब्य समस्तं ग्रन्थमेनं प्रकाशमानीतवानस्मि। सा च मातृका सम्पूर्णा एकचत्वारिंशदधिकशतपत्रात्मिका नातिशुद्धा किन्तु संशोधिता स्थाने स्थाने टिप्पणीभिः संवलिता शाके १६०७ पौषकृष्णचतुर्थ्यां शुक्रे सम्भुआग्रामे श्रीपतिमिश्रेण स्वार्थं लिखिता सुपठा। मध्ये मध्ये च कतिचिदक्षराणि अत्रापि कीटभक्षितानि। मातृकेयं दरभंगाराजकीय-पुस्तकालये विक्रयार्थमानीता किन्तु पुस्तकस्यास्यान्तिमपत्रे बहिः पृष्ठे श्रीबदरीनाथशर्मणः श्रोत्रियस्येदं पुस्तकमिति लेखात् अस्य स्वामी ज्ञातः। श्रोत्रियो बदरीनाथझाशर्मा सुपरिचितः पण्डितः प्रसिद्धश्चागमाचार्यो ममैव पितामहभ्राता मत्पितुश्चाचार्यः शताधिकवर्षं पूर्वंसुजानग्रामे वसतिस्म। वर्त्तते चास्यैवागमाचार्यस्य पण्डितप्रवरस्य दौहित्रः श्रीमच्चन्द्रधारीसिंहमहोदयाः। अपुत्रस्यास्य पण्डितस्य पुस्तकमिदं केनाप्यानीय विक्रयार्थं प्रदत्तमिति

स्पष्टम्। ततश्च पुस्तकस्यास्य महत्त्वमपि प्रथितं यतोऽनेनैव पण्डितेन पुस्तकमिदं संशोधितं टिप्पणीभिः समलङ्कृतं च। सर्वाश्च ताष्टिप्पण्यः "क" मातृकायामिति संकेतिता अस्मिन् ग्रन्थे प्रकाशितास्तत्तद्स्थलेषु विषयं स्पष्टीकुर्वन्ति। अतिरहस्यात्मकोयं ग्रन्थ आगमाचार्यैः प्रणीतोपरेणागमाचार्येणाधीतः संशोधितः टिप्पणीभिः संवलितश्चेति अस्य प्रामाणिकत्वं सुस्पष्टं सुधीभिः संभाव्यम्।

ग्रन्थस्यास्य प्रणेता देवनाथठक्कुरो "गोविन्दपञ्चमसुतो विदितो जगत्यामत्यादरेण विदिताखिलतन्त्रसारः" तर्कपञ्चाननः। मन्त्रकौमुद्यामेवास्य परिचयो मया समुपन्यस्तः। वत्सगोत्रीये धुसोतमहाकुले तस्य नगराङ्-शाखायामुत्पन्नोऽयं महापण्डितः रविकरठक्कुरस्य वृद्धप्रपौत्रः बुद्धिकरठक्कुरस्य प्रपौत्रः केशवठक्कुरस्य पौत्रः काव्यप्रदीपपूजाप्रदीपप्रभृतिग्रन्थानां प्रणेतुर्महामहोपाध्यायस्य गोविन्दठक्कुरस्य पञ्चमः पुत्रः। अस्यैवानुजो मधुसूदनठक्कुरः आलोककण्टकोद्धारकर्त्ता विश्रुतो नैयायिकः। मिथिलायां सप्तकौमुदीकाररूपेणास्य ख्यातिः। आगमाचार्यश्चायं प्रसिद्धः। किन्तु तर्काटवीसरणिसम्भ्रमसाहसिक्योयं पञ्चाननः सुप्रसिद्धो नैयायिकः चिन्तामण्यालोकस्य परिशिष्टनामकं कमपि टीकाग्रन्थं निरमादिति दिनेशचन्द्रभट्टाचार्यमहाशयेन स्वकीये मिथिलायां नव्यन्यायशास्त्रस्येतिहासनामके ग्रन्थे उल्लिखितमस्ति। महानयं धुसोतानां वंशो विश्रुतनैयायिकानामागमाचार्याणाञ्च। देवनाथोऽपि स्वपितुरेव सकलमागमसिद्धान्तं सरहस्यं यत्नादादराच्चाध्यैष्टेति मन्त्रकौमुद्यां वर्णितम्।

मन्त्रकौमुद्यां तस्य रचनाकालो दत्तः "अब्दे लक्ष्मणसेनस्य वियच्छून्याब्धिलक्षिते। अकरोत्कौमुदीमेतां देवनाथो जगद्धितामिति।" ल. सं. ४०० तमः ख्रिष्टाब्दो १५०९तमः। दिनेशचन्द्रभट्टाचार्यमहाशयस्य मातृकायां तन्त्रकौमुद्यां रचनाकालः शाके १४८६ तमः दत्तः सच संवत्सरः ख्रिष्टाब्दीयो वत्सरः १५६४तमः। मन्त्रकौमुदी - तन्त्रकौमुद्योश्च रचनाकालयोरन्तरं पञ्चपञ्चाशत् वर्षाणि; एका यदि कैशोरे रचिता तर्हि द्वितीया वार्धक्ये। वस्तुतस्तु तन्त्रकौमुदी कमतेश्वरस्य मल्लदेव इति प्रसिद्धस्य नरनारायणस्य क्षितिपतेराज्ञया निर्मिता। नरनारायणो मल्लदेवः कूचविहारराज्यस्य संस्थापकस्य विश्वसिंहस्य पुत्रः। स च विश्वसिंहः

कामरूपं मुसलमानैर्विध्वस्तं पुनरुद्धृतवान्, कामाख्यापीठस्योद्धारं च कृतवानिति प्रसिद्धम् । कामरूपोद्धारकालः ख्रिष्टाब्दात् १४६८ तमतः १५०८ तमं यावत्, विश्वसिंहस्य मृत्युकालश्च ख्रिष्टाब्दः १५२८ तमः । तन्त्रकौमुद्या अन्तिमे श्लोके देवनाथस्योक्तिः "देवोसौ कमतेश्वरक्षितिपतिस्तं देवनाथं चिरात् संस्थाप्य स्वयमादरेण विदधे विद्वन्मुदे कौमुदीमिति" । १५२८ तमे ख्रिष्टाब्दे सिंहासनारूढो मल्लदेवः चिरादेनं देवनाथं संस्थाप्य कौमुदीं विदधे इति ख्रिष्टाब्दात् १५ ८तमतः पश्चात् १५६४तमतः प्रागेव तन्त्रकौमुदी रचितेति पूर्णतः सम्भवति । तन्त्रकौमुद्यां मन्त्रकौमुद्या उल्लेखो वारंवारमापतति प्रमाणकौमुद्या अपि । अतः संभाव्यते तन्त्रकौमुदी तर्कपञ्चाननागमाचार्यस्य देवनाथस्य समधिगतसमस्तप्रागल्भ्यस्य रचना । तस्मिन् काले स प्रायोशीतिवर्षदेशीयो वृद्धः ।

तन्त्रकौमुदी कामरूपे रचिता । अत्र तन्त्रगुप्तानां मन्त्राणां विधिः प्रवर्णितः । के च मन्त्रा आशुफलदाः कथं च तेषामुपासना विधेया केन विधिना तेषां सिद्धिः भविता इत्यादयो विषया अत्र सप्रमाणं संगृहीताः । सर्वत्र काम्यकर्मणामेव प्राधान्यमुपदर्शितम् । मारण - मोहन - वशीकरणार्षण - स्तम्भनोच्चाटनादीनां बहवः प्रयोगा वर्णिताः । अत्यन्तरहस्यमेतत्सर्वं बहुधालौकिकं प्रतिभाति । प्रयोगा अपि विचित्राः, वर्णनेनापि भयमुत्पादयन्ति । किन्तु मध्ययुगे मन्त्राणां सिद्धिरेवाभ्यर्हिता । सिद्धेश्च फलमलौकिकसामर्थ्यासादनमासीत् । एवंविधानां प्रयोगाणां केन्द्रं कामरूपम् । सिद्धानां महात्मनामनेका विचित्राः कथाः श्रूयन्ते । ग्रन्थेऽस्मिन् त एव प्रयोगा विस्तरेण वर्णिताः । मन्त्राणां साधनकर्म दुष्करं, किन्तु यादृशी फलश्रुतिः तया बहवोऽत्र प्रयोगाः स्वल्पेनाप्यायासेन महत्या च श्रद्धया साध्याः प्रतिभान्ति । उक्तं च मञ्जुघोषपटले – "श्रद्धया जायते सिद्धिरिहलोके परत्र च । श्रद्धाहीने न देवेशि सिद्धिर्जन्मशतैर्भवेत् ।" प्रधानमत्र तत्त्वबोधः स च सम्यगुपासनेन प्राप्तव्यः । तत्त्वबोधात् स्वेच्छाविरचितमपि वर्त्म फलदायकमिति सिद्धान्तितम् । सिद्धिमार्गप्रदर्शकमिदं ग्रन्थरत्नं सरहस्यमुपन्यस्तं साधनासरणिं प्रस्तौति । ज्योतिश्शास्त्रवत् वैद्यकशास्त्रवच्च आगमशास्त्रमपि प्रत्यक्षफलसाक्षिकमिति विद्यापतिठक्कुरेणापि पुरुषपरीक्षायां स्वीकृतम् । एतदेवास्य ग्रन्थस्य महत्त्वम् ।

तत्रापि त्रिपुरसुन्दरीमहादेव्या उपासनाविधिरत्र प्राधान्येनोपन्यस्तः पुरश्चरणकर्मणो विधिः होमस्य च विधिः विस्तरेण वर्णितः पद्धतिरिव व्यवहारदशायामुपकारकः सेत्स्यतीति। उपासनाप्रधानोऽयं ग्रन्थः साधकानां हिताय निर्मितः प्रकाशमानीतः साधकानुपकरोत्विति आशासे।

अक्षराशुद्धिरत्र प्रभूता तदर्थं क्षमां याचे। इति

श्रीरमानाथझाशर्मा
दरभङ्गा राजकीय
पुस्तकालयस्थः—
रामनवमी शाके १८९०

# विषयानुक्रमणिका

— :o: —



The Government of Bihar established the *Mithila Institute* of Post-Graduate Studies and Research in Sanskrit Learning at Darbhanga in 1951 with the object, *inter-alia,* to promote advanced studies and research in Sanskrit learning, to bring together the traditional Pandits with their profound learning and modern scholars with their technique of research and investigations, to publish works of permanent value to scholars. This Institute is one of the five others planned by this Government as a token of their homage to the tradition of learning and scholarship for which ancient Bihar was noted. Apart from the Mithila Institute, three others have been established and have been doing useful work—Nalanda Institute of Research and Post-Graduate Studies in Buddhist Learning and Pali at Nalanda, K. P. Jayaswal Research Institute at Patna, and the Bihar Rastra Bhasha Parishad for research and advanced studies in Hindi at Patna. In the establishment of the Mithila Institute the State Government received a generous donation from the Maharajadhiraj of Darbhanga for construction of the building on a plot of land also donated by him.

As part of this programme of rehabilitating and re-orientation of ancient learning and scholarship, the editing and publication of this volume has been undertaken with cooperation of scholars in Bihar and outside. The Government of Bihar hope to continue to sponsor such projects and trusts that this humble service to the world of scholarship and learning would bear fruit in the fullness of time.

*Copies of this Volume, postage paid, can be had of the Director, Mithila Institute, Darbhanga on receipt of Rs 8/- by M.O. or Postal Order or Cash.*

Printed by Sri Jugal Kishor at the Hindustan Press, Laheriasarai and published by Dr. S. Bagchi, Director Mithila Institute of Post-Graduate Studies and Research in Sanskrit Learning, Darbhanga.

ॐ नमस्तस्यै ॥

आनन्देन त्रिदशतटिनीं मूर्ध्नि विन्यस्य शम्भो-
रर्धं मध्ये परिकरसभं ताण्डवे शूलहस्तम् ।
दृष्ट्वा पीनस्तनमवनतभ्रूलतं वर्धमान-
स्पर्धं कोपादपरमवतादर्धमर्धाम्बिकेशम् ॥

ये ते तर्कविचारचारुमतयो ये वेदवेदान्तिनो
ये केचिद् यतयो विशुद्धमतयो जानन्ति तत्त्वं न ते ।
तत्त्वं सम्यगसम्यगेव यदि वा प्राञ्चो यदञ्चन्ति तत्
किं तर्कैरतिपीड़नेन गुरुणा पूज्यो गुरूणां क्रमः ॥

वामे मार्गे सरसमतयो दक्षिणे दुर्बलाशाः
काले काले विदधति रतिं तन्त्रमन्त्रेषु धीराः ।
तस्मादस्मिन् सरसविदुषो वेदितुं तन्त्रगुप्तान्
मन्त्रानेतान् भणितिरधुना तर्कपञ्चाननस्य ॥

गोविन्दपञ्चमसुतो विदितो जगत्या-
मत्यादरेण विदिताखिलतन्त्रसारः ।
तर्काटवीसरणिसंभ्रमसाहसिक्य-
पञ्चाननो विजयते भुवि देवनाथः ॥

राजा गोविन्ददेवो गजपतिरदित स्वर्णसिंहासनार्धं
दत्वा मुद्रासहस्राण्यपि नव दश वा चारुपट्टाम्बराणि ।
अर्वं गर्वं तमेकं कविवरमपरं दुर्लभं भूपतीनां
पल्यङ्कं निःकलङ्कं मणिमुकुटवरं तर्कपञ्चाननेषु ॥

दोर्दर्पेण विजित्य भूपतिभरान् भूताधिनाथश्चिराद्
भूयोऽभून्नरनाथशेखरमणिः श्रीविश्वसिंहो महान् ।

तत्पुत्रो बलवीर्यशौर्यविभवौदार्यातिधैर्यादिमान
ख्याताचारविचारचारुचरितः श्रीमल्लदेवोऽधुना ॥

श्रीमल्लदेवकमतेश्वरकेलिमुक्त-
मुक्ताफलैरपरभूपतिभूषणानि ।
किञ्चै तदुज्झितनराश्वगजैरिदानी-
मन्येपि केचन नराश्वगजाधिनाथाः ॥

मृगाक्ष्यो विक्षोभं दधति कुपितानन्यजधिया
भिया दूरारण्यं सपदि निविशन्ते नृपगणाः ।
धुरं गुर्वीमुर्वी चिरमननुभूतां विमृशति
क्रुधा कोदण्डज्यां परिमृशति मल्लक्षितिपतौ ॥

गजाधिनाथः क्षितिनाथनाथं
तं देवनाथं विनियुज्य देवः ।
श्रीमल्लदेवो नरदेवदेवो
यशःशरीरं निजमातनोति ॥

गुरुक्रमेण मन्त्रेषु पूर्वमेवा — — —ने
इदानीं तन्त्रगुप्तानां मन्त्राणां विनिरूच्यते ॥
अज्ञानतिमिरध्वंसि संसारार्णवतारकम् ।
आनन्दबीजमवतादतर्क्यं त्रैपुरं महः ॥

तत्र प्रथमं बालामन्त्राः ।

ज्ञानार्णवे । त्रिपुरा त्रिविधा देवी बालां तु प्रथमं शृणु ।
यया विज्ञातया देवि साक्षात् सुरगुरुर्भवेत् ॥

सूर्यस्वरं समुच्चार्य विन्दुनादकलात्मकम् ।
स्वरान्तं पृथिवीसंस्थं तुर्यस्वरविभूषितम् ॥

बिन्दुनादकलाक्रान्तं सर्गवान् भृगुरव्ययः ।
शक्रस्वरसमापेतो विद्येयं त्र्यक्षरी भवेत् ॥
गङ्गातरङ्गकल्लोलवाग्गुम्फपददायिनी ।
महासौभाग्यजननी महासौभाग्यदा भवेत् ॥
महासौन्दर्यसुभगा महामृत्युविनाशिनी ।
सर्वतीर्थमयी देवी स्वर्णरत्नादिदाचिरात् ॥
महामोक्षप्रदा नित्यं महाभोगप्रदा शिवा ।
वाग्भवेनेन्दुमहसा वागीशत्वप्रदायिनी ॥
कामराजेन बीजेन शक्रगोपद्स्फुरत्त्विषा ।
त्रैलोक्यं मोहयन्तीयं शक्तिबीजेन सुव्रते ॥
स्फुरत्सुवर्णवर्णेन सौभाग्यं तस्य मन्दिरे ।

सूर्यस्वर ऐकारः । स्वरान्तः ककारः । पृथिवी लकारः । भृगुः सकारः । शक्रस्वर औकारः । तेन " ऐँ क्लीँ सौः " इति मन्त्रः ।

तथा दक्षिणामूर्तितन्त्रे । आदिमादिश्च मध्यं च मध्यं मध्यं तथान्तिमम् ।
अन्त्यमन्त्यं तथादिं च सैव शीघ्रफला भवेत् ।
नवार्णा त्रिपुरेशानी प्रणवेन दशाक्षरी ।

आदिः "ऐँ"-कारः । पुनरपि स एव । मध्यं कामबीजम् । पुनरपि वारद्वयं तदेव । अन्त्यं " सौः " । पुनरपि वारद्वयं स एव । ततः आदिबीजं " ऐँ "-कारः । एवं " ऐँ ऐँ क्लीँ क्लीँ क्लीँ सौः सौः सौः ऐँ " इति मन्त्रः । अत्रैवादावोङ्कारदाने द्वितीयो मन्त्रः दशाक्षरः ।

ज्ञानार्णवे । पराबीजं समुच्चार्य तत आधारपूर्वकम् ।
शक्तीति पदमालिख्य कमलासनमालिखेत् ॥
ङेन्तं नमः पदं चोक्त्वा आसनस्य मनुः प्रिये ।
उपविश्य ततो देवि भूतमन्त्रासनं चरेत् ॥
भूतशुद्धिं ततः कुर्यात् प्राणायामविधिक्रमात् ।

बाराही तन्त्रे ।　ततः पुष्पं समादाय करकच्छपिकोदरे ।
चिन्तयेत् पापपुरुषं कुक्षौ संस्थाप्य शोधयेत् ॥
मूलाधारात्ततः प्राणं ब्रह्ममार्गेण तान्त्रिकाः ।
हंसेन पुष्करस्थाने परमात्मनि योजयेत् ॥
न्यसेत् पुष्पं शिरोदेशे आत्मानं पूजयेत्ततः ।
पुष्पाञ्जलित्रयं दद्यात् क्रमादाधारमण्डले ॥

पापपुरुषस्वरूपं च ।　ततः पुरुषनिभं पापमनादिभवसम्भवम् ।
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं कृष्णं कुक्षौ दक्षिणतः स्मरेत् । इति

दक्षिणत इति मतान्तरम् ।

ज्ञानार्णवे ।　वामकुक्षिस्थितं पाप-पुरुषं परिचिन्तयेत् ।
वायुबीजं समुच्चार्य षट्कोणादागतं महत् ॥
शोषयेत् तेन बीजेन देहं च परमेश्वरि ।
पापेन सहितं शुष्कं कृत्वा तेन क्रमेण तत् ॥
वह्निबीजेन संदह्य पापेन सहितं पृथक् ।
पापेन रहितं पश्चात् प्लावयेदमृतात्मना ॥
प्राणप्रतिष्ठया पश्चाद्देहे जीवं निधापयेत् ।
मुखवृत्तं समुच्चार्य हंसं च विपरीततः ॥
उच्चरेत् परमेशानि विद्येयं त्र्यक्षरी भवेत् ।
प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्मणि साधयेत् ॥

मुखवृत्तमाकारः । सविन्दुरिति प्राञ्चः । विपरीतं "सोहं" इत्यर्थः ।

विशुद्धदेहो देवेशि ततो न्यासं समाचरेत् ॥
ऋषिरस्य महेशानि दक्षिणामूर्तिरव्ययः ।

न्यसेच्छिरसि पूज्यत्वात् पंक्तिश्छन्दो मुखे प्रिये।
देवता हृदये बाला त्रिपुरा परमेश्वरी।
बीजं वाग्भवमित्युक्तं शक्तिं तार्तीयमूहयेत् ॥
नाभेराचरणं न्यस्येद् गलादानाभि चापरम्।
मूर्धादिगलपर्यन्तं त्र्यक्षरीं विन्यसेत् क्रमात् ॥

एवं च　　नाभेराचरणं न्यस्येद् वाग्भवं मन्त्रवित्तमः।
हृदयान्नाभिपर्यन्तं कामराजं प्रविन्यसेत् ॥

इत्यादि निबन्धेषु वाग्भवादिपदं भैरवीप्रथमबीजादिपरं परिभाषाबलादिति निरस्तमुक्तवचनविरोधात् बालाबीजानामेव वाग्भवादिपदेन परिभाषणाच्च। तन्मूलत्वेनैव भैरव्यादिबीजानामपि तथालक्षितात्। एवं बीजैस्त्रिभिरिति प्रपञ्चसारोऽप्येतत्पर एव साधारणशब्दत्वात्। यद्वा यत्र मन्त्रे यद् बीजं तत्परं वाग्भवादिपदमविशेषात्।

तथा　　वामे पाणितलं चैकं दक्षपाणितले तथा।
उभयोः संपुटे विद्या त्रिबीजं विन्यसेच्छिवे ॥

एवं च　　आद्यं द्वितीयं करयोः तृतीयमुभयोर्न्यसेत्।
मूर्ध्न्याधारे हृदि न्यस्येद् भूयो बीजत्रयं क्रमात् ॥

इत्यादि निबन्धेष्वयमेव क्रमो बोद्धव्य एकवाक्यताबलात्।

तथा　　पञ्चबाणान् क्रमेणैव कराङ्गुलिषु विन्यसेत्।
अङ्गुष्ठादिकनिष्ठान्तं क्रमेण परमेश्वरि ॥
द्राँ द्रीँ क्लीँ ब्लूमिति प्रोक्तं चन्द्रमाः सर्गवान् भवेत्।
पञ्चबाणाँश्च देवेशि नामानि शृणु पार्वति ॥
क्षोभणो द्रावणो देवि तथाकर्षणसंज्ञकः।
वश्योन्मादक्रमेणैव कथितानि वरानने ॥
कामास्तत्रैव विज्ञेयास्तेषां बीजानि संशृणु।
पराबीजं मध्यबाणं वाग्भवं परमेश्वरि ॥
तुर्यबाणं ततश्चैवं स्त्रीबीजं तत्क्रमात् प्रिये।

पञ्चकामा इमे देवि नामानि शृणु पार्वति ।
काममन्मथकन्दर्पमकरध्वजसंज्ञकाः ।
मीनकेतुर्महेशानि पञ्चमः समुदीरितः ॥

चन्द्रमाः सकारः । क्षोभण इत्यादि "द्रां क्षोभणबाणायनमः" इत्यादिक्रमः । पराबीजं "ह्रीँ" । मध्यबाणं "क्लीँ" । वाग्भवं "ऐँ" । तुर्यबाणं "ब्लूँ" । स्त्रीबीजं "स्त्रीँ" इति कामाः ।

तथा मूलविद्यां द्विरावृत्य सर्वाङ्गुलितलेष्वपि ।
षडङ्गमपि निर्वर्त्य मातृकान्यासमाचरेत् ॥
(व्यस्तपत्राम्बुजे) द्व्यष्टपत्राब्जके कण्ठे स्वरान् षोडश विन्यसेत् ।
द्वादशाच्छदहृत्पद्मे कादीन् द्वादश विन्यसेत् ॥
दशपत्राम्बुजे नाभौ डकारादीन् न्यसेद् दश ।
षट्पत्रे लिङ्गमध्यस्थे बकारादीन् न्यसेच्च षट् ॥
आधारे चतुरो वर्णान् न्यसेद् वादीन् चतुर्दले ।
हंक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत् प्रिये ॥
इत्यन्तर्मातृकां न्यस्य सर्वाङ्गन्यासमाचरेत् ।
मूर्धा च मुखवृत्तं च नेत्रकर्णेषु पार्वति ॥
नासागण्डौष्ठदन्तेषु समूर्धास्येषु विन्यसेत् ।
पाणिपादयुगस्यान्तः सन्ध्यग्रेषु च विन्यसेत् ॥
पार्श्वद्वये पृष्ठनाभिजठरेषु क्रमान्न्यसेत् ।
यादीन् सधातुकान् प्राणजीवब्रह्मान्वितान्न्यसेत् ॥
हृदये बाहुमूले च तथा परगले··· ···।
कक्षायां हृदयप्रान्ते पाणिपादयुगे ततः ॥
जठराननयोर्देवि व्यापकं च क्रमान्न्यसेत् ।

व्यापकमिति हृदयमारभ्य तत्तदङ्गव्यापकमित्यर्थः । हृदयप्रान्त इति पाण्यादिविशेषणं प्रवाहुलाभाय । एवं हृदारभ्य पाणिपादयुगे तत इति तन्त्रे ऽयमेवार्थः । एवं यादिदशके व्यापकत्वं सिद्ध्यतीति केचित् । पाणिपादयुगे तदिति निबन्धारः । वस्तुतः पाण्यादिषट्के तत्सम्बन्ध इति प्रमाणकौमुद्यां विस्तरः ।

विद्यान्यासं ततः कुर्यात् त्रिभिर्बीजैः क्रमाच्छिवे ।
करयोर्विन्यसेदादौ मणिबन्धे तलेऽग्रके ॥
दक्षे वामे च विन्यस्य कक्षकूर्परपाणिषु ।
पुनर्दक्षे तु वामे तु पादयोश्च तथा न्यसेत् ॥
पादान्ते हृदये लिङ्गे न्यसेत् देवि ततः परम् ।
एतेष्वङ्गेषु देवेशि संहारक्रमतो न्यसेत् ।
विद्यां सृष्टिक्रमेणैव जानीहि परमेश्वरि ॥
नवयोन्यात्मकं न्यासं कुर्याद् बीजैस्त्रिभिस्ततः ।
कर्णयोश्चिबुके भूयः शंखयोर्वदने पुनः ॥
नेत्रयोर्नसि विन्यस्य बाहुयुग्महृदम्बुजे ।
ततः कूर्परयोः कुक्षौ जानुनोर्ध्वजमूर्धनि ॥
पादयोर्गुह्यदेशे च पार्श्वहृत्सु स्तनद्वये ।
कण्ठे च नवयोन्याख्यं न्यसेद् बीजत्रयं क्रमात् ॥

बाहुयुग्म इत्यत्र अंशयोर्जठरे पुनरिति निबन्धेषु पाठः । कर्णादौ वामदक्षक्रमेण न्यासः । हस्तन्यासे तथा प्राक्प्रदर्शनात् । बीजैस्त्रिभिर्न्यासे तु हस्ततले च सव्यदक्षद्वये द्वितयमप्युभयोस्तृतीयमिति प्रपञ्चेऽपि दर्शनात्, एकं इतिन्यायात् । किञ्चात्रापि न्यासे सव्यापसव्ये दक्षिणयोर्ललाटे ततो बुधः कर्णयुगे च वक्त्रे इति त्रिपुरासाराभिधानात् । सव्यपदस्य दक्षेऽपि शक्तत्वात् वक्त्रे न्यासे दक्षादिरेवात्र क्रम इति प्राञ्चः ।

तथा षडङ्गमाचरेद् देवि द्विरावृत्या क्रमेण च ।
त्रिद्व्येकदशकत्रिद्विसंख्यया शैलसंभवे ॥
अङ्गुलिना पुनर्देवि बाणान् कामांश्च विन्यसेत् ।
ललाटगलहृन्नाभिमूलाधारेषु वै क्रमात् ॥
मूलेन व्यापकं कृत्वा प्राणायामं समाचरेत् ।

अङ्गुलिनेति न्यस्ततत्तन्मन्त्राङ्गुलिनेत्यर्थः । त्रिद्व्येकेति त्रिरावृत्यादिक्रमेण प्रत्येकं हृदयाद्यङ्गं विन्यसेदित्यर्थः । वस्तुतोऽङ्गुलीनामिति युक्तपाठः । तेन हृदादिषट्स्वङ्गेषु अङ्गुलीनां त्रिद्व्येकादिसंख्यया क्रमेण षडङ्गमन्त्रान्न्यसेदित्यर्थ इति निबन्धारः ।

निबन्धे मूले रतिं हृदि प्रीतिं भ्रुवोर्मध्ये मनोभवाम् ।
बालाबीजैस्त्रिभिर्न्यस्येत् स्थानेष्वेषु विशेषतः ॥
अमृतेशीं च योगेशीं विश्वयोनिं क्रमादिमाः ।
विलोमबीजैर्विन्यस्य मूर्त्तिन्यासं समाचरेत् ॥
स्वस्वबीजादिकं पूर्वं मूर्ध्नीशानमनोभवम् ।
न्यसेदु··· तत्पुरुषं मकरध्वजमात्मवित् ॥
हृदघोरकुमारादिकन्दर्पं तदनन्तरम् ।
गुह्यदेशे प्रविन्यस्येद् वामदेवादिमन्मथम् ॥
सद्योजातं कामदेवं पादयोर्विन्यसेत्ततः ।
ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु तान् ॥
प्रविन्यस्येद् यथापूर्वं भृगुर्व्योमाग्निसंयुतः ।
सद्यादिपञ्चह्रस्वाढ्यो बीजमेषां समीरितम् ॥

विलोमबीजैरिति सौरादिबालाबीजैरित्यर्थः । स्वस्ववीजेति "सह्रों" "सह्रें" "सह्रु" "सह्रिं" "सह्रं" इति वक्ष्यमाणैकैकपूर्वं "ईशानमनोभवाय नमः" "तत्पुरुषमकरध्वजाय नमः" इत्येवमित्यर्थः । भृगुरिति भृगुः सकारः व्योम हकारः अग्नी रेफः सद्य ओकारः तदादिपञ्चकं ओ-ए-उ-इ-अ-काररूपम् ।

तथा तन्त्रान्तरे—षड्दीर्घयुक्तेनाद्येन बीजेनाङ्गक्रिया मता ।
पञ्चबाणांस्ततो न्यस्येन्मन्त्री त्रैलोक्यमोहनान् ॥
द्रामाद्यां द्राविणीं मूर्ध्नि द्रीमाद्यां क्षोभिणीं पदे ।
क्लीं वशीकरिणीं वक्त्रे गुह्ये ब्लूँबीजपूर्विकाम् ॥
आकर्षिणीं हृदि पुनः सर्गान्तभृगुसंयुताम् ।
सम्मोहिनीं क्रमाद् देवि बाणन्यासोऽयमीरितः ॥
भालभ्रूमध्यवदनकण्ठिकाकण्ठहृत्सु च ।
नाभ्याधिष्ठानयोः पञ्च ताराद्याः सुभगादिकाः ॥
न्यस्तव्या विधिना देव्यो मन्त्रिणा सुभगा भगा ।
भगसर्पिण्यथ परा भगमालिन्यनन्तरम् ॥

अनङ्गानङ्गकुसुमा भूयश्चानङ्गमेखला ।
अनङ्गमदना सर्वा मदविभ्रममन्थराः ॥
प्रधानदेवतावर्णभूषणाद्यै रलंकृताः ।
अक्षस्रक्पुस्तकाभीतिवरदाढ्यकराम्बुजाः ।
वाक्कामब्लूँ पुनः स्त्रीँ सस्ताराः पञ्चोदिता अमी ॥
न्यासं कुर्याद् भूषणाख्यं ततः साधकसत्तमः ।
न्यसेच्छिरसि भालभ्रूकर्णद्वियुगले नसि ॥
गण्डयोरोष्ठयोर्दन्तपंक्त्योरास्ये न्यसेत् स्वरान् ।
चिबुकेऽथ गले कण्ठे पार्श्वयोः स्तनयुग्मके ॥
दोर्मूलयोः कूर्परयोः पाण्योस्तत्पृष्ठदेशयोः ।
नाभौ गुह्ये पुनश्चोर्वोर्जानुनोर्जंघयोस्तथा ॥
स्फिचोः पत्तलयोः पश्चाच्चरणाङ्गुष्ठयोस्तथा ।
कादिवान्तान्न्यसेद् वर्णान् स्थानेष्वेषु समाहितः ॥
काञ्च्यां ग्रैवेयके पश्चात् कटके हृदि गुह्यके ।
कर्णकुण्डलयोर्मौलौ रललान्शक्षसान् षहौ ॥
अष्टाविमान् प्रविन्यस्येद् देवि देशिकसत्तमः ।

काञ्च्यादिपदं तत्तत्स्थानोपलक्षकम् । भ्रूकर्णादिषु द्विद्विवर्णन्यास इत्येवं विस्तरः ।

ज्ञानार्णवे एवं न्यस्तशरीरोसौ समाहितमनास्ततः ।
परमानन्दसंदोहसानन्दश्चिन्तयेच्छिवाम् ॥
ततोऽन्तर्यजनं कृत्वा बाह्यपूजां समाचरेत् ।
तत्र प्राङ्मुख आसीनो यन्त्रोद्धारं प्रकल्पयेत् ॥
ईशानादग्निपर्यन्तं ऋजुरेखां समालिखेत् ।
ईशादग्नेस्तदग्राभ्यां रेखे आकृष्य देशिकः ॥
एकीकृत्य च वारुण्यां शक्तिरेखापरा शिवे ।
त्रिकोणाकाररूपोऽयं तस्या उपरि संलिखेत् ॥

त्रिकोणान्तररूपं तु शक्तिद्वन्द्वमिदं शिवे ।
पूर्वशक्त्यग्रभागे तु मानयष्टिवदालिखेत् ॥
रेखां तु परमेशानि वायुराक्षसकोणगाम् ।
सन्धिभेदक्रमेणैव तयोः शक्त्योस्ततः परम् ॥
रेखे आकृष्य कोणाभ्यां तदग्रान् पूर्वगान् कुरु ।
वह्निमण्डलमेतत् स्यात् पूर्वाग्रं सुरवन्दिते ॥
नवयोनिविशोभाढ्यं चक्रराजमिदं भवेत् ।

प्रपञ्चे तु

वह्नेः पुरद्वितयवासवयोनिमध्य-
सम्बद्धवह्निवरुणेशसमाश्रिताश्रि ।
देव्यर्चनाय विहितं मुनिभिः पुराणै-
र्लोके सुदुर्लभमिदं नवयोनिचक्रम् ॥ इत्युक्तम् ।

एवं च **नवयोनेः** पश्चिमाग्रत्वमवगम्यते । वस्तुतः पूर्वाग्रत्वमेव सम्यक् **श्रीचक्रे तथैव समावेशात्** । अत्रापि वह्निमण्डलमेतत् स्यात् पूर्वाग्रमित्यनुपदमभिधानात् । एवं च संमुखं पञ्चशक्त्यग्रं प्रागग्रं चतुरस्रकमित्यत्र देवतापेक्षं संमुखत्वं प्राङ्मुखत्वं चेत्यवधेयम् । साधकापेक्षमेव संमुखत्वं प्राङ्मुखत्वं च । पूर्वाग्रं वीरवन्दिते इत्यत्रैव पूर्वत्वं देवतापेक्षमिति केचित् । वासवादिपदमग्रादिपरमिति श्रीचक्रे विस्तरः ।

एतद् बाह्ये तु संलेख्यं वृत्तं पूर्णेन्दुसंनिभम् ।
तल्लग्नमष्टपत्रं तु ग्रन्थिभिश्चाष्टभिर्युतम् ॥
ग्रन्थयः प्रणवाभ्यां च संपुटत्वेन कारयेत् ।
त्रिशूलाष्टकमालिख्य चतुरस्रं लिखेच्छिवे ॥
चतुर्द्वारविशोभाढयं सर्वानन्दकरं सदा ।
हसौँ-कारं त्रिकोणान्तः संलिख्य परमेश्वरि ॥
कामबीजं मध्यमं यदष्टकोणेषु संलिखेत् ।
स्वरान् षोडश देवेशि युग्म-युग्म-प्रभेदतः ॥

दलाष्टकेषु संलिख्य पश्चिमादिप्रदक्षिणम् ।
ग्रन्थिस्थानेषु वर्णानां कादीनां परमेश्वरि ॥
विलिखेदष्टवर्गाणामाद्यं च महेश्वरि ।
विलिख्य पूजयेद् यन्त्रं हेमरूप्यादिपट्टके ॥
भूमौ चन्दनपीठेषु कुङ्कुमागुरुचन्दनैः ।
सिन्दूररजसा वापि कस्तूरीघुसृणादिभिः ।
सुवर्णरत्नलेखिन्या कल्पितं मानसेऽथवा ॥
विलिख्य यन्त्रं देवेशि पूजाद्रव्याणि पूजयेत् ।

भैरवीमुपक्रम्य वाराहीतन्त्रे

मधुपात्रं तथा चाग्रे क्षीरपात्रं च दक्षिणे ।
कुण्डद्वयं गुग्गुलाढ्यं वामदक्षे निवेशयेत् ॥
त्रिपुरा च तथा ङेन्तं विद्महे पदमुच्चरेत् ।
भैरव्यै च ततश्चोक्त्वा धीमहीति ततो वदेत् ॥
तन्नो देवीपदं चोक्त्वा प्रचोदयादुदीरयेत् ।
गायत्री त्रैपुरी ख्याता वागाद्येन समुद्धरेत् ॥
कुशोदकेन जप्तेन यागवस्तूनि शोधयेत् ।

ज्ञानार्णवे—

कुलागमक्रमेणैव ध्यायेद् ब्रह्मविकासिनीम् ।
मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ॥
भ्रमद्भ्रमरनीलाभधम्मिल्लामलपुष्पिणीम् ।
ब्रह्मरन्ध्रभ्रमद्भृङ्गमुक्तारेखाविराजिताम् ॥
मुक्तारेखालग्नरत्नलतिकां मुकुटोज्ज्वलाम् ।
विशुद्धमुक्तारत्नाढ्यचन्द्ररेखाकिरीटिनीम् ॥
भ्रमद्भ्रमरनीलाभनयनत्रयराजिताम् ।
सूर्यभास्वन्महारत्नकुण्डलालंकृतां पराम् ॥

मुक्ताकारस्फुरन्मुक्ताहारभूषणभूषिताम् ।
ग्रैवेयाङ्गदपत्रालिस्फुरत्कान्तिजितामृताम् ॥
गङ्गातरङ्गकर्पूरपशुद्धस्वरविराजिताम् ॥
श्रीखण्डवल्लीसदृशबाहुवल्लीविराजिताम् ।
कङ्कणादिलसद्भूषामणिबन्धलसत्प्रभाम् ॥
प्रवालपल्लवाकारपादपल्लवभूषिताम् ।
नक्षत्रमालासंकाशमुक्तामञ्जीरशोभिनीम् ॥
वामेन पाणिनैकेन पुस्तकं चापरेण च ।
अभयं च प्रयच्छन्तीं साधकानां वरानने ॥
अक्षमालां च वरदं दक्षपाणिद्वये क्रमात् ।
दधतीं चिन्तयेद् देवीं विश्वसौभाग्यवाक्प्रदाम् ॥
क्षीरकुन्देन्दुधवलां प्रसन्नां संस्मरेच्छिवे ॥

तथा पीठपूजां विधायादौ रविदेवीविराजिताम् ।
रामा ज्येष्ठा च रौद्री च अम्बिकेच्छा ततःपरम् ॥
ज्ञाना क्रिया कुब्जिका च विभी चैव विषघ्निका ।
भूचरी चैव आनन्दा देवि द्वादश शक्तयः ॥
पूर्वादिपरितः पूज्या रविसंख्या वरानने ।
संपूज्य मध्ये देवेशि प्रेतसिंहासनं यजेत् ॥
रत्नस्वर्णाकृतिस्फारदीप्तिमच्चक्रमध्यगान् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरोऽथ सदाशिवः ॥
एतानेव महेशानि प्रेतसिंहासनान् यजेत् ।
चक्रमध्यस्थितं बीजं सदाशिवमहापदम् ॥
प्रेतपद्मासनं ङेन्तं नमोऽन्तो मनुरीरितः ।
सदाशिवस्य मन्त्रोऽयं कलार्णः परमेश्वरि ॥

तथा आवाह्य चक्रमध्ये तु तर्पयेत् कुलसुन्दरीम् ।
उपचारैरलङ्कारैस्तोषयेत् परमेश्वरीम् ॥
संयोगं कल्पयेद्देहे सम्यक् संचिन्तयेच्छिवाम् ।
परिवारार्चनं पश्चादादावङ्गावृतिः शिवे ॥

गुरुपूजानन्तरं तु परमं गुरुमर्चयेत् ।
प्राङ्मध्ययोरन्तराले तथा नैजगुरून् यजेत ॥
योन्याख्या हृदि विन्यस्ता त्रैलोक्यक्षोभिणी भवेत् ।
त्रैलोक्यद्राविणी नाम मुखस्था परमेश्वरि ॥
भ्रूमध्यस्था महेशानि त्रैलोक्याकर्षिणी भवेत् ।
ललाटस्था महेशानि त्रैलोक्यवशकारिणी ॥
ब्रह्मरन्ध्रस्थिता सैव सर्वाह्लादकरी परा ।
पञ्चमुद्रामयीं देवि योनिमुद्रां प्रदर्शयेत् ॥
ततः षडङ्गावरणं परितः पीठमद्रिजे ।
अग्नीशासुरवायव्यमध्ये दिक्षु च पूजयेत् ।
अग्रकोणे रतिं पश्चात् प्रीतिमुत्तरकोणके ।
मनोभवां दक्षकोणे ततो बाणान् समर्चयेत् ॥
अनङ्गकुसुमां देवि तथानङ्गादिमेखलाम् ।
अनङ्गमदनां पश्चादनङ्गमदनातुराम् ॥
सुभगां पञ्चमीं देवि भगां च भगसर्पिणीम् ।
भगमालां महादेवि प्रागादिक्रमतो यजेत् ।
अष्टयोनिषु देवेशि ततो ब्राह्म्यादिकं यजेत् ॥
युग्मयुग्मप्रभेदेन वसुपत्रे वरानने ।
असिताङ्गं तथा ब्राह्मीं रुरुं-माहेश्वरीं यजेत् ॥
चण्डं कौमारिकां चैव क्रोधीशं वैष्णवीं तथा ।
उन्मत्तं चैव वाराहीं माहेन्द्रीं च कपालिनम् ॥
भीषणं चैव चामुण्डां संहारं चाष्टमं यजेत् ।
महालक्ष्मीं महादेवि युग्मानि परिपूजयेत् ॥
पश्चिमादिक्रमेणैव ततः पीठार्चनं चरेत् ।
कामरूपञ्च मलयं ततः कोलगिरिं तथा ॥
अकुलान्तं च चौहारं जालन्धरमतः परम् ।
ओड्डियानं देवकूटं पीठाष्टकमिदं क्रमात् ॥

ग्रन्थिमूलेषु संपूज्य पश्चिमादिक्रमेण तत् ।
त्रिशूलं परितो देवि मातृकावृत्तमण्डले ॥
भैरवा दश संपूज्याः पश्चिमादिक्रमाच्छिवे ।
हेतुकं चैव वेतालं तन्मध्ये त्रिपुरान्तकम् ॥
अग्निजिह्वं च कालान्तं कपालिनमनन्तरम् ।
एकपादं भीमरूपं मलयं हाटकेश्वरम् ॥
चतुरस्रे महेशानि लोकपालांस्ततो यजेत् ।
व्रौं-कारं बीजमुच्चार्य वटुकाय नमो वदेत् ।
यां-कारं बीजमुच्चार्य योगिनीभ्यो नमस्तथा ॥
क्षौं-कार बीजमुच्चार्य क्षेत्रपालाय वै नमः ।
गं-कारं बीजमुच्चार्य तथा गणपतिं यजेत् ॥
ङेन्तन्नमः पश्चिमादिदिक्षु पूज्याः क्रमेण ते ।
चतुरस्रे तु संपूज्या विदिक्षु परमेश्वरि ॥
वायव्यादिक्रमेणैव वक्ष्यमाणा महेश्वरि ।
वसवो द्वादशादित्या रुद्राश्चैव ततः शिवे ॥
सर्वभूता वरारोहे क्रमेण परिपूजयेत् ।
पूजां विधाय देवेशीमुपचारैः प्रपूजयेत् ॥

रविशक्तीति रवयो द्वादश । चक्रमध्यस्थं "ह्सौः"—इतिबीजम् । हेतुकमित्यत्र हैतुकमिति क्वचित्पाठः ।

निबन्धेषु— वाग्भवं लोहितो रायै श्रीकण्ठो लोहितोनलः ।
दीर्घवान् यै परा पश्चादपरायै ह्सौः पुनः ॥
सदाशिवमहाप्रेतं ङेन्तं पद्मासनं नमः ।

वाग्भवमिति । वाग्भवं "ऐँ"। लोहितः पकारः। रायै इति स्वरूपम् । श्रीकण्ठोऽकारः । लोहितः पकारः । अनलो रेफः । दीर्घवानाकारवान् । यै इति स्वरूपम् ! एवं च "ऐँ परायै परापरायै ह्सौः सदाशिव महाप्रेतपद्मासनाय नमः" इति मन्त्रः ।

अनेन मनुना दद्यादासनं श्रीगुरुक्रमम् ।
प्राङ्मध्ययोरन्तराले पूजयेत् कल्पयेत्ततः ॥
पञ्चभिः प्रणवैर्मूर्त्तिन्तस्यामावाह्य पूजयेत् ।

तारवाक्शक्तिकमलाहसषफ्रेंह्सौः पुनरित्यासनमन्त्रादौ विशेषः। गुरुपूजने च क्रमवैपरीत्यमुक्तम्। तत्र न विरुद्धम् वैकल्पिकत्वात्। क्रमे च न तत्र तात्पर्यम् विशेषमात्रकथनपरत्वात्। न च भैरवीपरं बालायां विशेषानभिधानात्। तदुक्तं तन्त्रे "पूजयेदागमोक्तेन विधानेन समाहित" इति। एवं परिवार-पूजनेऽपि रत्यादिपूजनानन्तरमङ्गपूजनमुक्तम्। तदापि तदुभयमप्युक्तम्। "अष्टयोनिष्वष्टशक्तीः पूजयेत् सुभगादिकाः" इति। तत्रापि सुभगादिका इत्युपलक्षणं तत्रानुरोधात्। यद्वा एतन्मते न्यासक्रमोक्तानामेव सुभगादीनां पूजनम्। अस्त्रपूजनं चाधिकमुक्तम् "लोकपालाँस्ततो दिक्षु तदस्त्राणि ततो बहि" रित्यभिधानात्।

ज्ञानार्णवे— धूपं विस्तारयेत् सम्यक् मूलमन्त्रं हृदि स्मरन्।
वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः॥
आघ्रेयः सर्वभूतानां धूपोऽयं प्रतिगृह्यताम्॥
स्वप्रकाशो महातेजाः सर्वत्र तिमिरापहः।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम्॥
तथैव दीपमन्त्रोऽयं विद्यते परमेश्वरि।
आरात्रिकं ततः कुर्यात् सर्वकामसमृद्धिदम्॥
कुङ्कुमेन लिखेत् पद्मं वसुपत्रं मनोहरम्।
चन्द्ररूपं गुरुं कृत्वा तन्मध्ये मस्तके शिवे॥
दीपमेकं विनिक्षिप्य वसुपत्रेऽष्टदीपकान्।
अभिमन्त्र्य महेशानि रत्ने कुर्यात्ततः परम्॥
श्रीवीजं च परावीजं विलिख्य परमेश्वरि।
गसौ च यवलाः पश्चादिन्द्रस्थाः क्रमतः शिवे॥
वामकर्णसमायुक्ता नादविन्दुविभूषिताः।
बीजपञ्चकमेतत्तु पञ्चरत्नानि सुन्दरि॥
पूर्वबीजे विलोमेन रत्नेशीयं नवाक्षरी।

गसौ चेति गकारसकारौ। यकार-वकार-लकाराश्चेत्यर्थः। इन्द्रो लकारः। वामकर्ण ऊकारः। एवं च श्रीँ ह्रीँ ग्लूँ स्लूँ य्लूँ व्लूँ ल्लूँ ह्रीँ श्रीँ इति मन्त्रः।

मूलमन्त्रेण चाभ्यर्च्य ततश्चारात्रिकं चरेत् ।
ततः परं समुद्धृत्य मस्तकान्तं पुनः पुनः ॥
नववारं महेशानि ततो नीराजनं चरेत् ।
समस्तचक्रचक्रेशि पत्रे देवि नवात्मके ॥
आरात्रिकमिदं दिव्यं गृहाण मम सिद्धये ।
नीराजनमनुर्देवि विद्यान्ते प्रकटीकृतः ।
आरात्रिके महेशानि चक्रमुद्रा व्यवस्थिता ॥
आरात्रिकविधिं कृत्वा नैवेद्यं तु निवेदयेत् ।
हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ॥
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।
विद्यान्ते परमेशानि नैवेद्यमनुरीरितः ॥
परिषिच्य ततो देवि नित्यहोमं समाचरेत् ।
मूलमन्त्रेण देवेशि हुनेत् पञ्चाहुतीः क्रमात् ।
प्राणापानौ तथा व्यान उदानश्च समानकः ॥
एतत्स्वरूपं जानीयादाहुतीनां च पञ्चकम् ।
षडाहुतीः षडङ्गेषु नित्यहोमोऽयमीरितः ॥
नित्यहोमविधिं कृत्वा बलिदानविधिं चरेत् ।
ईशानादिषु कोणेषु मण्डलानां चतुष्टयम् ॥
श्रीचक्रमभितो देवि त्रिकोणं व्योममालिखेत् ।
अथवा वामभागे तु मण्डलं चैकमालिखेत् ॥

व्योमं व्यापकमण्डलं वेत्यर्थः। अथवेति समुच्चयार्थं सर्वभूतबलिदानस्य तु तत्र विधानात्। विकल्पात् वाऽशक्तौ तत्रैव सकलबलिदानमिति केचित्।

पूर्वमन्त्रैः समभ्यर्च्य वटुकादिकमद्रिजे ।
एह्येहि देवीपुत्रान्ते वटुकान्ते च नाथ तु ॥
कपिलान्ते च जटाभार भास्वरान्ते त्रिनेत्र च ।
ज्वालामुख च सर्वान्ते विघ्नं नाशय नाशय ॥

सर्वोपचारसहितं बलिं गृह्ण द्विधा पदम् ।
वह्निजायान्वितो मन्त्रो वटुकस्य समीरितः ॥
अनेन विधिना देवि वटुकस्य बलिं हरेत् ।
ऊर्द्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निःकले वा
पाताले वाऽनले वा सलिलपवनयोर्यत्र तत्र स्थितो वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदाः पुष्पधूपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु देवेन्द्रतुल्याः ॥
एतदन्ते महेशानि यां-बीजं योगिनीं ततः ।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ।
कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत् ।
अनेन मनुना देवि योगिनीबलिमाहरेत् ।

यामित्यत्र योमिति क्वचित्पाठः ।

षड्दीर्घस्वरसंभिन्नं क्षकारं विलिखेत् प्रिये ।

क्षकारे विन्दुराचारात् ।

पुनः क्षेत्रपदं पालं धूपदीपादि चालिखेत् ।
सहितं बलिमालिख्य गृह्णयुग्मं ततो वदेत् ।
वह्निजायान्वितः क्षेत्रपालमन्त्रः प्रकीर्त्तितः ।
अनेन मनुना देवि क्षेत्रपालबलिं हरेत् ।
गां-गीं-गूं-त्रयमालिख्य ङेन्तं गणपतिं वदेत् ।
वरान्ते वरदान्ते च सर्वान्तजनमालिखेत् ।
मे वशं चानयेत्युक्त्वा बलिं गृह्णद्विधा पदम् ।
वह्निजायान्वितो मन्त्रो गाणपत्यबलेर्मतः ।
बामाङ्गुष्ठानामिकाभ्यां वटुकस्य बलिर्भवेत् ।
दक्षिणा मूर्ध्नि सहिता योगिनीनान्तु कल्प्यते ।
अङ्गुष्ठमध्यमानामा योन्याकारेण योजयेत् ।
वाममुष्टिं विधायादौ तर्जनीं सरलां कुरु ।
अनया मुद्रया देवि क्षेत्रपालबलिर्भवेत् ।
तथा मुष्टिस्थमध्यस्थामङ्गुलीं दण्डवत् कुरु ।
गजदन्तमहामुद्रा गाणपत्यबलिर्भवेत् ।

अनेन विधिना देवि पूजयेत् परमेश्वरीम् ।
पञ्चसिंहासनगतां परमानन्दरूपिणीम् ॥

अथ पुरश्चरणम् ।

वर्णलक्षं जपेद् देवि तद्दशांशं हुनेच्छिवे ।
तर्पणं तु ततः कुर्यात् सर्वसौभाग्यवान् भवेत् ॥

निबन्धेषु तत्त्वलक्षं जपेदित्यर्थादुक्तं भैरवीजपाद्यतिदेशात् । तत्र तत्त्वानि दश अन्तरङ्गत्वात् शक्तितत्त्वानां दशसंख्यत्वात् । वस्तुतो द्वादशतत्त्वानि तत्त्वार्धलक्षावधीति प्रपञ्चसारस्वरसात् । न च विरोधोऽस्य युगभेदपरत्वात् कलौ संख्या चतुर्गुणेत्यभिधानात् फलविशेषार्थत्वाच्चेत्यलं विस्तरः ।

अथ पूजाविधिसंक्षेपः

आचम्य ऐं त्रिपुरायै विद्महे भैरवीदेव्यै धीमहि तन्नो देवी प्रचोदयादिति कुशोदकेन यागवस्तूनि संशोध्य ह्रीं आधारशक्तिकमलासनायनम इत्यासनं संपूज्य तत्रासने स्वस्तिकादिक्रमेणोपविश्य यथोक्तविधिनाऽर्घ्यं संस्कृत्य रक्षां कृत्वा अङ्गुष्ठानामिकाभ्यां पुष्पं गृहीत्वा करकच्छपिकां बद्ध्वा कुक्षौ दक्षिणभागे वामभागे वा पापपुरुषं विचिन्त्य मूलाधाराज्जीवात्मकं तेजः प्रणवेन हंस इति मन्त्रेण वा परमात्मनि संयोज्य आकाशादिपञ्चकं दशेन्द्रियाणि तदर्थाश्चेति क्रमेण पञ्चविंशति तत्त्वानि तत्र लीनानि चिन्तयेत् । ततः पुष्पं शिरो देशे विन्यस्यात्मानं पूजयेत् । ततो मूलाधारे पुष्पाञ्जलित्रयं दत्वा भूतशुद्धिं कुर्यात् । यथा यमिति वायुबीजोत्पन्नवायुना देहं संशोष्य रमितिवह्निबीजोत्पन्नदक्षपादाङ्गुष्ठजातेन वह्निना दग्धं विचिन्त्य लमिति संप्लाव्य वमित्यमृतबीजोत्पन्नामृतवृष्ट्या संजातमात्मानं देवीरूपं चिन्तयेत् । ततो लीनानि तत्त्वानि जीवात्मानं च सोहमिति मन्त्रेण स्वस्थानमानयेत् । अथवा पूरककुम्भकरेचकादिक्रमेण ःवायुबीजवह्निबीजामृतबीजैर्षोडशचतुःषष्टिद्वात्रिंशन्मात्राक्रमेण प्राणायमत्रयरूपां भूतशुद्धिं यथोपदेशं कुर्यात् ।

ततः आँ सोहमितिमन्त्रेणात्मनः प्राणप्रतिष्ठां कृत्वा अस्य मन्त्रस्य दक्षिणामूर्तिऋषिः पंक्तिश्छन्दो बालात्रिपुरादेवता वाग्भवं बीज सौः शक्तिरभीष्टार्थसिद्धयै विनियोग इति स्मृत्वा शिरोवदनहृत्सु ऋषिच्छन्दोदेवता विन्यस्य नाभेश्चरणं यावदादिबीजं गलान्नाभिपर्यन्तं मध्यबीजं मूर्द्धादिगलपर्यन्तं तृतीयबीजं विन्यसेत्। ततो वामदक्षिकरयोः संपुटितयोश्च बीजत्रयंक्रमेण विन्यस्य बाणान् बिन्यसेत्। यथा द्रां क्षोभणबाणाय नमः एवं द्रीँ द्रावण-क्लीँ आकर्षण-ब्लूँ सम्मोहन-सः उन्मादन-बाणान् न्यसेत् करयोरङ्गुष्ठादिकनिष्ठान्तेषु। ततस्तत्रैव ह्रीँ कामायनमः एवं क्लीँ मन्मथ - ऐँ कन्दर्प - ब्लूँ मकरध्वज - स्त्रीँ मीनकेतून् विन्यस्य ऐँ हृदयायनमः क्लीँ शिरसेस्वाहा सौँः शिखायै वषट् ऐँ कवचायहूँ क्लीँ नेत्रत्रयाय वौषट् सौः अस्त्राय फडित्येवं द्विरावृत्तमन्त्रेणाङ्गुष्ठाद्यङ्गुलीषु करतलयोश्च विन्यस्यान्तर्मातृकान्यासं कुर्यात्। यथा कण्ठे षोडशदले षोडश स्वरान् हृदि द्वादशदले ककारादिठकारान्तान् द्वादश वर्णान् नाभौ दशदले डकारादिफकारान्तान् दशवर्णान् लिङ्गे षड्दले बकारादिलकारान्तान् षड्वर्णान् मूलाधारे चतुर्दले वादिसान्तान् चतुरो वर्णान् विन्दौ द्विदले हक्षवर्णौ न्यसेत्।

ततो बहिर्मातृकान्यासः। तद्यथाः– ललाटे अ मुखवृत्ते आ नेत्रयोः इई श्रोत्रयोः उऊ नसोः ऋॠ गण्डयोः ऌॡ ओष्ठाधरयोः ओऔ शिरसि अं मुखे अः दक्षबाहुसन्धिचतुष्के तदग्रे च कखगघङ एवं वामबाहौ चछजझञ दक्षपादसन्धिचतुष्के तदग्रे टठडढण एवं वामपादे तथदधन पार्श्वयोः पफ पृष्ठे ब नाभौ भ उदरे म हृदि य दक्षांसे र ककुदि ल वामांसे व हृदादिभुजयोः शष एवं पादयोः सह जठरे ल मुखे क्ष इति सृष्टिमातृकान्यासः। यादिवर्णेषु सर्वत्र पाणिपादयुगे बा हृदादित्वमिति केचित्।

ततो विद्यान्यासः। यथा दक्षहस्तमणिबन्धतलहस्ताग्रेषु क्रमेण बीजत्रयं न्यसेत्। एवं वामहस्तेऽपि। ततः कक्षाकूर्परपाणिषु दक्षिणेषु बीजानि विन्यस्य वामहस्तेऽपि तथैव न्यसेत्। एवमेव दक्षपादे विन्यस्य वामपादेऽपि न्यसेत्। ततो नादान्ते हृदये लिङ्गे च क्रमेण बीजत्रयं न्यसेत्। ततः संहारक्रमेण तेष्वेव स्थानेषु पुनरपि मन्त्रन्यासः। यथा लिङ्गे हृदये नादान्ते च क्रमेण बीजत्रयं विन्यस्य एवमेव वामपाद-दक्षपाद-वामवाहु-दक्षवाहु-वामहस्त-

दक्षहस्तेषु क्रमेण मन्त्रं न्यसेत्। ततो वक्ष्यमन्त्रेण नवयोन्यात्मकन्यास-मतुर्नवयोन्यात्मकन्यासं च कुर्यात्। यथा श्रोत्रयोश्चिबुके शंखयोरास्ये दृशोर्नसि अंसयोर्हृदि कूर्परयोः कुक्षौ जानुनोरन्धौ पादयोर्गुह्ये पार्श्वयोर्हृदि स्तनयोः कण्ठे बालावीजान्येकैकशो नवावृत्या न्यसेत्। एवमेव शंखयोर्विन्दौ दृशोर्मूर्ध्नि भ्रुवोरास्ये अंशयोश्चिबुके कपोलयोः कण्ठे स्तनयोर्हृदि जद्र (?) करयोर्नाभौ पार्श्वयोः कुक्षौ पादमूलयोर्गुदे अन्तर्नवयोनिन्यासं कुर्यादिति बहुषु पद्धतिषु निबन्धारः। निबन्धे इदानीं रत्यादिन्यासः। ततोऽमृतेश्यादिन्यासः। ततश्चेशादिमनोभवादिन्यासः। ततः सुभगादिन्यासः। ततो भूषणन्यासः। तदर्थिना तत्प्रकारः प्रमाणपरिच्छेदेऽनुसंधेयः।

ततः प्रागुक्ताङ्गमन्त्रान् हृदयशिरःशिखाकवचनेत्रपाणितलेषु त्रिद्व्येकदशकत्रिद्विसंख्याक्रमेणाङ्गुलीभिर्विन्यसेत्। ततः पूर्वोक्तबाणमन्त्रान् काममन्त्रांश्च क्रमेण तत्तदङ्गुलीभिर्ललाटगलहृन्नाभिमूलाधारेषु पुनर्न्यसेत्। ततो मूलेन व्यापकं कृत्वा प्राणायामं कुर्यात्।

तदशक्तौ मातृकान्यासानन्तरं कराङ्गन्यासः कर्त्तव्यः।

ततः पूर्वोक्तपूजायन्त्रं कुङ्कुमादिना सुवर्णादिपीठे विलिख्य वामे गुरून् दक्षिणे गणेशं मध्ये आधारशक्तिप्रकृतिकूर्मानन्तपृथिवीक्षीरसिन्धुरत्नद्वीप-मणिमण्डपकल्पवृक्षान् संकल्पयेदिति निबन्धारः यामलस्तवस्वरसात्। ततोऽग्न्यादिचतुष्कोणे धर्मज्ञानवैराग्यैश्वर्याणि प्रागादिदिक्षु अधर्माज्ञानावैराग्या-नैश्वर्याणि संपूज्य मध्ये अनन्तपद्मसूर्यचन्द्रवह्निमण्डलानि सत्त्वरजस्तमांसि आत्मान्तरात्मापरमात्मानः स्वनामाद्यक्षरबीजेन संपूज्य ह्रीँ ज्ञानात्मानञ्च प्रागादिप्रादक्षिण्येन रामा ज्येष्ठा रौद्री अम्बिका इच्छा ज्ञानाक्रिया कुब्जिका विभीषिका विषध्निका भूचरी आनन्दा द्वादशपीठशक्तयः संपूज्याः। ततः हसौः सदाशिवमहाप्रेतासनाय नमः इति पूजयेत्।

ततः पञ्चप्रणवेन मूर्त्तिं परिकल्प्य मूलादिब्रह्मरन्ध्रान्तमित्यात्म-स्वरूपां देवीं ध्यात्वा चक्रमध्ये समावाह्य मूलेन त्रिस्तर्पयेत्। ततो यथोचितो-पचारैः संपूज्य परिवारान् पूजयेत्। यथा प्राङ्मध्ययोरन्तराले गुरुपरमगुरु-निजगुरून् संपूज्य अग्नीशाननिर्ऋतिवायुकोणेषु मध्ये दिक्षु च ऐँ हृदयाय नमः इत्यादिक्रमेणाङ्गानि पूजयेत्। ततोऽग्रकोणे रत्यै नमः उत्तरकोणे प्रीत्यै नमः दक्षकोणे मनोभवायैनमः इति संपूज्य बाणान् वक्ष्यमाणक्रमेण यजेत्। ततोऽ-

ष्टयोनिषु पश्चिमादि अनङ्गकुसुमाद्यष्टशक्तीरष्टपत्रेषु असिताङ्गसहितब्रह्माण्यै नमः इत्यादिक्रमेण माहेश्वर्यादि रुरुचण्डक्रोधीशउन्मत्तकपालिभीषणसंहार-भैरवसहितसविन्दुह्रस्वस्वरयुक्ताः पश्चिमादि पूजयेत्। ततः पद्मग्रन्थिमूलेषु कामरूपमलयकोलगिरिकुलान्तचौहारजालन्धरओड्डियानदेवकूटात्मकं पश्चि-मादि पूजयेत्। ततः पद्मशूलोत्तरमण्डले परितो भैरवान् दश हेतुकवेताल त्रिपुरान्तक अग्निजिह्वकालान्तककपालि-एकपाद - भीमरूपमलयहाटकेश्वरानग्रे पूजयेत्। ततश्चतुरस्रे लोकपालान् संपूज्य पश्चिमादिदिक्षु व्रौँ वटुकायनमः इति वटुकमुत्तरदिशि याँयोगिनीभ्यो नमः इति योगिनीः :पूर्वदिशि क्षाँ क्षेत्र-पालायनमः इतिक्षेत्रपालं दक्षिणदिशि गंगणपतये नमः इति संपूज्य वायव्यकोणे ॐ वसुभ्योनमः ईशकोणे ॐ आदित्येभ्यो नमः अग्निकोणे ॐ रुद्रेभ्यो नमः निर्ऋतिकोणे ॐ सर्वभूतेभ्यो नमः इति मूलमन्त्रेण संपूज्य।

वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः।
आघ्रेयः सर्वभूतानां धूपोऽयं प्रतिगृह्यताम्॥ इति धूपं
सुप्रकाशो महातेजाः सर्वत्रतिमिरापहः।
सबाह्याभ्यन्तरं ज्योतिर्दीपोयं प्रतिगृह्यताम्॥ इति दीपं

दत्वा मूलेनाभ्यर्च्य मूलमन्त्रमुच्चार्य "समस्तचक्रचक्रेशि पत्रे देवि नवात्मके।
आरात्रिकमिदं दिव्यं गृहाण मम सिद्धये॥ इति

चक्रमुद्रया दद्यात्। ततो मूलमन्त्रान्ते

हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम्।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि॥ इति नैवेद्यं दद्यात्।

ततः ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय स्वाहा ॐ उदानाय स्वाहा ॐ समानाय स्वाहा इति मन्त्रेण आहुतिपञ्चकं दत्वा ॐ ऐँ हृदयायनमः ॐ क्लीँ शिरसे स्वाहा इत्यादि मन्त्रेण षडङ्गाहुतीर्जुहुयात्। ततो यथाशक्ति मन्त्रं जप्त्वा तज्जपं गुह्येत्यादिमन्त्रेण देवीहस्ते समर्प्य क्षमस्वेति विसृज्य बलिं दद्यात्।

अथबलिसंक्षेपः।

चक्रस्येशानादिकोणे मण्डलचतुष्क विलिख्य ईशानकोणे ॐ वटुकायनमः इति प्रथमं बटुकं संपूज्य ततः ऐँ ह्रीँ श्रीँ एह्येहीतिमन्त्रेण बटुकाय

बलिं दद्यात् । बटुकनाथायनम इति तदन्ते इति केचित् । आग्नेयकोणे यां योगिनीभ्यो नमः इति योगिनीः संपूज्य ऐँ ह्रीँ श्रीँ ऊर्ध्वं ब्रह्माण्डतोवेत्यादि-श्लोकं पठित्वा ह्रीँ याँयोगिनीभ्य स्वाहाः सर्वयोगिनी हूँ फट्स्वाहा इति योगिनीबलिं दद्यात् । श्लोकेनैव बलिदानमिति कश्चित् । निर्ऋतिकोणे ऐँ ह्रीँ श्रीँ क्षाँक्षेत्रपालायनमः इति क्षेत्रपालं संपूज्य क्षाँक्षीँ क्षूँ क्षैँ क्षौँ क्षः क्षेत्रपाल धूप-सहितबलिं गृह्ण गृह्ण स्वाहा इति क्षेत्रपालबलिं दद्यात् । वायव्ये ऐँ ह्रीँ श्रीँ गंगणपतयेनमः इति गणपतिं संपूज्य ऐँ ह्रीँ श्रीँ गाँगीँ गूँ गणपतये वरवरद-सर्वजनं मे वशमानय बलिं गृह्ण गृह्ण स्वाहा इति गणपतिबलिं दद्यात् । एवं बलिचतुष्कं दत्वा चक्रवामभागे चतुरस्रं त्रिकोणवृत्तगर्भमण्डलं कृत्वा ॐ ह्रीँ सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हूँ फट् स्वाहा इमां बलिपूजां गृह्ण गृह्ण गृह्णापय गृह्णापय स्वाहा इति गन्धकुङ्कुमतण्डुलादिबलिं दद्यादिति संक्षेपः ।

इति मन्त्रकौमुद्यां बालामन्त्रपटलपरिच्छेदः संपूर्णः ॥ १ ॥

× × ×

अथ भैरवीमन्त्राः ।

वाराहीतन्त्रे ।

आद्या कृतयुगे शस्ता या बालेति निगद्यते ।
त्रेतायां ललिता शस्ता पञ्चकूटा च द्वापरे ॥
षट्कूटा च कलौ शस्ता सर्वतन्त्रेषु गोपिता ।
सर्वकालेषु सर्वयुगे सुन्दरी परमेश्वरी ॥

षट्कूटा मायाबीजयुक्ता तत्रैव वाराहीतन्त्रावतारात् ।

ज्ञानार्णवे　पञ्चसिंहासनगता कथं सा त्रिपुरापरा ।
कथयस्व महेशान कथं सिंहासनं भवेत् ॥
शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम् ।
कामबीजं तथा देवि शिवचन्द्रान्वितं ततः ॥
पृथ्वीबीजं तु वह्न्याढ्यं तार्त्तीयं शृणु वल्लभे ।
कुमार्याः परमेशानि हित्वा सर्गं तु वैन्दवम् ।
शक्तिवीजे महेशानि शिववह्नी नियोजयेत् ॥
त्रिपुरा भैरवी देवी महासम्पत्प्रदा शिवे ।

वाग्भवं ऐँकारः । कामबीजं क्लीँ । तत्रविशेषमाह पृथ्वीबीजमिति । हित्वेति

तेन तादृशं कृत्वा सर्गं दूरीकृत्य विन्दुं योजयेदित्यर्थः। अतएव तन्त्रे

संपद्प्रदा भैरवीयं तत्र तार्तीयबीजके।
विन्दुं हित्वा ततः सर्गं निःक्षिपेत् सुरसुन्दरि ॥

इत्यत्र विन्दोः साहजिकस्य परित्याज्यत्वमुक्तम्। एवं च "हसरैँ हसकलरीँ हसरौँ" इति मन्त्र। तृतीयबीजे हकारो नास्त्येवेति केचित्।

ध्यानमस्याः प्रवक्ष्यामि महासंपत्प्रदं शिवे।
आताम्रार्कसहस्राभां शरच्चन्द्रजटास्फुरत् ॥
किरीटरत्नविलसन्नेत्रबिम्बितमौक्तिकाम् ।
स्रवद्रुधिरपङ्काढ्यमुण्डमालाविभूषिताम् ॥
नयनत्रयशोभाढ्यां पूर्णेन्दुवदनां नताम्।
मुक्ताहारलताराजत्पीनोन्नतघनस्तनीम् ॥
रक्ताम्बरपरीधानां यौवनोन्मत्तरूपिणीम् ।
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम् ॥
वरदानरतां नित्यं महासंपत्प्रदां स्मरेत्।
न्यासपूजादिकं सर्वं कुमार्या इव सुव्रते ॥

तथा वाग्भवं प्रथमं बीजं जीवप्राणसमन्वितम्।
सकला भुवनेशानी द्वितीयं बीजमुद्धृतम् ॥
जीवं प्राणं वह्निसंस्थं शक्रस्वरविभूषितम्।
विसर्गाढ्यं महेशानि विद्या त्रैलोक्यमोहिनी ॥
चैतन्यभैरवी नाम चेतनानिश्चले शिवे।

जीवः सकारः। प्राणो हकारः। सधातुप्राणशक्तीत्यत्र तस्यैव प्राणयोगाभिधानात्। सकला सकलवर्णत्रययुक्ता भुवनेशानी ह्रीँ। तेन "हसऐँ सकलह्रीँ हसरश्रौः" इति मन्त्रः।

उद्यत्भास्कररूपाभां नानालङ्कारभूषिताम्।
मुकुटोज्ज्वलसच्चन्द्ररेखां रक्ताम्बरान्विताम् ॥
पाशाङ्कुशधरां नित्यं वामहस्ते कपालिनीम्।
वरदाभयशोभाढ्यां पीनोन्नतघनस्तनीम् ॥
एवं ध्यात्वा जपेद्देवीं सिंहासनगतां शिवे।
द्विरावृत्या षडङ्गानि न्यसेत्सर्वाङ्गलक्षणम् ॥

यन्त्रमस्याः प्रवक्ष्यामि देव्यास्त्रैलोक्यमोहनम् ।
त्रिकोणं चैव षट्कोणं वसुपत्रं वरानने ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥
अत्रावाह्य यजेद्देवीं पूर्ववत् परमेश्वरीम् ।
मुद्रां निदर्शयेत् पश्चात् परिवारार्चनं चरेत् ॥
प्रथमावरणं देवि षडङ्गानां च पूर्ववत् ।
रत्यादिकां ततो देवीं पूर्ववत् परिपूजयेत् ॥
अग्रे वसन्तं वामे च कामदेवं वरानने ।
चन्द्रं दक्षिणदिक्कोणे बाणान् पूर्ववदद्रिजे ॥
डाकिनीं शाकिनीं चैव काकिनीं लाकिनीं तथा ।
राकिनीं हाकिनीं चैव पश्चिमादिक्रमाद् यजेत् ॥
अनङ्गकुसुमा मुख्या वसुपत्रेषु पूर्ववत् ।
परभृत्सारसौ चैव शुकमेघाह्वयौ तथा ॥
अपाङ्ग भ्रूविलासौ च हावभावौ प्रपूजयेत् ।
इन्द्रादींल्लोकपालांश्च क्रमेण परितो यजेत् ॥

तथा कामेश्वरी च रुद्राणी पूर्वसिंहासने स्थिता ।
एतस्या एव विद्याया बीजद्वयमुदाहृतम् ॥
तदन्ते परमेशानि नित्यक्लिन्ने मदद्रवे ।
तस्या एव च तार्तीयं रुद्राणी परमेश्वरी ॥

बीजद्वयानन्तरं नित्यक्लिन्ने मदद्रवे चरमबीजं चेति मन्त्रः ।

पूजाध्यानादिकं देवि चैतन्यामेव पूर्ववत् ।
त्रिकोणे तु विशेषोऽस्ति कथयामि तवानघे ॥
अग्रकोणक्रमेणैव नित्यक्लिन्नां मदद्रवाम् ।
षडङ्गावरणं पश्चात् पूजयेत् सर्वसिद्धये ॥

इतिपूर्वसिंहासने चैतन्यभैरवी पटलः ॥

तथा शिवचन्द्रो मादनस्थं रान्तं वह्निसमन्वितम् ।
शक्तिभिन्नं विन्दुनादकलाढ्यं शैलसम्भवे ॥

अत्र वाग्भवं प्रिये इति पाठान्तरम् । तत्र वाग्भवमिति बीजस्यैव नामेत्यवगन्तव्यम् ।

संपत्प्रदाया भैरव्याः कामबीजं तदेव हि ।
सदाशिवं च बीजं च महासिंहासनस्य तु ॥
एषा सिंहासने देवी दक्षिणे परमेश्वरी ।

मादनं ककारः । रान्तं लकारः बहुव्रीहिसमासात् । शक्तिरेकादशस्वरः । सदाशिवः ह्सौः । तेन "हसकलरें हसकलरीं ह्सौः" इति मन्त्रः ।

तथा उद्यत्सूर्यसहस्राभां चन्द्रचूडां त्रिलोचनाम् ।
नानालङ्कारसुभगां सर्ववैरिनिकृन्तिनीम् ॥
स्रवद्रुधिरमुण्डालीकलितां रक्तवाससीम् ।
एवं ध्यात्वा महेशानि पूजामण्डलमारभेत् ॥
त्रिकोणं देवि षट्कोणं वृत्ताष्टदलनीरजम् ।
वृत्तं भूमण्डलावीतमेषा त्रिपुरयन्त्रिका ॥
वामां ज्येष्ठां च रौद्रीं च कालीं च वरलोचने ।
कलाढ्यां च बलाढ्यां च यजेद् विकरिणीं तथा ॥
बलप्रमथिनीं सर्वभूतानां पदमावदेत् ।
दमनीं च तथा यष्ट्वा (?) मनोन्मनपदान्विताम् ॥
अघोरे वाग्भवे चोक्त्वा घोरे च भुवनेश्वरीम् ।
घोरे घोरतरे चैव रक्ष मां रक्ष चोच्चरेत् ।
सर्वतः सर्वसर्वेशि देव्या बीजयुतां लिखेत् ।
त्रिंशद्भिश्च त्रिभिर्वर्णैर्विद्येयं कथिता प्रिये ॥
अनेन मनुना देवि ततः सिंहासनं यजेद् ।

सवशीत्यत्र सर्वे च देव्या बीजयुगं लिखेदिति क्वचित्पाठः ।

आदावङ्गावृतिर्देवि द्विरावृत्याङ्गपूजनम् ।
रत्यादित्रयमभ्यर्च्य तथानङ्गादिकां यजेत् ।
ब्राह्म्यादियुग्मं संपूज्य वसुपत्रेषु मान्त्रिकः ।
भूबिम्बे लोकपालाँश्च सायुधान् परमेश्वरि ।
द्वितीयसिंहासनगां पूजयेत्परमेश्वरीम् ।

देवीबीजं ह्रीँ ।

इति दक्षिणसिंहासने रिपुनिकृन्तिनी-भैरवी पटलः ॥

तथा डाकिनी-राकिनीबीजे लाकिनी-साकिनी युगे ।
बीजान्याहृत्य देवेशि योजयेच्चन्द्रसूर्ययोः ॥
आद्यमैकारसंयुक्तमन्त्यमीकारमण्डितम् ।
शक्रस्वरान्वितं देवि तार्त्तीयं बीजमालिखेत् ॥
बिन्दुनादकलाक्रान्तं तृतीयं शैलसंभवे ।
एषा विद्या महेशानि पश्चिमासनगा भवेत् ॥

बीजान्याद्याक्षराणि लाकिनीति लाकिनीकाकिनीयुगं साकिनीहाकिनीयुगं चेत्यर्थः । साकिनीहाकिनीयुग्मं क्रमेणैव समुद्धरेदित्यत्र क्वचित्पाठः । चन्द्रोऽर्धचन्द्रः । सूर्यो मकारः । मो रविः स्मृत इति परिभाषास्वरसात् । शक्रस्वर औकारः। विन्द्विति विन्दुरनुस्वारः । नादकला अर्धचन्द्रः । उक्तं च तन्त्रे

डरौ दमा मादनं जीवं शिवमन्त्यं त्रिरालिखेत् ।
अर्केण चेन्दुकलया क्रमात्तं मण्डितं कुरु ॥
विन्दुनादान्वितं चान्त्यमन्त्ययुग्मं विसर्गवत् ।

डरौ टवर्गतृतीयरेफौ । मादनं ककारः । जीवः सकारः । शिवो हकारः । अर्को मकारः । विन्द्विति मध्यमचरमयोर्द्वयोरपि विन्दुमन्त्ये विसर्गमपि दद्यादित्यर्थः । अन्त्ययुग्ममित्यत्र आद्ययुग्ममिति युक्तः पाठः । तेन "डरलकसहैँ डरलकसहीँ डरलकसहौँः" इति मन्त्रः ।

इन्द्रचापप्रभां देवि जवाकुङ्कुमसन्निभाम् ।
मुण्डमालावलीरम्यां बालसूर्यसमत्विषम् ॥
सुवर्णकलशाकारपीनोन्नतपयोधराम् ।
पाशाङ्कुशौ पुस्तकं च तथा च जपमालिकाम् ।
एवं ध्यात्वा यजेद् देवीं मानसैरुपचारकैः ॥
द्विरावृत्या षडङ्गानि विधाय परमेश्वरि ।
यन्त्रमस्या वरारोहे त्रिकोणं तत्पुटं लिखेत् ॥
बहिरष्टदलं पद्मं रविपत्रं ततो लिखेत् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ।
षडङ्गावरणं देवि पूजयेत्पूर्ववत् क्रमात् ॥

चतुरस्रे लोकपालान् सायुधान् परमेश्वरि ।
अनेनैव विधानेन पूजयेत्परमेश्वरीम् ।
सर्वसौख्यप्रदां नित्यां सर्वसाम्राज्यदायिनीम् ॥
एतस्या एव विद्यायाः षड्वर्णान् क्रमतः स्थिरान् ।
विपरीतान् वद प्रौढ़े विद्येयं भोगमोक्षदा ॥
नित्या श्रीभैरवीदेवी रिपुभारापहारिणी ।
न्यासपूजादिकं सर्वं पूर्ववत् परिकल्पयेत् ।

षड्वर्णान् डकारादिहकारान्तान् ।

इति पश्चिमसिंहासने नित्यभैरवीपटलः ॥

तथा

हसाद्यं वाग्भवं वीजं हसकान्ते सुरेश्वरि ।
भूबीजं भुवनेशानी द्वितीयं बीजमीरितम् ॥
शिवचन्द्रौ महेशानी भुवनेशी च भैरवी ।

तन्त्रे— पूर्वोक्तभैरवीमन्त्रे कामकूटं परां शिवम् ।
दत्वोद्धरेदियं देवि भैरवी चापरा भवेत् ॥

इति मध्यमबीजमात्रे मायाबीजमुक्तम् । परामिति शिवं दत्वा परामुद्धरेत् रेफस्य सत्त्वादेवेत्यर्थः । एवं च भुवनेशीति भैरवी- विशेषणमित्यवसेयम् । उक्तं च वाराहीतन्त्रे

हंसास्त्रयोपीह मकारयुक्ता वस्वर्धपंक्तिस्वरसंविभिन्नाः ।
मध्ये विरञ्चीन्द्रहराग्नियुक्ता आद्यौ सबिन्दू परतो विसर्गौति ॥

हंसो हकारः । वसुस्वर ऐकारः । क्लीवानामगणात् तदर्धमीकारः । पंक्तिस्वर औकारः । हरो हकारः । समुच्चयेऽपि

कान्तान्तवान्ताकुललान्तवामनेत्रान्वितं दण्डिकुलं सनादम् ।
षट्कूटमेतत् त्रिपुरार्णवोक्तमिति

मध्यबीजस्यैव षट्कूटत्वाभिधानात्। कान्तान्तः ककारः। वान्तो लकारः। अकुलं हकारः। लान्तो रेफः। कुलं सकारः। सनादमिति नादो हकारः। घोषो हश्चेति फेत्कारिणीस्वरसात्। नादेन हकारेण युक्तं कुलं कान्तादियुतमित्यर्थः। नादः स्वरविशेषः इकारमादाय षट्कूटत्वमित्यनाञ्जसम् (?)।

मध्यबीजेन देवेशि षड्दीर्घस्वरभेदिना।
षडङ्गानि प्रविन्यस्य ध्यायेद्देवीं चतुर्भुजाम्॥
जवाकुसुमसंकाशां दाड़िमीकुसुमोपमाम्।
चन्द्ररेखाजटाजूटां त्रिनेत्रां रक्तवाससीम्॥
नानालङ्कारसुभगां पीनोन्नतघनस्तनीम्।
पाशाङ्कुशवराभीतिं धारयन्तीं शिवां शिवे॥
एवं ध्यात्वार्चयेद् देवि यन्त्रोद्धारं च पूर्ववत्।
चैतन्यभैरवी - देवी - मन्त्रवत् परमेश्वरि॥
सिंहासनं समभ्यर्च्य परिवारार्चनं चरेत्।
षडङ्गावरणं देवि पूर्ववत् परितोऽर्चयेत्॥
रत्याद्याःपूजयेद् देवि त्रिकोणे तदनन्तरम्।
ब्रह्मा विष्णुश्च रुद्रश्च पूज्यास्तत्रैव सुन्दरि॥
डाकिन्याद्यास्तु संपूज्या वसुपत्रे ततः परम्।
अनङ्गकुसुमाद्यास्तु ब्राह्म्यादियुगलं ततः
भूबिम्बे लोकपालाँश्च वटुकाद्याँश्च पूजयेत्।
योगिनीनां चतुःषष्टिं पूजयेत् सुरवन्दिते॥
सदाशिवसखा पश्चात् कुवेरः परमेश्वरि।
तेनेयं प्रापिता विद्या धनराजः स चाभवत्॥
लोकपालेषु सर्वेषु धनरत्नादिपूर्णता।
तारं च भुवनेशानी श्रीबीजं कामराजकम्।
हृदन्ते भगवत्यर्णान्माहेश्वरिपदं वदेत्।
अन्नपूर्णेग्निजाया च विज्ञेया विंशदक्षरी॥
अनया सदृशी विद्या सिद्धिदा नास्ति भूतले।
तथा भुवनेश्वरिभैरव्याः भेदान्तरमथोच्यते।
सहाद्या सैव देवेशि ता सा सकलेश्वरी।

ध्यानपूजादिकं सर्वमेतस्या एव पार्वति ।
उत्तरस्यां वरारोहे सिंहासनमिदं दिशि ।
संपद्प्रदा भैरवीव सिद्धिकैलासभैरवी ।
हसराद्या भैरवी सा त्रिषु बीजेषु पार्वति ॥
एतस्या एव विद्याया आद्यन्ते रेफवर्जिते ।
तदेयं परमेशानि नाम्ना सकलसिद्धिदा ॥
सम्पत्प्रदाभैरवीव ध्यानपूजादिकं शिवे ।

उक्तं च बालामुपक्रम्य सारसमुच्चये

शप्ता पूर्वं येन विद्येयमाद्या देव्या तेन प्राणहीनाभवत्सा ।
विद्यामूलोत्पत्तिरेखा मयोक्ता ज्ञातव्येयं सर्वथा सिद्धिकामैः ॥
शिवशक्तिबीजमतएव शम्भुना निहितं तयोरुपरि पूर्वबीजयोः ।
अकुलं कुलोपरि च मध्यमाधवे दहनं ततः प्रभृति सोर्जिताभवत् ॥

अकुलं हकारः । एवं चरमबीजे विन्दुरपि नास्ति । संपत्प्रदायां तथैवाभिधानात् । वाराहीतन्त्रेऽपि. परतो विसर्गीत्युक्तम् । ज्ञानार्णवेऽपि बालामन्त्रे बिन्दोरनभिधानात् । सारसमुच्चये च " दन्तान्तेनयुतं सदण्डि सकलं सम्मोहनाख्यं कुल " मिति विन्दुविसर्गयुक्तमेव चरमबीजमुक्त्वा शिवशक्तिबीजेत्यादिवाक्यमुक्तम् । शारदातिलकेऽपि " मनुः सर्गेन्दुखण्डवा " नित्युक्तमतो विन्दोरपि सम्बन्ध इति तत्त्वम् । तत्रापि कलार्धचन्द्र इति कश्चित् ।

तथा　　कुलादिरपरा सैव देवी शीघ्रफला भवेत् ।

कुलं सकारः । एतदेव सारसमुच्चये

भैरवीयमुदिताऽकुलपूर्वा देशिकैर्यदि भवेत् कुलपूर्वा ।
सैव शीघ्रफलदा भुवि विद्येत्यादिनोक्तम् ।

तथा　　आदिबीजं भवेन्मध्ये मध्यं चादौ नियोजतेत् ।
एवं यो भजते मन्त्रं त्रैलोक्यैश्वर्यभाग् भवेत् ॥
आद्यमन्त्येन्तिमं मध्ये मध्यं चादौ नियोजयेत् ।
एवं कृत्वा जपेन्मन्त्रं दिव्यसिद्धिमवाप्नुयात् ॥

अत्र शापो यद्यपि तन्त्रान्तरे वाक्वापि न श्रूयते तथापि स्वविद्यासंगोपनाथ नागभट्टेनेदमुक्तमिति केचित् ।

अथ पुरश्चरणम् ।

तिलके— दीक्षां प्राप्य जपेन्मन्त्रं तत्त्वलक्षं जितेन्द्रियः ।
पुष्पैर्भानुसहस्राणि जुहुयाद् ब्रह्मवृक्षजैः ॥
त्रिमध्वन्तैः प्रसूनैर्वा करवीरसमुद्भवैः ।

तत्त्वनि दश अन्तरङ्गत्वात् वस्तुतो द्वादशतत्त्वानि तत्त्वार्थलक्षावधीति प्रपञ्चसारस्वरसात् । समुच्चये तु – "जपेल्लक्षं मन्त्रं सरसकुसुमैर्ब्रह्मतरुजैस्त्रिमध्वक्तैर्होमं तदनु निशि चारेण जुहुयात्" इत्युक्तम् । यच्च तत्रैवोक्तं "मार्गेऽस्मिन्नवलक्षमक्षयपदप्राप्त्यै ततो लक्षये" दिति तदधिकफलार्थमक्षयपदस्वरसात् । तन्त्रेषु च बालामन्त्रोक्तमेव पुरश्चरणमधिकारादित्यलं विस्तरः ।

अथ स्तुतिः

ऐन्द्रस्येव शराशनस्य दधती मध्ये-ललाटं प्रभां
शौक्लीं कान्तिमनुष्णगोरिव शिवस्यातन्वती सर्वतः ।
एषासौ त्रिपुरा हृदि द्युतिरिवोष्णांशोः सदाहः स्थिता
छिन्द्यान्नः सहसा पदैस्त्रिभिरघं ज्योतिर्मयी वाङ्मयी ॥ १ ॥

या मात्रात्रपुषी लतातनुलसत्तन्तुस्थितिस्पर्धिनी
वाग्बीजे प्रथमे स्थिता तव सदा ताम्मन्महे ते वयम् ।
शक्तिः कुण्डलिनीति विश्वजननव्यापारवन्धोद्यमां
ज्ञात्वैवं न पुनर्विशन्ति जननीगर्भेऽर्भकत्वं नराः ॥ २ ॥

दृष्ट्वा संभ्रमकारि वस्तु सहसा ऐ ऐ इति व्याहृतं
येनाकूतवशादपीह वरदे विन्दुं विनाप्यक्षरम् ।
तस्यापि ध्रुवमेव देवि सहसा जाते तवानुग्रहे
वाचः सूक्तिसुधारसद्रवमुचो निर्यान्ति वक्त्राम्बुजात् ॥ ३ ॥

यं नित्ये तव कामबीजमपरं मन्त्राक्षरं निष्कलं
तत्सारस्वतमित्यवैति विरलः कश्चिद् विपश्चिन्नरः ।
आख्यानं प्रतिपर्वसत्यतपसो यत् कीर्तयन्तो द्विजाः
प्रारम्भे प्रणवास्पदप्रणयिनीमित्युच्चरन्ति स्फुटम् ॥ ४ ॥

यत् सद्यो वचसां प्रवृत्तिकरणे दृष्टप्रभावं बुधै –
स्तार्त्तीयं तदहं नमामि जननि त्वद्बीजमिन्दुप्रभम् ।
अस्त्यौर्वोऽपि सरस्वतीमनुगतो जाड्याम्बुविच्छित्तये
गौःशब्दो गवि वर्त्तते सुनियतं योगं विना सिद्धिदः ॥ ५ ।

एकैकं तव देवि बीजमनघं सव्यञ्जनाव्यञ्जनं
कूटस्थं यदि वा पृथक् क्रमगतं यद्वा स्थितं व्युत्क्रमात् ।
यं यं काममवेद्य येन विधिना केनापि वा चिन्तितं
जप्तं वा सफलीकरोति सहसा तं तं समस्तं नृणाम् ॥ ६ ।

वामे पुस्तकधारिणीमभयदामक्षस्रजं दक्षिणे
भक्तेभ्यो वरदानपेशलकरां कर्पूरकुन्दोज्ज्वलाम् ।
उज्जृम्भाम्बुजपत्रकान्तनयनस्निग्धप्रभालोकिनीं
ये त्वामम्ब न शील यन्ति वचसा तेषां कवित्वं कुतः ॥ ७ ॥

ये त्वां पाण्डरपुण्डरीकपटलस्पष्टाभिरामत्विषं
सिञ्चन्तीममृतद्रवैरिव नरो ध्यायन्ति मूर्ध्नि स्थिताम् ।
अश्रान्तं विकटस्फुटाक्षरपदा निर्यान्ति वक्त्राम्बुजात्
तेषां भारति भारतीसुरसरित्कल्लोललोलोर्मयः ॥ ८ ॥

ये सिन्दूरपरागपुञ्जपिहितां त्वत्तेजसा द्यामिमा–
मुर्वीं चापि विलीनयावकरसप्रस्तारमग्नामिव ।
ध्यायन्ति क्षणमप्यनन्यमनसस्तेषामनङ्गज्वर –
क्लान्तास्तत्र कुरङ्गशावकदृशो वश्या भवन्ति स्त्रियः ॥ ९ ॥

उद्यत्काञ्चनकुण्डलाङ्गदधरामाबद्धकाञ्चीस्रजं
ये त्वां चेतसि तद्गते क्षणमपि ध्यायन्ति कृत्वा स्थिराम् ।
तेषां वेश्मनि विभ्रमादहरहः स्फारीभवन्त्यश्चिरा–
न्माद्यत्कुञ्जरकर्णताललतरलाः स्थैर्यं भजन्ते श्रियः ॥ १० ॥

आर्भट्या शशिखण्डमण्डितजटाजूटां नृमुण्डस्रजं
बन्धूकप्रसवारुणाम्बरधरां प्रेतासनाध्यासिनीम् ।
त्वां ध्यायन्ति चतुर्भुजां त्रिनयनामापीनतुङ्गस्तनीं
मध्ये निम्नवलित्रयाङ्किततनुं तद्रूपसंपत्तये ॥ ११ ॥

जातेऽप्यल्पपरिच्छदे क्षितिभुजां सामान्यमात्रे कुले
निःशेषावनिचक्रवर्तिपदवीं लब्ध्वा प्रतापोद्धतिम् ।
यद्विद्याधरवृन्दवन्दितपदः श्रीवत्सराजोऽभवत्
देवि त्वच्चरणाम्बुजप्रणतिजः सोऽयं प्रतापोदयः ॥ १२ ॥

चण्डि त्वच्चरणाम्बुजार्चनविधौ विल्वीदलोल्लुण्ठन-
त्र्युटत्कण्टक-कोटिभिः परिभवं येषां न जग्मुः कराः ।
ते दण्डाङ्कुशचापचक्रकुलिशश्रीवत्समत्स्याङ्कितै-
र्जायन्ते जगतीभुजः कथमिहाम्भोजप्रभैः पाणिभिः ॥ १३ ॥

विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवै-
स्त्वां देवि त्रिपुरे परापरकलां संतर्प्य पूजाविधौ ।
यां यां प्रार्थयते मनः स्थिरधियां तेषां त एते ध्रुवं
तां तां सिद्धिमवाप्नुवन्ति तरसा विघ्नैरविघ्नीकृताः ॥ १४ ॥

शब्दानां जननि त्वमेव भुवने वाग्वादिनीत्युच्यसे
त्वत्तः केशववासवप्रभृतयोऽप्याविर्भवन्ति ध्रुवम् ।
लीयन्ते खलु तत्र सर्गविगमे ब्रह्मादयस्तेऽप्यमी
सा त्वं काचिदचिन्त्यरूपमहिमा शक्तिः परा गीयसे ॥ १५ ॥

देवानां त्रितयं त्रयं हुतभुजां शक्तित्रयं त्रिस्वरा-
स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः ।
यत् किञ्चिज्जगति त्रिधा नियमितं वस्तु त्रिवर्गात्मकं
तत्सर्वं त्रिपुरेति नाम भगवत्यम्बेति ते तत्त्वतः ॥ १६ ॥

लक्ष्मीं राजकुले जयां रणमुखे क्षेमङ्करीमध्वनि
क्रव्यादद्विपसर्पभाजि शवरीं कान्तारदुर्गे गिरौ ।
भूतप्रेतपिशाचजम्भकभये स्मृत्वा महाभैरवीं
व्यामोहे त्रिपुरां तरन्ति विपदस्तारां च तोयप्लवे ॥१७ ॥

माया कुण्डलिनी क्रिया मधुमती काली कलामालिनी
मातङ्गी विजया जया भगवती देवी शिवा शाम्भवी ।
शक्तिः शङ्करवल्लभा त्रिनयना वाग्वल्लभा भैरवी
ह्रींकारी त्रिपुरा परापरमयी माता कुमारीत्यसि ॥१८॥

आद्यैः पल्लवितं परस्परगतैर्द्वित्रिक्रमादक्षरैः
कान्तैः क्षान्तगतैः सुरादिभिरनुध्यातैश्च तैस्तैः स्वरैः ।
नामानि त्रिपुरे भवन्ति खलु यान्यत्यन्तगुह्यानि ते
तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यो परेभ्यो नमः ॥१६॥
बोद्धव्या निपुणैर्बुधैः स्तुतिरियं कृत्वा मनस्तद्गतं
भारत्या त्रिपुरेत्यनन्यमनसो यत्राद्यवृत्तैः स्फुटम् ।
एकद्वित्रिपदक्रमेण कथितत्वत्पादसंख्याक्षरै—
र्मन्त्रोद्धारविधिर्विशेषसहितः सत्सम्प्रदायान्वितः ॥२०॥
सावद्यं निरवद्यमस्ति यदि वा किं वानया चिन्तया
मूलं स्तोत्रमिदं पठिष्यति जनो यस्यास्ति भक्तिस्त्वयि ।
संचिन्त्यापि लघुत्वमात्मनि भृशं संजायमानं हठात्
त्वद्भक्त्या मुखरीकृतेन रचितं स्तोत्रं मयापि ध्रुवम् ॥२१॥
आनन्दोद्भटकर्मजालविघटन्निद्राट्टहास्यादिकं
वेदव्याकरणावगाहनपुरक्षोभादिसिद्ध्यष्टकम् ।
वश्याकर्षपुरप्रवेशकवितातेर्कोक्तिसिद्धिप्रदं
लघ्वी जप्यमिदं पठिष्यति नरो वागीश्वरः स ध्रुवम् ॥२२॥
इति लघुरचितं त्रिपुरादेव्याः स्तोत्रं समाप्तम् ॥

अथ काम्यानि

होमं यः कुरुते देव्या विल्वपत्रेण मानवः ।
यं यं प्रार्थयते कामं सर्वं स समवाप्नुयात् ॥
लुलापस्य च मेषस्य सरोमं मांसमेव वा ।
हुनेत् त्रिमधुसंसिक्तं पुण्डरीकं सपायसम् ॥
पनसाम्रयुतं कृत्वा हुत्वा श्रीमनपायिनीम् ।
दूर्वया धनधान्यं च पुत्रलाभो भवेन्नृणाम् ॥

लुलापो महिषः ।

अष्टमी द्वे चतुर्दश्यां नवमी द्वे तथैव च ।
रात्रौ संपूजयेद् यस्मान्महाविभवविस्तरैः ॥
पलालकुशकाशैश्च तुलसीं तु विवर्जयेत् ।
पूजनात् पातकी भूयाल्लग्ने चापि श्रियं हरेत् ॥

तथा च निबन्धे

एवं सिद्धमनुं मन्त्री साधयेदिष्टमात्मनः ।
जुहुयादरुणाम्भोजैरदुष्टैर्मधुरान्वितैः ॥
लक्षसंख्यं तदर्धं वा प्रत्यहं भोजयेत् द्विजान् ।
वनिता युवती-रम्याः प्रीणयेद् देवता-धिया ॥
होमान्ते धनधान्याद्यैस्तोषयेद् गुरुमात्मनः ।
एवं कृते भवेद् वश्यो रमाया वसतिर्भवेत् ॥
रक्तोत्पलैस्त्रिमध्वक्तै रुणैर्वा हयारिजैः ।
पुष्पैः पयोन्नैः सघृतैर्होमाद् विश्वं वशं नयेत् ॥

हयारिः करवीरः । पयोन्नं पायसम् ।

वाक्सिद्धिं लभते मन्त्री पलाशकुसुमैर्हुतात् ।
कर्पूरागुरुसंयुक्तं गुग्गुलं जुहुयात् सुधीः ॥
ज्ञानं दिव्यमवाप्नोति तेनैव स भवेत् कविः ।
क्षीराक्तैरमृताखण्डैर्होमः सर्वापमृत्युजित् ॥
दूर्वाभिरायुषे होमः क्षीराक्ताभिर्दिनत्रयम् ।
गिरिकर्णीभवैः पुष्पैर्ब्राह्मणान वशयेद् ध्रुवम् ॥

गिरिकर्णी अपराजिता ।

कल्हारैः पार्थिवान् पुष्पैस्तद्वधूः कर्णिकारजैः ।
मल्लिकाकुसुमैर्हुत्वा राजपुत्रान् वशं नयेत् ॥
कोरण्टकुसुमैर्वैश्यान् वृषलान् पाटलोद्भवैः ।

कोरण्टः कटासेर इति प्रसिद्धः ।

अनुलोमविलोमान्तःस्थितसाध्यद्वयान्वितम् ।
मन्त्रमुच्चार्य जुहुयान् मन्त्री मधुरलोहितैः ॥
सर्पिर्भिर्मधुसंमिश्रैर्वशयेत् पार्थिवान् क्षणात् ।
अनेनैव विधानेन तत्पत्नीस्तत्सुतानपि ॥
एवं विल्वभवैः पुष्पैर्मधुरत्रयसंयुतैः ।
नरनारीनरपतीन् होमतो वशयेद् ध्रुवम् ॥
मालतीवकुलोद्भूतैः पुष्पैश्चन्दनलोलितैः ।　　　(लोहितैर्वापाठः)
जुहुयात् कवितां मन्त्री लभते वत्सरान्तरे ॥

मधुरत्रयसंयुक्तैः फलैर्विल्वसमुद्भवैः ।
जुहुयाद् वशयेल्लोकं श्रियमाप्नोति संचिताम् ।।
पाटलैः कुसुमैः कुन्दैरुत्पलैर्नागचम्पकैः ।
नन्द्यावर्णैर्विकसितैः कृतमालैर्जुहोति यः ।।
जायते वत्सरादर्वाक् श्रिया विजितपार्थिवः ।

नन्द्यावर्णः पिण्डीतगरः । कृतमालै आरग्वः......(?)

साज्यमन्नं प्रजुहुयाद् भवेदन्नसमृद्धिमान् ।।
कस्तूरीं कुङ्कुमोपेतं कर्पूरं जुहुयाद् वशी ।
कन्दर्पादधिकं सद्यः सौन्दर्यमधिगच्छति ।।
लाजान् प्रजुहुयान्मन्त्री दधिक्षीरमधुप्लुतान् ।
विजित्य रोगानखिलान् स जीवेच्छरदां शतम् ।।
पादद्वयं मलयजं पादं कुङ्कुमकेसरम् ।
पादं गोरोचनां चैव त्रीणि पिष्ट्वा हिमाम्भसा ।।
विदध्यात्तिलकस्थाने यान् पश्येद् येन वीक्ष्यते ।
यान् स्पृशेत्स्पृश्यते यैर्वा वश्याः स्युस्तस्य तेऽचिरात् ।।
कर्पूरकपिचोराणि समभागानि कल्पयेत् ।
चतुर्भागजटामांसी तावती रोचना मता ।।
कुङ्कुमं सप्तभागं स्यात् त्रिभागं चन्दनं मतम् ।
अगुरुर्नवभागः स्यादिति भागक्रमेण तु ।।
हिमाम्भिः कन्यकापिष्टमेतत् सर्वं सुसाधितम् ।
आदाय तिलकं भाले कुर्याद् भूमिपतीन् नरान् ।।
वनितां मदगर्वाढ्यां मदोन्मत्तान् मतङ्गजान् ।
सिंहान् व्याघ्रान् महासर्पान् भूतवेतालराक्षसान् ।।
दर्शनादेव वशयेत् तिलकं धारयन्नरः ।।

इत्यलं विस्तरः ।

इति महामहोपाध्यायतर्कपञ्चाननदेवनाथ-कृतायां कमतेश्वरमल्ल-देवनारायण-कारितायां तन्त्रकौमुद्यां भैरवीपटलपरिच्छेदः ।।२।।

अथ सुन्दरीमन्त्राः ॥

तत्र ज्ञानार्णवे—भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ ।
अर्धचन्द्रश्च विन्दुश्च नवार्णो मेरुरुच्यते ॥
महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवाः ।

शक्तिः एकारः । माया इकारः । कृष्णाध्वा रेफः ।

तथा शक्तितस्तुर्यवर्णो यः कलमध्ये वरानने ।
वाग्भवं पञ्चवर्णैश्च कामराजमथोच्यते ॥
मादने शिवचन्द्राद्ये शिवान्ते मीनलोचने ।
कामराजमिदं भद्रे षड्वर्णं सर्वमोहनम् ॥
शक्तिबीजं वरारोहे चन्द्राद्यं सर्वसिद्धिदम् ।
चतुरक्षररूपं तु त्र्यक्षरा त्रिपुरा भवेत् ।

शक्तिरेकादशस्वरः । तुर्यवर्णो दीर्घ ईकारः । तौ ककारलकारयोर्मध्ये लिखनीयौ ततो मायाबीजम् । "सकला भुवनेशानि कामेशीबीजमुत्तमम् । अनया सकला विद्या कथयामि विशेषतः" इत्यभिधानात् । तेन "कएईलह्रीँ" इति प्रथमबीजम् । मादने इति मादनं ककारः । शिवचन्द्रौ हकारसकारौ तौ आदौ यस्य तादृशे इत्यर्थः । शिवान्ते शिवो हकारः तदन्तो लकारः तावित्यर्थः । एवं "हसकहलह्रीँ" इति मध्यबीजम् । चन्द्राद्यमिति तेन शिवबीजं विना कलस्वरूपं सकाराद्यं कार्यमित्यर्थः तेन सकलह्रीँ इति । शक्तिबीजं चरमबीजमित्यर्थः । अतएवानन्दलहर्यां लोपामुद्रामन्त्रमुद्धृत्य "स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनोर्निधायैके नित्ये निरवधि महाभोगरसिकाः जपन्ति त्वा" मित्युक्तम् । स्मरः ककारः योनिरेकार लक्ष्मीरीकारः "लक्ष्मीरीकार उच्यत" इति कोषात् एकवाक्यवचनाच्च । वाग्भवबीजश्रीबीजकामबीजादिकं कृत्वा उक्तमन्त्रं जपेदिति तदर्थ इति केचित् तन्न । "एतस्या एवं विद्याया आद्यत्रितयभेदतः । "कामयोनिरमायोगे चाहुः पञ्चदशेतिचे"ति तत्त्वबोधादि तन्त्रान्तरविरोधात् ।

उक्तं चतुःशत्याम्—मादनं तदधः शक्तिस्तदन्ते विन्दुमालिनी ।
ऐन्द्रं च भुवनेशानी वीजं तद्वाग्भवं भवेत् ।
शिवबीजं त्रिधा कृत्वा सृष्टिस्थितिलयक्रमात् ।
द्वयमाद्येन रहितामाद्याधो मदनाक्षरम् ।
परस्थितिशिवाधस्तादिन्द्रबीजं नियोजयेत् ।

तथा लयशिवाधोऽपि वह्निस्तुर्यस्वरेन्दुमान् ।
एवमेतन्महाबीजं कामबीजं महोदयम् ।
मायाबीजं महेशानि मादनं शक्रसंयुतम् ।
चन्द्रबीजं केवलं तु विनियुज्य वरानने ।
संहारक्रमयोगेन शक्तिबीजं समुद्धरेत् ।

बिन्दुमालिनी दीर्घईकारः । तन्मूलभूते मेरुमन्त्रे चतुर्थस्वराभिधानात् । तन्त्रान्तरेऽपि तुर्यवर्ण इत्यभिधानात् । वाराहीतन्त्रे

क्रते तु मादनं चादौ तत्पाताले तथा भगम् ।
दक्षाक्षीन्द्रशिवानी च वाणार्णं पुण्यमेव तत् ॥

इत्यत्र दक्षाक्षीत्युक्तं तच्च वामदक्षक्रमेण न्यासपक्ष इति शिष्टाः ।

प्रत्येकाक्षरस्तोत्रे तृतीये ईशानादिमहाप्रेतमौलिलालितपादुके ।
ईश्वरीन्द्रादिभूतानां सुन्दरि त्वां समाश्रये ॥

इत्यभिधानात् ।

श्रीक्रमेऽपि बीजं रत्यधिपं देवि वाग्भवान्तं ततः पठेत् ।
सूक्ष्मान्तं स्वरराजं तु कषादिपरनान्तकम् ॥

इत्यभिधानात्। ऐन्द्रं लकारः । शिवबीजं हकारः । त्रिधेति त्रिषुस्थानेषु लिखित्वेत्यर्थः । द्वयं मध्यमचरमहकारद्वयम् । आद्येन शिवाद्येन सकारेण । एवं च प्रथमशिवानन्तरं सकारोऽर्थात् आद्याधः सकारयुक्तहकाराधः । परस्थितीति परद्वितीयस्थितिरूपः शिवस्तदध इत्यर्थः । लयशिवस्तृतीयः । शक्रसंयुतमिति तेन लकारोपरिस्थितककारः इत्यर्थस्तथैव सम्प्रदायात् । चन्द्रः सकारः संहारो वैपरीत्यम् । तेनादौ चन्द्रोऽन्त्ये मायेत्यर्थः । तन्त्रान्तरे

त्रिस्थाने जननस्थितिक्षयतया हंसस्य बीजं स्थितं
सृष्टेःस्पष्टमधोऽपि शक्तिमदनं सेन्द्रेन्दुबीजं स्थितेः ।
संहारस्य तथाननस्तदनु खं बीजं त्रिमूर्तेः पुना-
रक्तं ध्यायति कामराजकमिदं यस्यास्ति वश्यं जगत् ॥

शक्ति सकारः । मदनः ककारः । स्थितेरध इत्यन्वयः । एवमग्रेऽपि ।

खं विन्दुम् । षोडशीपरमेतदुक्तम् । "त्रिकूटा कला भद्रे षोडशार्णा भवन्ति हि ।
वैष्णव्येकोनविंशार्णा शिवा सप्तदशाक्षरी ।" तथा

"कामराजाख्यविद्यायाः शक्तिं तुर्यं तु सुन्दरि ।
हित्वा मुखे शिवेन्दुभ्यां लोपामुद्रा त्वियं भवेत् ॥

कामराजस्त्रिबीजात्मकमन्त्रः । "कामराजो भवेद्देवि नित्येयं ब्रह्मरूपिणी" त्यभिधानात् । एवं चादिबीजे स्वरद्वयं त्यक्त्वा हकार-सकारौ दद्यादित्यर्थः । तेन "हसकलह्रीँ" इति प्रथमबीजम् । शेषद्वयं प्रागवत् ।

तदुक्तं शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परा-मार-हरयः ।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्त्येते वर्णास्तव जननि नामावयवताम् ॥

शिवो हकारः । कामः ककारः । क्षितिर्लकारः । रविर्हकारः । परेति सकारककार-लकारा इत्यर्थः ॥ अमुमेवमन्त्रमुद्धृत्य तत्त्वबोधे

मायाबीजसमायुक्ते त्रिबीजे प्रथमं स्मरः ।
षोडशीयं समाख्याता ज्ञेया तन्त्रविशारदैः ।
वाग्भवादिसमाख्याता षोडशी सप्तदश्यपि ।

ततः कामेश्वरीबीजं सैवाष्टदशवर्णिके त्युक्तम्

तथा कामराजाख्यविद्यायास्तृतीयं सुरवन्दिते ।
सहाद्यं शक्तिबीजं स्याद् विद्यागस्त्यार्च्चिता भवेत् ।
लोपामुद्राप्रभावेन साक्षाद् ब्रह्मस्वरूपिणी ॥

तृतीयं शक्तिबीजमित्यभेदान्वयः । सहाद्यमिति तेन "सहसकलह्रीँ" इति चरमं बीजमित्यर्थः ।

तथा विद्योद्धारं प्रवक्ष्यामि शक्तिमादनमध्यगम् ।
शिवं कुर्याद् वाग्भवेऽथ शिवाद्यं कामबीजकम् ॥
चन्द्राद्यन्तु तृतीयं स्याद् विद्येयं मनुपूजिता ।

शक्तीति प्रथमबीजे एकारककारयोर्मध्ये हकारं दद्यात् । शेषबीजद्वयं यथास्थितमेवेत्यर्थ ।

तथा लोपामुद्रां द्वितीयां तु विलिख्य सुरवन्दिते ।
पुनर्विलिख्यतामेव चतुर्थे पञ्चमे स्थिताम् ।।
हित्वा तु भुवनेशानीमेकोच्चारेण चोच्चरेत् ।
चतुःकूटात्मिका विद्या शङ्कराराधिता भवेत् ॥

तथा लोपामुद्रां तथा देवि विलिख्य तदनन्तरम ।
नन्दिकेश्वरविद्यां च षट्कूटा वैष्णवी भवेत् ।

लोपामुद्रां द्वितीयामेव प्रक्रमात् । "अगस्त्यस्य तथा विद्यां विलिख्य मनुवित्ततः" इति दक्षिणामूर्त्तितन्त्रदर्शनाच्च ।

तथा कामराजाख्यविद्याया वाग्भवे मदनं त्यज ।
चन्द्रं तत्रैव संयोज्य कामराजे ततः परम् ।
हित्वा चन्द्रं मुखे कुर्याद् विद्येयं नन्दिपूजिता ।

आद्यबीजे ककारस्थाने सकारं दत्वा द्वितीये सकारं त्यक्त्वा आदौ ककारं दद्यादित्यर्थः । "कामं तत्र विनिःक्षिपे" दिति दक्षिणामूर्त्तिस्वरसात् ।

तथा सहाद्यं वाग्भवे देवि चन्द्राद्यं शिवमध्यगम् ।
मादनं कामराजे तु शक्तिबीजं हसान्वितम् ॥
चन्द्राराधितविद्येयं भोगमोक्षफलप्रदा ।

चन्द्राद्यमिति मध्यबीजसकारहकारयोर्मध्ये ककारस्तेन "सहकहलह्रीँ" इति बीजं मध्यमम् । हसेति तेन "हसकलह्रीँ" इति चरमबीजम् ।

तथा त्रिकूटे भुवनेशानीं द्विधा कुरु महेश्वरि ।
विन्दुहीना नादहीना दुर्वासःपूजिता भवेत् ॥

प्रत्येकं बीजानामन्ते विन्दुरहितां मायां द्विर्द्विरुद्धरेदित्यर्थः ।

तथा हसाद्यं वाग्भवं बीजं शिवाद्यं सहमध्यगम् ।
मादनं कामबीजे तु तृतीयं शृणु पार्वति ।
हसाद्यं शक्तिबीजे तु कुवेरेण समर्चिता ॥

शिवाद्यमिति हकारानन्तरं सकारहकारयोर्मध्ये मादनं ककारः। तेन "हसकहलह्रीँ" इति बीजम्। हसाद्यमिति तेन "हसकलह्रीँ" इति।

तथा कामराजाख्यविद्याया हित्वा भूमिं तृतीयके।
शक्तिबीजस्थितां देवि चन्द्राधः कुरु तत्र च ॥
इन्द्राराधितविद्येयं भुक्तिमुक्तिफलप्रदा।

भूमिः लकारः। चन्द्राधः इति तृतीयबीजे उक्तस्थाने लकारं हित्वा सकारानन्तरं दद्यादित्यर्थः।

अन्ये च बहवो भेदास्ते विस्तरभयादस्मैरनुपादानाच्च न विवेचिताः। अतएव तन्त्राणां परस्परविरोधोऽपि नाशङ्कनीयः मन्त्राणां बहुभेदात्।

× × ×

ज्ञानार्णवे— प्रातरुत्थाय देवेशि गुरूंनत्वा स्वनामभिः।
संध्यास्नानादिकं देवि विधाय मनुवित्तमः ॥
सर्वश्रृङ्गारवेशाढ्यः कर्पूरघुसृणादिभिः।
महामृगमदोदारलिप्ताङ्गः कुङ्कुमारुणः ॥
नवरत्नविभूषाढ्यो रक्ताम्बरविराजितः।
ताम्बूलरागवदनो मदनानन्दमानसः ॥
यागमन्दिरमागत्य लाक्षाचित्रविचित्रवान्।
भूप्रदेशे समे रम्ये सिन्दूररजसाथवा ॥
कुङ्कुमस्य रजोभिश्च भूमौ चक्रं समालिखेत्।
अथवा हैमरूप्याभ्यां ताम्रेण बहुधातुभिः ॥
पट्टं विरच्य श्रीखण्डरक्तचन्दनसंम्भवे।
पट्टे संस्थाप्य विलिखेल्लेखिन्या हैमया शिवे ॥
रोचनाकुंकुमाभ्यां तु कस्तूरीचन्दनादिभिः।
तन्त्रे भूबिम्बे षोड़शारं च वसुपत्रं क्रमाल्लिखेत् ॥
सृष्टिचक्रं भवेदाद्यं पूजनं कथ्यते शृणु।
मन्वस्रं दशकोणं च द्वितीयं दशकोणकम् ॥

स्थितिचक्रं प्रसूनं च विभेदेन यजेत् क्रमात् ॥
अष्टकोणं त्रिकोणं च वैन्दवं संहृतिर्भवेत् ॥

चक्रं ज्ञानार्णवे— बिन्दुत्रिकोणवस्वारं चक्रमेतद् वरानने ।
मध्यचक्रं विजानीहि दशारयुगलं तथा ॥
शक्त्योन्यङ्कितं देवि बाह्यमध्यगतं भवेत् ।
एतद्बाह्ये महेशानि वृत्तं पूर्णेन्दुसन्निभम् ॥
तद्युक्तं कुरु मीनाक्षि वसुपत्रं मनोहरम् ।
ततः षोडशपत्रं च विलिखेत् सुरवन्दिते ॥
चतुरस्रं चतुर्द्वारसहितं परमेश्वरि ॥

षोडशदलान्तरं वृत्तत्रयं ततो रेखात्रयमिति केचित् ।

तदुक्तं चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरिति मूलप्रकृतिभिः ।
त्रयश्चत्वारिंशद्वसुदलकलास्रत्रिवलय-
त्रिरेखाभिः सार्धं तव भवनकोणाः परिणताः इति ।

यामले बिन्दुत्रिकोणवसुकोणदशारयुग्मं
मन्वस्रनागदलसंगतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रराजमुदितं परदेवतायाः ॥

एवं त्रिरेखेति भूपुरत्रयपरमेव एकवाक्यताबलात् । अत्र तन्त्रे बहिरुपक्रमेण गणनमिहान्तारूपक्रमेणेति फलदो न कश्चिद् विशेषः ।

तन्त्रचूडामणौ श्रीक्रमे अकृत्वा सुसमां रेखां अकृत्वा सुसमं मुखम् ।
योऽत्र तन्त्रे प्रवर्त्तेत तस्य सर्वं हराम्यहम् ॥
यस्य यत्र स्थितिर्देवि तत्र तन्नार्चयेद् यदि ।
तन्मांसरुधिरेणैव पारणा तस्य जायते ॥
पशोरालोकनं न स्यात्तथा कुरुत यत्नतः ।
यदि दैवात् पशोरग्रे लिखनं विद्यते क्वचित् ॥
ममाङ्गक्षतिरेवात्र क्रियते पापबुद्धिना ॥

स्वयंभूकुसुमेनैव कुण्डगोलेन वा पुनः ।
सर्वसिद्धिस्तदा तस्य जायते देवि निश्चितम् ॥

पशुरदीक्षितः । स्वयंभ्विति प्रथमस्त्रीरजसेत्यर्थः । कुण्डोऽमृते पत्यौ जारजः मृते गोलकस्तन्मांसेनेत्यर्थः । गोलोत्थजाङ्गलगुडैरिति सारसमुच्चयस्वरसात् । यद्वा कुण्डस्य गोलमिति समासः । गोलं गोलकम् ।

तथा षोडशारं च यच्चक्रं सर्वाशापूरकं भवेत् ।
अष्टपत्रं महेशानि सर्वसंक्षोभकं भवेत् ॥
चतुर्दशारं देवेशि सर्वसौभाग्यदायकम् ।
दशारं तप्तहेमाभं चक्रं सर्वार्थसाधकम् ॥
द्वितीयमपि पंचत्यस्रं सर्वरक्षाकरं भवेत् ।
अष्टकोणं वरारोहे सर्वसिद्धिकरं भवेत् ॥
त्रिकोणं सर्वसंभूतिकारणं भूतिदं भवेत् ।
बिन्दुचक्रं महेशानि सर्वानन्दमयं शिवे ॥
सदाशिवमयं चक्रं नायकं परमेश्वरि ।

तत्रैव सर्वाशामोहनं चक्रं सर्वाशापूरकं भवेत् ।
सर्वसंक्षोभणं गौरि सर्वसौभाग्यकारकम् ॥
सर्वार्थसाधनं चक्रं सर्वरक्षाकरं परम् ।
सर्वरोगहरं देवि सर्वसिद्धिकरं तथा ॥
सर्वानन्दमयं चापि नवमं सुरसुन्दरि ।

भूपुरमादाय नवभेदत्वम् । तदुक्तं कामेश्वरतन्त्रे

चक्रस्य नवधा तत्त्वं कथयामि तवानघे ।
आदिमं भूपुरेण स्याद् द्वितीयं षोडशारकमित्यादि विस्तरः ।

तथा उत्तराशामुखो देवि यदा चक्रं समुद्धरेत् ।
उत्तराशा तदा देवि पूर्वाशैव न संशयः ॥
ईशानकोणं देवेशि तदाग्नेयमुदीरयेत् ।
पश्चिमाभिमुखो देवि यदा चक्रं समुद्धरेत् ॥
पश्चिमाशा तदा ज्ञेया पूर्वाशेति विभावयेत् ।
वायुकोणं तदाग्नेयमीशानं राक्षसं भवेदित्याद्यलं विस्तरः ।

अथ चक्रलिखनप्रपञ्चः ।

ईशानादग्निकोणान्तमृजुरेखां समालिखेदिति बालामन्त्रे नवयोनि-लिखनविस्तारः ।

तथा पूर्वशक्तीशवह्निभ्यां कोणाभ्यां सुरवन्दिते ।
पूर्वरेखां तु विस्तार्य तथा पश्चिमवह्नितः ॥
वायुराक्षसकोणाभ्यां रेखां पश्चिमगां तथा ।
विस्तार्य योजयेद् देवि संधिभेदक्रमेण तु ॥
योन्यग्रगां पूर्वदेशे दक्षिणोत्तरतः क्रमात् ।
तथा रेखे योनिदेशे पश्चिमस्यां दिशि क्रमात् ।
कोणाग्रगे योजयित्वा दशकोणं तदा भवेत् ॥
तथैव देवदेवेशि द्वितीयं दशकोणकम् ।
ईशानवह्निगे रेखे पूर्वयोन्यग्रयोः क्रमात् ॥
विस्तार्य योजयेत् पश्चात् पश्चिमस्यां दिशि क्रमात् ।
वायुराक्षसकोणाग्ररेखे विस्तार्य सुन्दरि ॥
पश्चिमाग्रे तथा देवि योजयेदिन्द्रदिग्गते ।
एकत्र पूर्वकोणाग्रचुम्बिनीं तु मनोहराम् ।
योजयेद् देवदेवेशि यथापंक्त्यस्रकं भवेत् ॥
दशकोणस्य देवेशि त्यक्त्वा कोणचतुष्टयम् ।
दशकोणान्तरे देवि मध्यरेखाः प्रकाशयेत् ॥
दक्षिणोत्तरयोर्देवि मध्यरेखां प्रकाशयेत् ।
द्वे दक्षिणे विभागे तु तथा चोत्तरभागके ।
षट्कोणस्य तथा देवि संधिभेदक्रमेण तु
योनिं वह्निं च संयोज्य शक्रारं जायते तथा ।
कक्षामध्यगतां रेखां ऋजुरूपां तु योजयेत् ।
संमुखे पञ्चशक्त्यग्रं प्रागग्रं चतुरस्रकम् ॥

अथायमुपदेशक्रमः

प्रथममग्नीशवारुणगतकोणं त्रिकोणं तथा वायव्यनैरृतेन्द्रगतकोणं त्रिकोणान्तरम् । ततस्तन्मध्यगतपूर्वकोणमधश्च वायुरक्षःकोणगतकोणद्वयं तादृशमेव त्रिकोणान्तरमिदमष्टकोणम् । ततो दक्षिणोत्तरायतपूर्वापरदिगवस्थितचरमरेखाद्वयमुभयतो विस्तार्य षट्कोणान्तरं कृत्वा ईशानाग्नेयवायुनैरृतकोणे रेखामुभयतो विस्तार्य उभयतो दक्षिणोत्तररेखादानेन दशकोणम् । एवमेव दशकोणान्तरम् । ततः पुनरपि दशकोणस्य कोणचतुष्कं त्यक्त्वा मध्यस्थितपूर्वापररेखाद्वयं संवर्ध्य चतुर्दशकोणं लिखेत् । एवं नवशक्तिषु यथा नवरेखाः संभवन्ति तथा लिखेदित्येवं विस्तरः ।

× × × ×

वाराही तन्त्रे　स्वगुरुं चिन्तयेत् पूर्वं कपोलस्य च दक्षिणे ।
गणेश्वरं च प्रणमेत् शिखायां परमं गुरुम् ॥
हृदये देवताभावं भूतशुद्धिं ततश्चरेत् ।

ज्ञानार्णवे　विधाय वामभागे तु चतुरस्रं सुमण्डलम् ।
यन्त्रिकां तत्र संयोज्य शंखं तत्र विनिःक्षिपेत् ।
शुद्धोदकेन संपूर्य पूजयेत् कारणान्वितम् ।
षडङ्गं तत्र संपूज्य सामान्यार्घमिदं शिवे ।

सुमण्डलं वह्निमण्डलं त्रिकोणमिति यावत् । यन्त्रिका शंखाधारः । कारणं गन्धादि । अत्र विशेषार्घतृतीयभागमितजलेन पूरणम् ।

तदुक्तं तन्त्रे　भागत्रयं विशेषस्य भागमेकं जलं क्षिपेदिति ।

तथा　अथ वक्ष्ये महेशानि विशेषार्घस्य लक्षणम् ।
आत्मश्रीचक्रयोर्मध्ये चतुरस्रं च मण्डलम् ॥
सामान्यार्घस्य तोयेन देशिको भूमिजानुकः ।
वह्निकोणोर्ध्वपुटितां यन्त्रिकां तत्र निःक्षिपेत् ॥
त्रिकोणे वृत्तषट्कोणं यजेत्तत्र च मण्डलम् ।
वह्निं तत्र विचिन्त्याथ पूजयेद् यन्त्रिकामयम् ॥

पूर्ववत् परमेशानि त्रिकूटां मध्यगां यजेत् ।
व्यस्तकूटे यजेत्तत्र त्रिकूटं परमेश्वरि ॥
द्विरावृत्या षडङ्गानि षट्कोणेषु प्रपूजयेत् ।
सूर्यरूपं न्यसेत् पात्रं यन्त्रं पूर्ववदालिखेत् ॥
समस्तव्यस्तकूटैस्तु त्रिकूटं पूजयेच्छिवे ॥
विशेषतः[1] समापूर्य चन्द्रद्रवमयं शिवे ।
पूर्ववद् यन्त्रमालिख्य त्रिकूटां मध्यगां यजेत् ।
त्रिकोणं चिन्तयेत्तत्र त्रिकूटैः पूजयेच्छिवे ।
अकथादित्रिरेखाढ्यं हक्षद्वन्तरमुत्तमम् ॥
द्विरावृत्या षडङ्गानि षट्कोणेषु प्रपूजयेत् ।
आत्मासनं समारभ्य आनन्देन च पूजयेत् ॥
मूलविद्यां यजेत्तत्र षोडशार्णां परां बुधः ।
धूपदीपौ निवेद्याथ नमस्कृत्यार्घके पुनः ।
मुद्राः संदर्शयेत्तत्र साक्षाद्ब्रह्ममयो भवेत् ।
प्रोक्षयेत्तेन चात्मानं पूजोपकरणान्यपि ।

समस्तव्यस्तेति समस्तेन मध्यकोणेषु प्रत्येकबीजेन यजेदित्यर्थः । अकथेति अकारात् ककारं यावत् तस्मात् थकारं यावत् तस्मात् हकारं यावत् वर्णान् रेखात्रये चिन्तयेत् । मध्ये हक्षवर्णद्वयमित्यर्थः । एवं चाधारे शंखे जले मण्डलपूजनं चैत्यवधेयम् । अत्र वाग्भवेन यन्त्रिकाधारणम् । कामराजेनार्घपात्रनिवेशनं शक्तिबीजेन जलपूरणमिति पद्धतिषु लिखनमनुरोधात् । तदेवमर्घस्थापनानन्तरं भूतशुद्धिरुक्तक्रमानुरोधात् तथैव तन्त्रेषु लिखनात् । तदुक्तमर्घस्थापनं कृत्वा "भूतशुद्धिं ततः कुर्यान्मन्त्री देहविशुद्धये । करशुद्धिं ततः कृत्वा चतुरासनदेवता" इति । एवमेव पद्धतिषु सर्वेषां सर्वतन्त्रेषु लिखनम् ।

तथा　　आनन्दं च समभ्यर्च्य भूतान् संत्रासयेत्ततः ।
मूलविद्यां समुच्चार्य दिग्बन्धस्फोटनान्यथ ॥
उन्मुखः सन्नतो भूत्वा भूतशुद्धिं तु पूर्ववत् ।

---

१. विशेषतः विलोममातृकया इति क पुस्तके ।

मूलविद्या त्रिकूटसुन्दरीमन्त्रः उपास्यमन्त्र इति तत्त्वम्। आनन्दमानन्दभैरवं जलमित्यर्थः। चन्द्रं द्रवमयमिति वाक्यात्।

मन्त्रस्तु शिवचन्द्रौ मातृकान्तं कालशक्राम्बुवह्नयः।
वायुश्च वामकर्णेन योजिता विन्दुनादिनः॥
बीजमेतत्समुच्चार्य तथा चानन्दभैरवम्।
ङेन्तं शिखामन्त्रयुतं पुनर्बीजं तु संलिखेत्॥
चद्रं हित्वादिमं कुर्यात् कर्णे वामाक्षि योजयेत्।
सुधादेव्यै ततो वौषट् अयमानन्दभैरवः॥
अनेन चन्द्रं संपूज्य पूजार्हः कलशो भवेत्॥ इत्युक्ता इति।

भूतशुद्धौ तन्त्रे मूलाधारे स्थितं जीवं प्रदीपकलिकाकृतिम्।
प्रणवेन समाकृष्य द्वादशान्तं नयेत् सुधीः॥

हंस-मन्त्रेण नयन सोऽहमित्यानयनं वा "हंसेन देहममरेन्द्रपुरोगतेने" त्यादि सारसमुच्चयात्।

बायुबीजेन देहस्था धातवः पापसंयुताः।
संशोष्या वह्निबीजेन पापेनसहितं दहेत्॥
पापं विना पुनर्जीवममृतीकृत्य जीवयेत्।
जलबीजेन देवेशि पार्थिवेन स्थिरं कुरु॥ इति।

ततोऽभेदं चिन्तयेत्। पूरकादिक्रमेण प्राणायामं वा कुर्यात् द्वयोरपि प्रामाणिकत्वात्। अत्र मातृकान्यासः क्वचिदपि तन्त्रे न श्रूयते तथाप्यवश्यं कर्त्तव्यः।

जपाद्यं सर्वमन्त्राणां विन्यासेन विना लिपेः।
कृतं तन्निष्फलं विद्यात्तस्मात्पूर्वं लिपिं न्यसेत्॥

इति सामान्यवचनात्। एवं च इदानीमेव तन्न्यासः। अन्यत्र सर्वत्र तथा दर्शनात्। बालामन्त्रे तथैवाभिधानात्। वस्तुतस्तु आसनन्यासान्ते तन्न्यासः। "सृष्ट्यर्थं विन्यसेद् देहे मातृका" मिति वशिन्यादिन्यासे तथैवाभिधानात् स च गणेशादिन्यासेन प्रसङ्गसिद्धोऽन्यथा वेत्यन्यदेतत्।

अस्य मन्त्रस्य दक्षिणामूर्त्तिऋषिः पंक्तिश्छन्दः तन्मूलबालामन्त्रे तथैवाभिधानात्। न त्वानन्दभैरवो मानाभावात्। एवमेव पद्धतिष्वपि प्राञ्चः। नास्त्येव ऋष्यादिकमिति केचित्॥

वाराही तन्त्रे —ऋषिः शम्भुः शिवो बीजमनुष्टुपछन्द ईरितम् ।
देवता सुन्दरी ख्याता कामे मोक्षे च योजयेत् ॥

अत्र शम्भुपदं दक्षिणामूर्तिपरमेव एकवाक्यतावलात् । एवं यद्यानन्दभैरव-पदमपि तदानुमतमेतत् ।

तथा ततो न्यासादिकं कुर्यात्सन्नाहं तु शरीरके ।
करशुद्धिकरीं विद्यां मध्यमादितलान्तिकाम् ॥
अङ्गुलीषु द्विरावृत्या करशुद्धिरियं शिवे ।

विद्यामाह आद्यं वाग्भवमुच्चार्य द्वितीयं कामराजकम् ।
कुमार्यास्तु तृतीयं तु त्रिपुरा परमेश्वरि ॥
करशुद्धिकरी विद्या प्रथमा समुदीरिता ।

आद्यं अंकारः । द्वितीयं आंकारः । कुमारी बाला । तेन "अं आं सौः" इति मन्त्रः ।

तदुक्तम् आद्यं द्वितीयं वर्णौश्यास्त्रिपुरेश्यन्तिमं लिखेत् ।
आद्यद्वयं बिन्दुनादकलाढ्यं त्रिपुरा भवेदिति ॥

तथा तत आत्मासनं दद्याच्चक्रासनमतः परम् ।
सर्वमन्त्रासनं दद्यात् साध्यसिद्धासनं यजेत् ।
पादयोर्जंघयोर्जान्वोर्लिङ्गे न्यस्य चतुष्टयम् ।
कुमार्या त्रिपुरेशान्याः षडङ्गानि च पूर्ववत् ॥

कुमारी बाला । तया पुनः षडङ्गानि न्यसेदित्यर्थः ।

तदुक्तं चतुश्शतीनिबन्धे – " बालया विद्यया देवि रक्षामात्मनि कारयेत् । "

तन्त्रेऽपि आत्मरक्षां प्रकुर्वीत त्रिपुरेश्या महेश्वरि ।

तथा षडङ्गन्यासं कुर्यादित्यर्थः । "आत्मशुद्धिकरीं विद्यां द्विरुच्चार्य ततो न्यसेत्" इत्यभिधानात् । तदुक्तम् - ततो रक्षां प्रकुर्वीत पूर्वोक्तकुलविद्यया ।
षडङ्गन्यासयोगेन नमस्कारनियुक्तया ॥

नमस्कारेति नमः स्वाहादिजातियुक्तयेत्यर्थः । एवं च समस्तमन्त्रेण षडङ्गकरणम् ।

यद्वा " द्विरुक्तेन फडन्तेन दिग्बन्धन" मिति निरस्तम् ।

आसनमन्त्रे त्रिपुरेश्यादिमं त्यक्त्वा भुवनेशीं परिक्षिपेत् ।
अनयात्मासनं दद्यात् त्रिपुरेश्या षडङ्गकम् ॥

त्रिपुरेशी बाला । "कुमारी तु द्वितीया स्यात् त्रिपुरेशी महेश्वरी" त्यभिधानात् । तस्या आदिमं वाग्भवं त्यक्त्वा मायां दद्यादित्यर्थः । तेन " ह्रीं क्लीं सौः " इति मन्त्रः ।

तथा त्रिपुरेशी महेशानि त्रिबीजा हस्थिता यदि ।
चक्रासनगतां देवि विद्धि त्रिपुरवासिनीम् ॥

त्रिपुरेशीबीजत्रयं प्रत्येकं हकारयुतं चक्रासनमन्त्र इत्यर्थः ।

तदुक्तम् — शिवबीजयुतं देव्या बीजत्रयमुदाहृतम् ।
त्रिपुरेश्यास्त्रिबीजेयं त्रिपुरेशीप्रपूजनम् ॥

उक्तं चतुःशतीनिबन्धेऽपि पुनर्विद्यादिमस्योर्ध्वमन्तरस्थं शिवान्वितम् ।
त्रैलोक्यमोहिनीयं सा विद्या चक्रासनस्थिता ॥

आद्यस्योर्ध्वं अन्तरस्थं अन्तं च त्रयं शिवयुक्तमित्यर्थः

तथा त्रिपुरेशी महेशानि वाग्भवे कामबीजके ।
शिवचन्द्रसमायुक्ता तार्त्तीया शिवरूपिणी ॥
सर्वमन्त्रासनगता त्रिपुरा श्रीरियं शिवे ।

त्रिपुरेशी बाला । शिवो हकारः । चन्द्रः सकारः । आद्यबीजद्वये तदुभययुक्ते चरमबीजे शिवमात्रयोगिनीत्यर्थः । एवं "हसऐं हसकलईं हसऔः" इति मन्त्रः ।

तदुक्तं तन्त्रे त्रिपुरेशी हसाद्या स्याद् बीजयुग्मे तथान्तिमे ।
शिवाद्या श्रीरियं सर्वमन्त्रासनगता भवेत् ॥ इति

तथा आत्मासनगतायां तु हित्वा तार्त्तीयमद्रिजे ।
बलेमात्मकमारोप्य साध्यसिद्धासनं भवेत् ॥

तार्त्तीयं सौः इति त्यक्त्वा बल एंकारात्मकं मन्त्रं दद्यादित्यर्थः । तेन "ह्रीँ क्लीँ क्लेँ" इति । यामलस्तवे तु "सुधार्णवासनं देवि पातु रत्नाम्बुजासनम्" इत्यधिकमासनद्वयमुक्तम् । चतुःशत्यां–हसबीजसमारूढामाद्यामग्न्यासनस्थिताम् ।
सर्वार्थसाधिका विद्या देव्यावाहनकर्मणि ॥

हसेति हकार - सकारावित्यर्थः । आद्या ऐंकारः । अग्नी रेफः । तेन "हसरैं" इति मन्त्रः । तन्त्रे तु संपत्प्रदा भैरवीयमन्ते सर्गसमन्विता ।
देव्यावाहनविद्या स्यात् सिद्धार्था परमेश्वरि ॥ इति

भैरवीत्रिकूटस्यैवावाहनमन्त्रत्वमुक्तम् ।

तथा तन्त्रे – व्यापकत्वेन मूर्त्तिं तु विन्यसेत् सिद्धिहेतवे ।
संपूर्णां चिन्तयेद् विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम् ॥
द्रवत्सुधाषोडशार्णां महासौभाग्यदां स्मरेत् ।
वामांसदेशे सौभाग्यदण्डिनीं भ्रामयेत् ततः ॥
रिपुजिह्वां महामुद्रां पादमूले विनिःक्षिपेत् ।
त्रैलोक्यस्य त्वहं कर्त्ता ध्यात्वैवं तिलके न्यसेत् ॥
संपूर्णमेव वदने वेष्टनत्वेन विन्यसेत् ।
पुनः संपूर्णवदने गलोर्ध्वं विन्यसेत्ततः ।
पुनः सकर्णके देहे वेष्टनत्वेन विन्यसेत् ।
व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाभिवंद्य च ।
श्रीविद्यापूर्णरूपोऽयं न्यासः सौभाग्यदो मतः ।
वामहस्तेन मुष्टिं तु वद्ध्वा कर्णप्रदेशके ॥
तर्जनीं सरलां कृत्वा भ्रामयेद् दण्डिनी भवेत् ।
अन्तरङ्गुष्ठयुग् सा तु निवध्नन् जगतीतलम् ॥
रिपुजिह्वाह्वया मुद्रा न्यासकाले नियोजयेत् ॥

त्रिखण्डादिस्वरूपं तु मन्त्रकौमुद्यां विस्तरत्वादत्र न प्रपञ्च्यते ।

तन्त्रे परिभ्राम्यानामिकां तु मूर्धानं परितः शिवे ।
ब्रह्मरन्ध्रे यजेद देवि मणिवन्धं न्यसेत्ततः ॥
ललाटेऽनामिकां कुर्यात् षोडशार्णां स्मरन् बुधः ।
सम्मोहनाख्यो देवेशि न्यासोऽयं क्षोभकारकः ॥
त्रैलोक्यवसनां श्यामां श्रीविद्यां मनसि स्मरन् ।
पादयोर्जंघयोर्जान्वोः कट्यामन्धुनिपृष्ठके ॥
नाभौ पार्श्वद्वये चैव स्तनयोरंसयोस्तथा ।
कर्णयोर्ब्रह्मरन्ध्रान्ते वदनेऽध्वनि पार्वति ॥
पुनः कर्णप्रदेशे तु कण्ठवेष्टनयोः क्रमात् ।
संहारोऽयं महान्यासो बीजैः षोडशभिः क्रमात् ॥
श्रीविद्यायाः षोडशार्णन्यासाद् विश्वेश्वरो भवेत् ।

पादादौ द्वयोर्द्वयोरेकैकबीजन्यासः । अन्धु लिङ्गम् । अध्वनि सुषुम्नानाडयाम् । संहारोऽङ्गानां व्युत्क्रमः न तु बीजानाम् । क्रमादित्यभिधानात् ।

ज्ञानार्णवे सृष्ट्यर्थं विन्यसेद् देहे मातृकां पूर्ववत् सुधीः ।
मातृकार्णस्वरूपां च वर्गाष्टकसमन्विताम् ।
वशिनीं मातृकां न्यस्येद् बीजाष्टकसमन्विताम् ।
अवर्गान्ते लिखेद् बीजं रवलं तत्क्रमान्वितम् ।
वामकर्णविशोभाढ्यं विन्दुनादान्तिकं शिवे ।
वशिनीं पूजयेद् वाचां देवतां देवि सुव्रते ॥
कवर्गान्ते महेशानि कामेशीबीजमुत्तमम् ।
मेरूर्ध्वगं समुच्चार्य वाग्देवीं च समर्चयेत् ॥
चवर्गान्ते धान्त-नीर-क्ष्मा-चतुर्थस्वरान्वितम ।
मेदिनीं पूजयेद् वाचां देवतां तदनन्तरम् ॥
टवर्गान्ते वायुबीजमिन्द्रस्थं च महेश्वरि ।
वामकर्णेन्दुविन्द्वाढ्यं विमलां वागधीश्वरीम् ॥
तवर्गान्तेम यमाग्न्याद्यं वामनेत्रविभूषितम् ।
विन्दुनादान्वितं बीजं वाग्देवीमरुणां यजेत ॥
पवर्गान्ते व्योमचन्द्रक्ष्मातोयादग्निसख्यकम् ।
ऊकारस्वरसंयुक्तं विन्द्वन्तं जयिनीं यजेत् ॥
यवर्गान्ते जान्तकालरेफवायुसमन्वितम् ।
मायाद्यां देवतां वाचां सर्वेशीं परिपूजयेत् ॥

मायेत्यत्र वामकर्णेन्दुशोभाढ्यामिति क्वचित् पाठः ।

क्षमवाह्निगतं तुर्यबीजेन परिभूषितम् ।
विन्दुनादकलाक्रान्तं कौलिनीं वाचमर्चयेत् ।
शवर्गान्ते महेशानि न्यसेत् सर्वार्थसिद्धये ॥
शिरोललाटभ्रूमध्यकण्ठे हृन्नाभिगोचरे ।
आधारे व्यूहकं यावत् न्यसेद् देवीः पराः शिवे ॥

पूर्ववदिति बालामन्त्रवदन्तर्बहिश्चेत्यर्थः । अवर्गेति षोडश स्वराः । रवलं रेफवकारलकाराः । बामेति वामकर्ण ऊकारः । तच्छोभाढ्यादित्यर्थः । तेन "ब्लूं" बीजम् । उक्तं च उद्धरेत् प्रथमं रेफं तदधः कुटिलान्तगम् ।
तदधश्चावनीबीजं षष्ठस्वरसमन्वितम् ।
ऊर्ध्वमर्धेन्दुविन्द्वाढ्यं कुर्वीत परमेश्वरीति ।

कुटिलान्तगो बकारः ।

कवर्गेति। कामेशी कामबीजम्। मेरूर्ध्वगं हकारः। चतुःशत्यां रेफोऽप्युक्तः। " अधस्तान्नाभसं बीजं आग्नेयस्थं समुद्धरे " दित्यभिधानात्। वस्तुतो रेफयुक्तमेव कामेशीबीजमग्रे तथैवोद्धारात्। वाग्देवी कामेश्वरी। " पातु कामेश्वरी च मा " मिति स्तवराजस्वरसात्। क्वचित्तथैव पाठः।

चवर्गेति। धान्तं तवर्गान्त्यम्। नीरं वकारः। क्ष्मा लकारः। टवर्गेति। इन्द्रो लकारः। इन्दुरर्धचन्द्रः। विन्दुरनुस्वारः। तवर्गेति। चवर्गस्य तृतीयं मकारश्च। अग्नी रेफः। तदाद्यं तद्युक्तमित्यर्थः। उक्तं च

"जकारं कालमारूढं तदधो ज्वलनाक्षरम्।
चतुर्थस्वरसंयुक्तं विन्दुनादविभूषितम्॥" इति

कालो मकारः। पवर्गेति। व्योम हकारः। चन्द्रः सकार। तोयं वकारः। अग्निसख्यं यकारः। " वायव्यमुग्रोद्भिन्न " मिति चतुःशतीस्वरसात्। उपरो दीर्घ ऊकारः। यवर्गेति। जान्तो झकारः। " उद्धरेन्मेदिनीवर्गाच्चतुर्थ " मित्यभिधानात्। माया इकारः। क्षमेति क्षकारमकारौ तदन्ते रेफः। तुर्यस्वरमीकारः।

तथा षोढान्यासं ततः कुर्याद् येन साक्षाच्छिवो भवेत्।

कामेश्वरतन्त्रे गणेशः प्रथमो न्यासः द्वितीयश्च ग्रहैर्मतः।
नक्षत्रेन तृतीयः स्याद् योगिनीभिश्चतुर्थकः।
राशिभिः पञ्चमः प्रोक्तः षष्ठः पीठैर्निगद्यते॥
एवं यो न्यस्तदेहस्तु संपूज्यः सर्वयोगिभिः।
नास्त्यस्य पूज्यो लोकेषु पितृमातृमुखो जनः॥
स एव पूज्यः सर्वेषां स स्वयं परमेश्वरः।
षोढान्यासविहीनो यः प्रणमेद् देवि पार्वति।
अचिरान्मृत्युमाप्नोति नरकं च प्रपद्यते॥

ज्ञानार्णवे विघ्नेश्वरस्तथा श्रीश्च विघ्नराजस्तथा क्रिया।
विनायकस्तथा तुष्टिः शान्तियुक्तः शिवोत्तमः॥
विघ्नहृद् पुष्टियुक्तश्च विघ्नकृच्च सरस्वती।
विघ्नराट् रतियुक्तश्च मेधाद्यो गणनायकः॥
एकदन्तश्च कान्तिश्च द्विदन्तः कामिनीयुतः।

गजवक्त्रो मोहिनी च निरञ्जनजटे ततः ॥
कपर्दभृत्तथा तीव्रा दीर्घवक्त्रस्ततः प्रिये ।
ज्वालिनीसहितः पश्चान्नन्दासंकर्षणौ ततः ॥
वृषध्वजश्च सुरसा गणनाथेन संयुता ।
कामरूपिणिका पश्चात् गजेन्द्रः शुभ्रया युतः ॥
सूर्पकर्णस्तु जयिनी त्रिनेत्रः सत्यया युतः ।
लम्बोदरश्च विघ्नेशी महानन्दः स्वरूपिणी ॥
चण्डमूर्त्तिः कामदा च सदाशिवयुता ततः ।
मदविह्वलनाम्नी च आमोदविकटे ततः ॥
दुर्मुखश्च तथा पूर्णा सुमुखो भूतिमा तथा ।
प्रमोदश्च तथा भूमिरेकपादस्तथा सती ॥
द्विजिह्वश्च रमायुक्तः सुरश्चैव तु मानुषी ।
वीरेण सहितः पश्चात् शैलजे मकरध्वजा ।
षण्मुखश्च विवर्णा च वरदो भ्रुकुटीयुतः ।
वामदेवस्तथा लज्जा वक्रतुण्डस्ततः परम् ॥
दीर्घघोणान्वितः पश्चात् द्विरण्डकधनुर्धरे ।
सेनानी मालिनीयुक्तो ग्रामिणी रात्रिसंयुतः ॥
तमसश्चन्द्रिकायुक्तो विमलश्च शशिप्रभा ।
मत्तवाहनलोले च जटी च चपलेक्षणा ॥
मुण्डीरुचा ततः पश्चात् षड्विन्दुर्भगयान्वितः ।
वरेण्यश्चैव सुभगा वृषकेतुस्तथा शिवा ॥
भक्ष्यप्रियश्च दुर्गा च मेघनादश्च कामिनी ।
गजेशः कालकुब्जा च गणेशो विश्वहारिणी ॥
मातृकार्णैर्न्यसेद् देवि ग्रहन्यासं ततश्चरेत् ।
रविमुख्यान् कामरूपान् सर्वाभरणभूषितान् ॥
स्वरैरर्कं हृदि न्यस्य कवर्गेण विधुं ततः ।
भ्रूमध्ये च चवर्गेण भौमं नेत्रत्रये न्यसेत् ॥
टवर्गेण बुधं हृत्सु तवर्गेण बृहस्पतिम् ।
हृदयोपरि देवेशि पवर्गेण गले भृगुम ॥

यवर्गेण शनिं नाभौ राहुं वक्त्रे शवर्गकम् ।
लक्षाभ्यां पादयोः केतुं न्यसेद् देवं वरानने ॥
अथ नक्षत्रवृन्दस्य न्यासं कुर्यात् सुखावहम् ।
युग्मं युग्मं तथायुग्मं युग्मयुग्मेन रोहिणी ॥
एकमेकं तथा द्वन्द्वमेकं पुष्याःतमुच्यते ।
ललाटे लोचने पश्चात् वामदक्षिणकर्णयोः ॥
नसोर्द्वये च देवेशि तथा कण्ठे न्यसेत् क्रमात् ।
पुष्यान्तं च प्रविन्यस्य युगाभ्यां चैव सर्पिकम् ॥
दक्षस्कन्धे धङाभ्यां च मघां स्कन्धे द्वितीयके ।
च पूर्वफल्गुनी दक्षकूर्परे छजसंयुताम् ॥
उत्तराफल्गुनीं वामे कूर्परे विन्यसेत् प्रिये ।
झञवर्णयुतं हस्तं मणिबन्धेऽथ दक्षिणे ॥
चित्रां टठाभ्यां वामे च मणिबन्धे न्यसेच्छिवे ।
डकारेण युतां स्वातीं दक्षहस्ते प्रविन्यसेत् ॥
ढणयुक्तां विशाखां तु वामहस्ते प्रविन्यसेत् ।
तथद्विरनुराधां तु नाभौ न्यस्य तु पार्वति ॥
धकारेण युतां ज्येष्ठां न्यसेद्दक्षकटौ शिवे ।
नपफैश्च तथा मूलं न्यसेद् वामकटौ शिवे ॥
पूर्वाषाढ़ां बकारेण दक्षोरौ विन्यसेत्ततः ।
भकारेणोत्तराषाढ़ा वामोरौ तदनन्तरम् ॥
मकारयुक्तां श्रवणां दक्षजानुनि विन्यसेत् ।
यरस्थितां धनिष्ठां च वामजानुनि विन्यसेत् ॥
लकारेण ततो देवि शतभिषां विन्यसेत् प्रिये ।
दक्षजंघागतां पश्चात् पूर्वभाद्रपदां न्यसेत् ॥
बशावर्णस्थितां न्यस्येद् वामजंघागतां क्रमात् ।
षसहा उत्तराभाद्रपदां दक्षिणपादके ॥
क्षकारेण ततो विन्दुसर्गाभ्यां देवि रेवतीम् ।
वामपादे प्रविन्यस्य योगिनीन्यासमाचरेत् ॥

युग्ममिति द्विद्विवर्णमित्यर्थः। एवं द्वाभ्यां द्वाभ्यां वर्णाभ्यां अश्विन्यादित्रयम्। युग्मयुग्मं वर्णचतुष्कम्। एकं ककारः। पुष्यान्तं पुष्यगतम्। यद्वा एवं पुष्यपर्यन्तमित्यर्थः। सर्पिकमश्लेषा।

तथा
डां डींबीजद्वयं चोक्त्वा डरलाः कसहाः प्रिये।
डाकिनी राकिनी चैव लाकिनी काकिनी तथा॥
साकिनी हाकिनी चैव योगिन्योऽमितसिद्धिदाः।
वामकर्णेन्दुनादाढ्यां डाकिन्यै नम इत्यपि।
स्वरान्ते च प्रवक्तव्यमन्ते रक्षः पदद्वयम्॥
त्वगात्मने कण्ठदेशे विशुद्धे बिन्यसेत् प्रिये।
कचवर्णौ राकिनीं तु टकाराद्यक्षरैः क्रमात्॥
पूर्ववद्बीजसंयुक्तै रसृगात्मा तु संवदेत्।
अनाहते न्यसेत् पश्चात् डकारादिफकारगैः॥
लाकिनीं च तथा देवि मांसात्मा मणिपूरके।
बलवर्णैः काकिनीं तु स्वाधिष्ठाने तथाविधाम्॥
मेदस्वरूपां विन्यस्य वसवर्णैस्तु साकिनीम्।
अस्थिपूर्वां च पूर्वोक्तबीजपूर्वां प्रविन्यसेत्।
हक्षवर्णस्थितां तद्वन्मज्जां हाकिनिकां यजेत्।
भ्रुवोर्मध्ये महेशानि न्यासोऽयं योगिनीयुतः॥

डां डीं इति डरलकसहानां षण्णां वर्णानां षट्कक्रमेणान्वयः। तेन रां रीं लां लीं इत्यादि। ततो नामादिवर्णं षष्ठस्वरविन्दुयुक्तं बीजमित्यर्थः।
( डां डीं इत्युपलक्षणम्। रां रीं लां लीं इत्यादि डरलाः कसहाः वामकर्णेन्दुनादाढ्या इत्यन्वयः। तेन डूं रूं इत्यादिबीजम्। स्वरान्ते डां डीं डूं डाकिन्यै नम इति वक्तव्यम्। तदन्ते रक्षरक्ष त्वगात्मने नम इति प्राचामाशयः। )
स्वरान् सविन्दून् उक्त्वा डां डीं इत्यन्ते षष्ठस्वरयुक्तं डकारं वदेत्। ततो डाकिन्यै नमः रक्षरक्ष त्वगात्मने नम इत्युच्चरेदित्यर्थः। एवमन्यत्रापीति प्राञ्चः। वस्तुतो डां डीं डूं इत्यन्ते स्वराः ततो डाकिन्यै नमः तत्रैव स्वरान्ते प्रवक्तव्यमित्यन्वयात्। ततो रक्षरक्ष त्वगात्मने नमः इति मन्त्रः यथाश्रुतक्रमानुरोधात्। कचेति कवर्गचवर्गौ टकारठकारौ चेति द्वादशवर्णेषु राकिनीत्यर्थः।

बलवर्णेति बकारादिलकारान्तमित्यर्थः । एवमन्यत्र । साकिनीन्यासश्च मूलाधारे परिशेषात् ।

तथा राशिन्यासं ततः कुर्यात् सर्वरक्षाकरं नृणाम् ।
अकारादिचतुष्केन विन्यसेत् सुरवन्दिते ॥
मेषं दक्षिणगुल्के च ततो द्वन्द्वेन वै वृषम् ।
न्यसेज्जानुनि वेदैस्तु मिथुनं वृषणे ततः ।
द्वाभ्यां कर्कटकं कुक्षौ द्वाभ्यां स्कन्धे च सिंहकम् ।
अनुस्वार - विसर्गाभ्यां शवर्गेण च कन्यकाम् ॥
दक्षिणे तु शिरोभागे विन्यसेद् वीरवन्दिते ।
तथा वामशिरोभागे कवर्गेण तुलाभृतम ॥
चवर्गेण तथा स्कन्धे वृश्चिकं विन्यसेच्छिवे ।
टवर्गेण तथा कुक्षौ धन्विनं विन्यसेच्छिवे ॥
मकरं तु तवर्गेण वृषणे विन्यसेत् क्रमात् ।
पवर्गेण तथा कुम्भं वामजानुनि विन्यसेत् ॥
यवर्गेण क्षकारेण मीनं वामे तु गुल्फके ॥
अथ पीठानि विन्यस्येन्मातृकार्णैरनुक्रमात् ।
कामरूपं महापीठं पीठं वाराणसीं ततः ॥
नेपालं च तथा पीठं पीठं वै पौण्डवर्धनम् ।
परस्थिरं तथा पीठं चरस्थिरमतः परम् ॥
पूर्णशैलं महापीठं अर्बुदं च ततः परम् ।
आम्रातकेश्वरं पीठमेकाम्रं च ततः परम् ॥
त्रिस्रोतसं महापीठं कामकोटमनन्तरम् ।
कैलासं भृगुकेदारं पीठं चन्द्रपुरं ततः ॥
श्रीपीठं च तथैङ्कारं जालन्धरमतः परम् ।
मालवं च तथा पीठं कुलान्तं देविकोटकम् ॥
गोकर्णं च महापीठं मारुतेश्वरमेव च ।
अट्टहासं च विरजं राजगृहं महापथम् ॥
पीठं कोलगिरिप्रोक्त - मेलापुरमतः परम् ।
कामेश्वरमहापीठं महापीठं जयन्तिका ॥

पीठमुज्जयिनीं चैव चरित्राक्षीरिकाभिधम् ।
हस्तिनापुरकं पीठमुड्डीशं च प्रयागकम् ॥
षष्ठीशं च तथा पीठं मायापुरमजेश्वरम् ।
मलयं च महापीठं श्रीशैलं मेरुवागिरौ ॥
माहेन्द्रं वामनं चैव हिरण्यपुरमेव च ।
महालक्ष्मीमयं पीठमुड्डियानमतः परम् ॥
षोढान्यासं महादेवि न्यस्त्वा साक्षाच्छिवो भवेत् ।
अथ कामान् न्यसेन्मन्त्री दाडिमीकुसुमप्रभान् ॥
न्यसेत् कामरती पश्चात् कामिनस्तु परेश्वरीम् ।
कान्तश्च कामिनीयुक्तः क्रान्तो वै रोहिणीयुतः ॥ (मोहिनीयुतो वा
कामघ्न - कमले तद्वत् कामचारी विलासिनी ।
कर्णकल्पलते तद्वत् कोमल - श्यामले तथा ॥
कामवर्धकसंयुक्ता विज्ञेया तु शुचिस्मिता ।
कामश्च विस्मयायुक्तो विशालाक्षीयुतो रमः ॥
विमणो लेलिहायुक्तो रतिनाथदिगम्बरे ।
रतिप्रियश्च रामा च रात्रिनाथश्च कुब्जिका ॥
स्मरेशेन युता कान्ता रमणो नित्यया युतः ।
निशाकरश्च कल्याणी नन्दनो भोगिनी तथा ॥
नन्दीशःकामदायुक्तो मदनश्च सुलोचना ।
सुलावण्यायुतो देवि तथानन्दयिताभिधः ॥
निशाचरश्च मर्दन्या रतिहासस्ततः परम् ।
कलहप्रियया युक्तः पुष्पधन्वा च कांक्षिणी ॥
महाधनुश्च सुमुखी मानिनीनीलिमायुतः । (ग्रामणी वा)
भीमश्च जटिलायुक्तो भ्रममाणश्च पालिनी ॥
भ्रमरः शिखिनीयुक्तो भ्रान्तमुग्धे ततः परम् ।
भ्रामिणी रमया युक्तो भृगुर्भूमा ततः परम् ॥
भ्रान्तश्च मारलोला च भ्रमावहसुचञ्चले ।
मोहनो दीर्घजिह्वा च मोचकश्च तथा मतिः ॥
तथा मुग्धश्च लोलाक्षी मोहवर्धनभञ्जिनी ।
मोहकश्च चपेटा च मन्मथो नाथया युतः ॥

मतङ्गमालिनीयुग्मं भृङ्गनायकहंसिनी ।
गायनेन समायुक्ता तथा वै विश्वतोमुखी ॥
जननन्दिनिकायुक्ता गीतिश्च तदनन्तरम् ।
नर्तकः सह रङ्गिन्या खेलः कान्तिसमन्वितः ॥
उन्मत्तकलकण्ठे च मत्तकण्ठे वृकोदरी ।
मेघः यामान्वितो देवि विमलः श्रीक्रमाच्छिवे ॥
मातृकार्णक्रमान्न्यस्येत् त्रैलोक्यक्षोभको भवेत् ।

अथ नवयोनिन्यासः ॥

तद्यथा　बालया त्रिपुरेशान्या नवयोन्यङ्कितं न्यसेत् ।
श्रोत्रयोश्चिबुके चैव शंखास्येषु दृशोर्नसि ॥
अंसद्वये च हृदये न्यसेत् कूर्परकुक्षिके ।
जानुन्धुपादगुह्येषु पार्श्वहृत्सु स्तनद्वये ॥
सकण्ठे नवयोन्याख्यं न्यसेद् बीजत्रयात्मकम् ।

दक्षिणामूर्तितन्त्रे सुव्यक्तमेतत् ।

तथा　पुनर्बालां समुच्चार्य चतुरस्रं च चिन्तयेत् ।
गोलकन्यासयोगेन श्रीचक्रं परिचिन्तयेत् ॥
षट्चक्रेषु ललाटे च सीमन्ते च शिरोबिले ।
नवस्थानानि संकल्प्य न्यसेद् देवि ततः परम् ॥
श्रीविद्यां ब्रह्मरन्ध्रे च पृष्ठतो गुरवः क्रमात् ।

एवं श्रीचक्रदेवतानां विन्यासो नास्ति मानाभावात् । श्रीचक्रं परिचिन्तयेदित्यभिधानात् । पद्धतिषु तल्लिखनमबोधात् । अतएव तन्त्रादौ तत्संकथापि न श्रूयते । चतुःशत्यां तासां पूजनमात्रमेवोक्तम् । आचारोऽपि गड्डलिकाप्रवाहवत् । अतएव वशिन्यादिन्यासस्य प्रागभिधानमन्यथा श्रीचक्रान्तर्भावेनैव तल्लाभसंभवात् । यदि वा विन्यासः तदा हृदि चक्राणि परिकल्प्य पूजाक्रमोक्तस्थानेषु कर्त्तव्यः स्थानान्तरानभिधानात् । वस्तुतस्तु आधारादिषु योगिनीन्यास एव चक्रन्यासः स च समुदायेन प्रत्येकं वेत्यन्यदेतत् ।

तथा　तिथिनित्यास्ततो देवि मातृकास्वरसंयुता ।
मातृका विन्यसेद् वक्त्रे सर्वसौभाग्यदाः क्रमात् ॥

नित्यान्यासे तु स्वरातिरिक्तमन्त्रसंबन्धो नास्ति मानाभावात् पूजायामेव मन्त्रोपदेशात् न्यासेऽपि समुच्चय एवेति प्राञ्चः ।

तत्रादौ प्रथमा नित्या महात्रिपुरसुन्दरी ।
कामेश्वरी समाख्याता तथैव भगमालिनी ॥
नित्यक्लिन्ना च भेरुण्डा तथा विन्ध्यनिवासिनी ।
वज्रेश्वरी च दूती च त्वरिता कुलसुन्दरी ॥
नित्या नीलपताका च विजया सर्वमङ्गला ।
ज्वालामालिनी विचित्रास्ताः पञ्चदश प्रकीर्त्तिताः ।

कुलसुन्दरीत्यत्र विमलेति क्वचित् पाठः ।

शृणु देवि प्रवक्ष्यामि नित्यामण्डलमुत्तमम् ।
बालां तारं च हृत्प्रान्ते कामेश्वरि पदं वदेत् ॥
इच्छाकामफलप्रान्ते प्रदे सर्वपदं वदेत् ।
ततः सत्त्वर संब्रूयात् करिसर्वजगत्पदम् ॥
क्षोभणान्ते करि ब्रूयात् हूंकारत्रयमालिखेत् ।
पञ्चवाणान् समालिख्य संहारेण कुमारिकाम् ॥
एषा कामेश्वरी नित्या प्रसङ्गात् कथिता शिवे ।
वाग्भवं भगशब्दान्ते भगे भगिनि चालिखेत् ॥
भगोदरि भगान्ते च भगमालिनि भगावहे ।
भगगुह्ये भगप्रान्ते योनिप्रान्ते भगाङ्किते ॥
निपातिनि च सर्वान्ते ततो भगवशंकरि ।
भगरूपे ततो लेख्यं नीरजायतलोचने ॥
नित्यक्लिन्ने भगप्रान्ते स्वरूपे सर्व चालिखेत् ।
भगानि मे चालयान्ते वरदेऽथ समालिखेत् ॥
रेते सुरेते भगवत् क्लिन्ने क्लिन्नद्रवे ततः ।
क्लेदय द्रावयामोघे सर्वसत्त्वान् भगेश्वरि ॥
आत्मने भगविच्चैव क्षुभ क्षोभय सर्वतः ।
सत्त्वान् भगेश्वरि ब्रूयात् वाग्भवं ब्लूं जमादिकम् ॥
भौं ब्लूं सौं ब्लूं च हैं ब्लूं च ह्रैं क्लिन्ने च ततः परम् ।
सर्वाणि च भगान्यन्ते मे वशं चानयेति च ॥
स्त्रीबीजं च हरप्रान्ते बलेमात्मकमक्षरम् ।
भुवनेशीं समालिख्य विद्येयं भगमालिनी ॥

भौमिति भकारमकारौ विलोमदन्तस्वरविन्दुयुतौ हकारौ च विलोमौष्ठस्वर-विन्दुयुतौ एवं चत्वारि बीजानि मध्ये मध्ये च बलऊं बीजमित्यर्थः। भेमिति पाठस्तेन जम्भे इति रूपमिति केचित्।

परावीजं समुच्चार्य नित्यक्लिन्ने मदद्रवे।
अग्निजायान्वितो मन्त्रो नित्यक्लिन्नेयमीरिता॥
प्रणवं पूर्वमुच्चार्य तथाङ्कुशयुगं वदेत्।
तन्मध्ये विलिखेद् देवि भरेमात्मकमक्षरम्।
चवर्गमन्त्यहीनं तु विलिखेद् वह्निसंस्थितम्॥
चतुर्दशस्वरोपेतं विन्दुनादाङ्कितं पृथक्।
वह्निजायान्विता विद्या भेरुण्डा देवता भवेत्॥

भरेमिति स्वरूपं तेन भ्रौं इति बीजम्। एवमुत्तरत्रापीति निबन्धारः। वह्निवासिनीति पाठो न युक्तः। विन्ध्याद्रिवासिनीति स्तवराजस्वरसात्।

यथा　परां विलिख्य विन्ध्यान्ते वासिन्यै नम इत्यपि।
अष्टार्णोऽयं महेशान्या देवता विन्ध्यवासिनीति मन्त्रः॥
नित्यक्लिन्नां समालिख्य मुखे तारं समालिखेत्।
हृल्लेखान्ते फरेमन्ते चन्द्रबीजं विसर्गवत्॥
चतुर्दशाक्षरी विद्या देवी वज्रेश्वरी भवेत्।
पराबीजं समुच्चार्य शिवदूतीं च ङेयुताम्।
हृदन्तोऽयं मनुर्देवि दूती सर्वसमृद्धिदा॥
ओंकारं बीजमुच्चार्य परां कवचमालिखेत्।
खे च क्षेः समालिख्य स्त्रीबीजं च समालिखेत्॥
हूंकारं क्षेपरा चास्त्री विद्येयं त्वरिता भवेत्।
बालया पुटितां कुर्यात् तथा वै नित्यभैरवीम्।
पञ्चवाणांश्च विमला नित्या शक्राक्षरी भवेत्॥

नित्यभैरवी शिवशक्तिबीजमतएव शम्भुनेत्यादिनोक्तो मन्त्र इति निबन्धारः। डरौद्रमामादनोबीजमित्यनेनोक्तो मन्त्र इति तत्त्वम् तस्यैव नित्यभैरवीत्वेनो-क्तत्वात्।

पञ्चाक्षरी बाणबीजैर्नित्येयमपरा भवेत्।
प्रणवं भुवनेशानी फरेमात्मकमक्षरम्॥

ब्लूमात्मक द्वितीयं तु भुवनेश्यङ्कुशं ततः ।
नित्यशब्दं समुद्धृत्य संयोज्या तु मदद्रवा ॥
कवचं चाङ्कुशं दद्यान्नित्या नीलपताकिनी ।

मदद्रवेत्यन्वयानुरोधात् संबोधनव्यपदेश इति प्राञ्चः । संबोध्या तु मदद्रवेति क्वचित् पाठः ।

वान्तं कालसमायुक्तं रेफशक्रस्वरान्वितम् ।
विन्दुनादात्मकं देवि नित्येयं विजया भवेत् ॥

रेफे ह्यत्र तत इति क्वचित्पाठः ।

चन्द्रवारुणसंयुक्तं तारबीजं समालिखेत् ।
चतुर्थ्यन्तं ततो देवि विलिखेत्सर्वमङ्गलाम् ।
हृदन्तोऽयं मनुर्देवि नित्येयं सर्वमङ्गला ॥
तारं हृद् भगवत्यन्ते ज्वालामालिनि देवि च ।
द्विरुच्चार्य च सर्वान्ते भूतसंहारकारिके ।
जातवेदसि संलिख्य ज्वलेति पदयुग्मकम् ।
ज्वलेति प्रज्वलद्वन्द्वं हूंकारत्रयमालिखेत् ॥
वह्निबीजत्रयं हूं च अस्त्रस्वाहान्वितो मनुः ।
इयं नित्या महादेवि ज्वालामालिनिकापरा ॥

द्विरुच्चार्येति देवीत्यन्वितं उत्तरान्वितमिति केचित् । ज्वलेतीति त्रिरावृत्तं ज्वलेतिपदमित्यर्थः । ( त्रयमित्यत्र द्वयमिति बहुषु पाठः । )

कवर्गान्तं स्वरान्तं च शक्रस्वरविभूषितम् ।
विन्दुनादकलाक्रान्तं विचित्रा परमेश्वरी ॥

कवर्गान्तश्चकारः स्वरान्तः ककारः ।

अकारादिषु सर्वेषु स्वरेषु क्रमतो यजेत् ।
अः स्वरे परमेशानीं श्रीविद्यां विश्वमातृकाम् ॥
स्वरवद् विन्यसेद् विद्यां नीरजायतलोचने ।
प्रकटाद्या न्यसेत् पश्चादाधारादिषु मन्त्रवित् ॥

मन्त्राणामुद्धारः पद्धतावेव सुव्यक्तं द्रष्टव्यः ॥

अथ योगिनीन्यासश्चाधारादिषु शिरोन्तेषु नवसु स्थानेषु प्रकटयोगिन्यादिपदेनैव श्रीचक्रन्यासस्य प्रागेवोक्तत्वात्।[1] वस्तुतस्तु अयमेव चक्रन्यासः योगिनीनामेव चक्रदेवतात्वात्। तच्च समुदायेन प्रत्येकं वेत्यन्यदेतत्।

तथा स्थितिन्यासं ततः पश्चात् श्रीविद्याषोडशाक्षरैः।
पञ्चाङ्गुलीषु करयोः ब्रह्मरन्ध्रे मुखे हृदि॥
एवं विन्यस्य नाभ्यादिपदान्ते चैकमद्रिजे।
गलादिनाभिपर्यन्तमपरं च ततः परम्॥
ब्रह्मरन्ध्रादिकण्ठान्तमेकं विन्यस्य पादयोः।
अङ्गुलीषु च विन्यस्य न्यासोऽयं स्थितिकारकः।

अत्र करयोरङ्गुलीषु वर्णपञ्चकम्। एवं पादयोरङ्गुलीष्वपि न तु करादावपि पृथक् न्यासः। तथैव समावेशात्।

तथा सृष्टिन्यासं ततः कुर्यात् सर्वसिद्धिप्रदायकम्।
ब्रह्मरन्ध्रालिकेनेत्रश्रुतिघ्राणौष्ठकेषु च॥
दन्तान्तकोर्ध्वके देवि जिह्वायां चैव कूर्पके।
पृष्ठसर्वाङ्गहृदयस्तनकुक्षिषु लिङ्गके॥
श्रीविद्यार्णैर्न्यसेद् देवि मन्त्री सर्वसमृद्धये।
सर्वाङ्गे च न्यसेत्पश्चात् व्यापकत्वेन सुन्दरि॥

अलिकं ललाटदेशः। नेत्रादावेकैकवर्णन्यासः। दन्तेति अधउपरिदन्तपंक्त्योरित्यर्थः। दक्षिणामूर्त्तितन्त्रे काननाक्षिश्रुतिघ्राणदन्तौष्ठेषु मुखान्तरे।
नेत्रयोर्वदने वक्त्रे न्यसेत् सौभाग्यहेतवे॥

कं शिरः। अक्ष्यादिषु द्विद्विवर्णन्यासः। ओष्ठे एकमेव अधरानुपन्यासात् अन्यथा समावेशाभावात्। आननाक्षीति सुकरः पाठः।

तथा कसीमन्तललाटेषु भ्रूयुगघ्राणनेत्रयोः।
करसंधिनखाग्रेषु षोडशार्णान् क्रमान्न्यसेत्॥

करसंधीति करद्वयं तत्संधयः षट् तदग्रद्वयं चेति दश स्थानानि। भ्रूयुगादावेकैकवर्णन्यासः। एवं वचनान्तरेऽपि अन्यथा समावेशासंभवात्।

तथा शिरोवदनहृद्वक्त्रेजिह्वापत्संधिकेषु च।
षोडशार्णान् न्यसेद् वक्त्रे स्वरस्थानेषु च क्रमात्॥
व्यापकं गोलकं कुर्यादित्यादिकमन्यत्र विस्तरः।

---

१— एतन्मते नित्यान्यासानन्तरं योगिनीन्यासः स च पूर्ववत्। अथ दक्षिणामूर्त्तितन्त्रे श्रीविद्यासु विशेषात् इति च पाठः।

तथा प्राणानायम्य विधिवत् मुद्रासन्नद्धविग्रहः।
क्षोभणद्रावणाकर्षवश्योन्मादमहाङ्कुशाः॥
खेचरीबीजयोन्याख्या नव मुद्रास्ततः क्रमात्।

मुद्राबीजानि चाग्रे वाच्यानीत्यलं विस्तरः।

शेषे त्रिखण्डान्यासस्तत्पूजनं चेति निबन्धारः। पूजासु षोढान्यासादीनामनावश्यकत्वम्। तदुक्तं कामेश्वरतन्त्रे

षोढान्यासं समारभ्य मूलदेव्यादिकं तथा।
करशुद्ध्यादिकं चैव साधकेन सुसिद्धये॥
प्रातःकालेऽथवा रात्रौ पूजायां होमकर्मणि।
जपकालेऽथवा तेषां विनियोगः पृथक् पृथक्॥
पूजाकाले समस्तं वा कृत्वा साधकपुङ्गवः।
षट्त्रिंशत्तत्त्वपर्यन्तमासनं कल्पयेदिति॥

ज्ञानार्णवे शृणु देवि प्रवक्ष्यामि यजनं चान्तरं महत्।
मूलादिब्रह्मरन्ध्रान्तं विसतन्तुतनीयसीम्॥
उद्यत्सूर्यप्रभाजाल-विद्युत्कोटिप्रभामयम्।
अशेषजगदुत्पत्तिस्थितिसंहारकारकम्॥
ध्यायन् यथामनो देवि निश्चलं जायते तथा।
सहजानन्दसंदोहमन्दिरं भवति क्षणात्॥
समाधिर्जायते तत्र संज्ञाद्वयविजृम्भितः।
सुसंप्रज्ञातनामैको ह्यसंप्रज्ञातनामकः॥

इत्याद्यलं विस्तरः।

अन्तर्यागविधिं कृत्वा बहिर्यजनमारभेत्।

ततो वक्ष्यमाणरूपां देवीं ध्यायेत्।

तथा एवं ध्यात्वा परावस्थां वहन्नाडीपुटक्रमात्।
आगत्य चक्रमध्ये तु मुद्रया च त्रिखण्डया॥
संस्थितां चिन्तयेद् देवीं श्रीपीठान्तर्निवासिनीम्।

आवाहनं च पूर्वोक्तावाहनमन्त्रेण नमोन्तेन।

महात्रिपुरमुद्रां तु स्मृत्वावाहनमुद्रया।
विद्ययावाह्य सुभगे नमस्कारनियुक्तया॥

इति चतुःशतीदर्शनात्। मूर्त्तिकल्पनमासनदानं च मूलेनैव। "दद्यादासनं मूलेन मूर्त्तिं मूलेन कल्पये" दिति वाराहीतन्त्रदर्शनात्।

मुद्राः संदर्शयेत्तत्र तर्पणैस्तु त्रिधा यजेत्।
संयोगं कल्पयेद् देहे देव्याश्च परमेश्वरि ॥
गन्धपुष्पाक्षतादीनि देव्यै सम्यङ् निवेदयेत्।

अङ्गपूजादौ सर्वत्र विशेषानुक्तौ ऐं ह्रीं श्रीं ह्रीं श्रीं इत्येव वा मन्त्रः।

तदुक्तं मायालक्ष्मीमयं बीजं युग्मयुग्मक्रमेण तु।
कथितं योजयेद् देवि त्रयं वा परमेश्वरि ॥
संपुटक्रमयोगेन चाथवा वीरवन्दिते।
संयोज्य पूजयेत् सर्वाः क्रमाद् देवि वरानने ॥

पाद्यादिदानं तु पाद्यं निवेदयामीत्युक्त्वा "पाद्यं निवेदयामीति पाद्यादीनि निवेदये" दिति फेत्कारिणीतन्त्राभिधानात्।

उपचारैः षोडशभिः संपूज्य परदेवताम्।
तर्पणानि पुनर्दद्यात् त्रिवारं मूलमुच्चरन् ॥

एतस्मिन् समये देवि तिथिनित्यां प्रपूजयेत्।
कामेश्वर्यादिका देवि विचित्रान्ता वरानने ॥
प्रतिपत्पौर्णमास्यन्तास्तिथिरूपाः प्रपूजयेत्।
अनुस्वारान्तमात्रान्तविसर्गे षोडशीं यजेत् ॥
कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलम्।
विचित्राद्या वरारोहे यावत् कामेश्वरी भवेत् ॥

तथा विभाव्य च महात्र्यस्रं सव्यदक्षोत्तरक्रमात्।
अकाराद्यां ऋकारान्तां दक्षिणायां विचिन्तयेत् ॥
ततश्च पूर्वरेखायां दीर्घाकारादिपञ्चकम्।
विलिख्योत्तररेखायां शक्त्यादि विलिखेत्ततः ॥
अनुस्वारान्तमात्रान्तविसर्गे षोडशीं यजेत् ॥
वामावर्तेन देवेशि नित्याः षोडश पूजयेत्।
पुनः श्रीत्रिपुरादेवीं यजेत् सौभाग्यहेतवे ॥

तथा एतस्मिन् समये देवि गुरून् संपूजयेत्ततः।
मध्यप्राक्त्र्यस्रमध्येतु गुरुपंक्तिं त्रिधा यजेत् ॥

पराख्यान् पूजयेदादौ परापरविभक्तिकान् ।
ततो परान् त्रिधा देवि गुरून् संपूजयेच्छिवे ॥
दिव्यौघे तु परान् विद्धि सप्तसंख्यान् वरानने ।
आनन्दनाथशब्दान्ता विज्ञेया वीरवन्दिते ॥
परप्रकाशो देवेशि ततः परशिवो भवेत् ।
परशक्तिस्तथा देवि कौलेश्वर इति प्रिये ॥
शुक्ला देवी कुलेशानः कामेश्वर्यम्बिका भवेत् ।
मुनिसंख्यास्तु गुरवः पराख्या दिव्यरूपिणः ॥
भोगक्लीहस्तसमयो वेदाख्यः सहजस्तथा ।
परापराख्याः सिद्धौघे मानवौघं शृणु प्रिये ॥
गगनो विश्वविमलो मदनो भुवनस्तथा ।
नीला सात्मा प्रियः पश्चान्नागसंख्यास्तु मानवाः ॥
अपराः परमेशानि नियता अक्षरा इमे ।

एवं दिव्यौघादिपूजनं पृथगपास्तम् । तेषामेव परापरादिगुरुपत्त्वात् तत्तन्नामविशेषाज्ञाने परादिशब्देन पूजाविधानात् ।

मानवौघान्तिके पश्चात् स्वगुरुत्रितयं यजेत् ।
परमेष्ठी गुरुः पश्चात् गुरुः परमसंज्ञकः ॥
स्वगुरुश्च महेशानि पूजयेत् स्वगुरुत्रयम् ॥

तदुक्तं कामेश्वरतन्त्रे

वायव्यादि तथेशान्तं गुरुषट्कं समर्चयेत् ।
षण्णां चैव गुरूणां च रूपं वक्ष्याम्यनुक्रमात् ॥

परादित्रयं परमेष्ठ्यादित्रयं चेति षट्कम् । अथवा मानवौघान्ते एकं स्वगुरुमर्चयेत्

अज्ञातगुरुशिष्याणां कथयामि वरानने ।
गुरुभ्यो नमः उच्चार्य पादुकेभ्यो नमो वदेत ॥
गुर्वन्ते परमान्ते च गुरुभ्यो नम इत्यपि ।
एतेषां पादुकास्तद्वद् आचार्येभ्यो नमो वदेत् ॥
आचार्यपादुकास्तद्वत् पूर्वसिद्धास्तथा द्विधा ।
सामान्यगुरुशिष्याणां गुरुपंक्तिरियं भवेत् ॥

तथा

सर्वसंक्षोभणे चक्रे पूर्वाम्नायं प्रपूजयेत्।
सर्वरक्षाकरे चक्रे दक्षिणाम्नायमर्चयेत् ॥
मध्ये चक्रमये देवि पश्चिमाम्नायमर्चयेत् ।
नवचक्रेषु देवेशि कुवेराम्नायमर्चयेत् ॥
वैन्दवे परमेशानि मध्ये सिंहासनं यजेत् ।
श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ॥
त्रिशक्तिः सर्वसाम्राज्यलक्ष्मीः पञ्च समीरिताः ।
श्रीविद्या च परा ज्योतिः परा निष्कलशाम्भवी ॥
अजपा मातृका चेति पञ्चकोशाः समीरिताः ।
श्रीविद्या त्वरिता चैव पारिजातेश्वरी तथा ॥
त्रिकूटा पञ्चबाणेशी पञ्च कल्पलताः स्मृताः ।
श्रीविद्यामृतपीठेशी सुधाश्रीरमृतेश्वरी ।
अन्नपूर्णेति विख्याता पञ्च कामदुघा मताः ॥
श्रीविद्या बिन्दुलक्ष्मीश्च मातङ्गी भुवनेश्वरी ।
वाराहीति च संप्रोक्ताः पञ्चरत्नाः समीरिताः ॥
श्रीवीद्यापूजनस्थाने चक्रराजे महेश्वरि ।
सर्वसौभाग्यजननीपादुकां पूजयामि च ॥
इत्युच्चार्य परं ज्योतिः कोशाम्बां पूजयेत्ततः ।

एवं सर्वत्रामुकपादुकां पूजयामीत्युक्त्वैव पूजनमुक्तवचनबलात् । पूजयामीत्यन्ते नम इति वाच्यं "नमस्कारस्ततो भवे" दितिवचनात् ।

वाराही तन्त्रे

पादुकां पूजयामीति तदन्ते ठद्वयं न्यसेत् ।
एवं सर्वं विजानीयात् ततः पूजां समाचरेत् ॥

इत्युक्तमतएवार्घादौ स्वाहान्तमन्त्रलिखनं पद्धतिष्वबोधात् पूजामात्रे तद्बोधनात् पूजयामीति तत्राभिधानात् ।

तथा

शैवं तु दर्शनं देवि वैन्दवं पूजयेच्छिवे ।
परितो दर्शनं शाक्तं चक्रस्य परमेश्वरि ॥
भूबिम्बे पूजयेद् देवि ब्राह्मं दर्शनमुत्तमम् ।
शिवस्य वामतो देवि वैष्णवं दर्शनं यजेत् ॥

सृष्टिचक्रे यजेत् सूर्यदर्शनं कमलेक्षणे ।
स्थितिचक्रे च संपूज्यं बौद्धं दर्शनमुत्तमम् ॥

तर्पणं च मूलान्ते तर्पयामीत्युक्त्वा, तदुक्तं दक्षिणामूर्तितन्त्रे ।

पादुकां पूजयामीति नमस्कारस्ततो भवेत् ।
स्वाहा होमे तर्पणे च तर्पयामीति चोच्चरेत् ॥

तथा वाराहीतन्त्रे "मन्त्रान्ते तर्पयामीति तर्पणे विनियोजयेत्" । एवं चावाहन-पूजातर्पणादिषु सर्वत्र नमोन्तमन्त्रलिखनं पद्धतादावबोधात् ।

एवं संपूज्य सकलं श्रीविद्यां परितो यजेत् ।
तर्पणानि पुनर्दद्यात् त्रिवारं तत्त्वमुद्रया ॥
अङ्गुष्ठानामिकाभ्यां तु तत्त्वमुद्रेयमीरिता ।
पुष्पं विसर्जयेद् देवि मुद्रया ज्ञानसंज्ञया ॥
सर्वोपचारैराराध्य मुद्राः संदर्शयेत क्रमात् ।

यथावरणे "अङ्गपूजने अग्नीशाम्बरवायव्यमध्यदिक्ष्वङ्गपूजन" मित्यभिधानात् अग्निकोणानन्तरमीशकोणे रक्षःकोणानन्तरं वायव्यकोणे पूजनं वाचनिकत्वात् ।

तथा

त्रैलोक्यमोहने चक्रे प्रकटा योगिनीर्यजेत् ।
चतुरस्रे चतुर्द्वारे योगिन्यः सिद्धिदायिकाः ॥
अणिमां पश्चिमद्वारि दक्षभागे प्रपूजयेत् ।
लघिमामुत्तरद्वारि पश्चिमे पूजयेत्ततः ॥
पूर्वद्वारे च महिमामुत्तरे पूजयेत्ततः ।
ईशित्वसिद्धिं देवेशि दक्षिणद्वारि पूजयेत ॥
वशित्वसिद्धिं वायव्ये प्राकाम्यं शिवकोणके ।
आग्नेय्यां शुद्धिमिच्छां तु पूर्वभागेतु नैरृते ॥
प्राप्तिसिद्धिः सर्वकामसिद्धिश्च परमेश्वरि ।
अधोर्ध्वक्रमरूपेण ज्ञातव्या परमेश्वरि ॥
ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा ।
वाराही च ततः षष्ठी चामुण्डा सप्तमी भवेत् ॥
अष्टमी च महालक्ष्मीः पश्चिमादिक्रमेण तत् ।

अत्र पूजायां असिताङ्गभैरवयोगोऽपि बालामन्त्रे तथैवाभिधानात् । अत्रापि स्तवराजे पूजाक्रमे तथैव स्पष्टमभिधानात् ।

क्षोभणद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरीबीजयोन्याख्या त्रिखण्डाः पूजयेत् क्रमात् ॥
पञ्चबाणैः पञ्चमुद्रा करोमात्मकमक्षरम् ।
आद्यं तु रुद्रभैरव्या बीजं सादिशिवस्तथा ॥
केवलं वाग्भवं देवि क्रमेण तु चतुष्टयम् ।
चतुर्मुद्राः स्वबीजानि नवमुद्रा नवक्रमात् ॥

करेति क्रौं । सादीत्येवं सहंबीजमिति प्राञ्चः । हकारान्ते सकार इति तत्त्वम् बहुव्रीहेर्जवन्यत्वात् । दशमीं त्रिखण्डामप्यूर्ध्वं यजेदिति निबन्धारः ।

वामभागे च संपूज्या वायव्यादि च पूर्ववत् ।
एताः संपूज्य चक्रेशीं त्रिपुरां पूजयेत् पराम् ॥
सर्वसंक्षोभणीं मुद्रां दर्शयेत् कमलानने ।
सर्वाशापूरकं चक्रं षोडशारं ततोर्चयेत् ॥
कामाकर्षणिकां देवि बुद्ध्याकर्षणिकां तथा ॥
अहंकाराकर्षिणीं च शब्दाकर्षणरूपिणीम्
स्पर्शाकर्षणरूपां च रूपाकर्षणरूपिणीम् ।'
रसाकर्षकरीं चैव गन्धाकर्षणकारिणीम् ।
चित्ताकर्षणरूपां च धैर्याकर्षकरीं तथा ॥
स्मृत्याकर्षणरूपां च नामाकर्षकरीं तथा ।
बीजाकर्षणरूपां च आत्माकर्षणरूपिणीम् ॥
अमृताकर्षिणीं चैव शरीराकर्षकारिणीम् ।
पश्चिमादिविलोमेन षोडशारे स्वरान्विता ॥
कला नित्या यजेद् देवि चक्रेशीं त्रिपुरेश्वरीम् ।

पश्चिमादीति । मायालक्ष्मीबीजं सर्वत्र । तदुक्तं चतुःशतीनिबन्धे "मायालक्ष्मीकलाभिस्तु कलाषोडशकं यजेत्" । विलोमेन वामक्रमेणेत्यर्थः "षोडशारं महादेवि वाममार्गेण पूजये" दित्यभिधानात् ।

सर्वविद्राविणीं मुद्रां दर्शयित्वा निवेदयेत् ।
सर्वसंक्षोभणे चक्रे यजेदष्ट तथाविधाः ॥
अनङ्गकुसुमां प्राच्यां कवर्गेण तथार्चयेत् ।
दक्षिणे च चवर्गेण तथा चानङ्गमेखलाम् ॥

अनङ्गमदनां पश्चात् टवर्गेण च पश्चिमे ।
तवर्गेणोत्तरे पश्चादनङ्गमदनातुराम् ॥
वह्निकोणेऽनङ्गरेखां पवर्गेण प्रपूजयेत् ।
राक्षसेऽनङ्गवेगां च यवर्गेण प्रपूजयेत् ॥
वायव्ये तु शवर्गेण तथानङ्गाङ्कुशां यजेत् ।
ऐशान्यां लक्षवर्गेण पूज्यानङ्गादिमादिनी ॥
चक्रेश्वरीं ततो देवि यजेत् त्रिपुरसुन्दरीम् ।
सर्वाकर्षणमुद्रां च दर्शयेत् सुरवन्दिते ॥
चक्रपूजां प्रपूज्यैवं चतुर्थं चक्रमर्चयेत् ।
सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा ॥
सर्वाकर्षिणिका शक्तिः सर्वाह्लादकरी तथा ।
सर्वसम्मोहिनी शक्तिः सर्वस्तम्भनकारिणी ॥
सर्वजम्भनिका शक्तिः सर्वावेशकरी तथा ।
सर्वानुरञ्जिनी शक्तिः नवमी परमेश्वरि ॥
सर्वोन्मादनिका भूयः सर्वसर्वार्थसाधिका ।
सर्वसम्पत्तिपूर्णा च सर्वमन्त्रमयी तथा ॥
चतुर्दशारे शक्तिश्च सर्वद्वन्द्वक्षयङ्करी ।
सर्वसौभाग्यदे चक्रे पश्चिमादिविलोमतः ॥
वाममार्गेण देवेशि संपूज्याः सर्वसिद्धिदाः ।
चक्रेश्वरीं सिद्धिकरीं परां त्रिपुरवासिनीम् ॥
संपूज्य वश्यमुद्रां च प्रदर्श्य विनिवेदयेत् ।

निवेदयेदिति अनेन परिवारादिपूजनादिना महात्रिपुरसुन्दरीश्रीपादुका प्रीयतामिति वदेदित्यर्थः ।

सवार्थसाधके चक्रे दशारे पूजयेत् क्रमात् ।
सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदा तथा ॥
सर्वप्रियंकरी देवी सर्वमङ्गलकारिणी ।
सर्वकामप्रपूर्णा च सर्वदुःखप्रमोचिनी ॥
सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ।
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी ॥

पश्चिमादि विलोमेन दशारे पूजयेत् क्रमात् ।
चक्रेशीं सिद्धिदां देवीं पूजयेत् त्रिपुरां श्रियम् ॥
सर्वोन्मादनमुद्रां च दर्शयित्वा निवेदयेत् ।
सर्वरक्षाकरे चक्रे विगर्भा योगिनीर्यजेत् ॥
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ॥
सर्वाधारस्वरूपा च सर्वपापहरा तथा ।
सर्वानन्दमयी देवो सर्वरक्षास्वरूपिणी ॥
सर्वेप्सितार्थफलदा देव्यः सर्वसमृद्धिदाः ।
पश्चिमादिविलोमेन पूजयेच्छक्तिकोणके ॥
सर्वज्ञापुरतो देवि चक्रेशीं मालिनीं यजेत् ।
महाङ्कुशां महामुद्रां दर्शयित्वा निवेदयेत् ॥
सर्वरोगहरे चक्रे वसुकोणे सुरेश्वरि ।
रहस्ययोगिनीर्देवि वशिन्याद्यास्तु सिद्धिदाः ॥
पश्चिमादिविलोमेन पूर्वोक्ताः पूजयेत् क्रमात् ।

अत्र प्रागुक्तबीजानि मन्त्राः । तदुक्तं

एकैकं देवतानाम पूर्वबीजसमन्वितम् ।
अधस्ताद् देवदेवेशि वामावर्तेन पूजयेत् । इति

चक्रेशीं सिद्धिदामिष्ट्वा खेचरीं दर्शयेत् क्रमात् ।
सर्वसिद्धिप्रदे चक्रे त्रिकोणेऽभीष्टसिद्धिदे ॥
परापररहस्याख्ययोगिनीं परिपूजयेत् ।
पञ्चबाणान् समुच्चार्य कामकामेश्वरीमयान् ॥
जम्भनाख्या महेशानि पूजयेत् बाणदेवताः ।
धमात्मकं कामचापं द्वितीयं धनुरात्मकम् ॥
कामेश्वर्या मोहनाख्यं पूजयेच्चापदेवताः ।
द्वितीयं भुवनेशानि पाशयुग्मं वशंकरम् ॥
कामेश्वरस्य कामेश्यास्त्रैलोक्याकर्षणं प्रिये ।
चतुर्थं जम्भनं देव्या अङ्कुशं परिपूजयेत् ॥

बाणान् बाणमन्त्रान् प्रागुक्तान्। कामबाणधनुःपाशाङ्कुशान् यथाक्रमं जम्भन-मोहनवशीकरणस्तम्भनपदाद्यान् यजेदित्यर्थः। एवं बाणपूजने पद्धतो यां रां लां वां शां इति बीजपञ्चकलिखनमबोधात्। तदुक्तं

कामबाणान् महेशानि धनुस्तत्पाशमेव च।
जम्भमोहनवशस्तम्भपदैः सहितमङ्कुशम्।

द्वितीयं द्वितीयस्वर आकारः।

दक्षिणामूर्त्तितन्त्रे—तवर्गस्य चतुर्थं तु बिन्दुनादयुतं क्रमात्।
कामेशस्य च कामेश्याश्चापयुग्मं प्रपूजयेत्॥
अनन्तो बिन्दुनादाढ्यो हृल्लेखा पाशयुग्मकम्।
कामेशस्य च कामेश्याः क्रमेण परमेश्वरि॥
अङ्कुशास्त्रं समानं स्यादुभयोः पूजयेत् क्रमात्।
षडङ्गावरणं बाह्ये समीपे क्रमतोऽर्चयेत्॥
पश्चिमादिक्रमेणैव चतुर्दिक्षु प्रपूजयेत्।
कामेश्वरीं रुद्रशक्तिमाद्यकूटेन चाग्रतः॥
द्वितीयेन च कूटेन वज्राख्यानां तु वैष्णवीम्।
दक्षकोणे समभ्यर्च्य तृतीयेनैव पूजयेत्॥
भगमालां ब्रह्मशक्तिमुत्तरे विश्वमातृकाम्।
चक्रेश्वरीमम्बिकां च कामेशीं पुरतो यजेत्॥
चक्रमुद्रामुपास्याथ चक्रपूजां निवेदयेत्।
सर्वानन्दमये चक्रराजे बैन्दवसंज्ञके॥
ब्रह्मरूपे विश्वरूपे संविद्वेद्ये शृणु प्रिये।
कूटत्रयं समुच्चार्य सर्वविन्यासपूर्वकम्॥
समस्तदेवतारूपं सर्ववस्तुमयं यजेत्।
चक्रेशीमपि तामेव महात्रिपुरसुन्दरीम्॥
श्रीविद्यां षोडशार्णां च भुक्तिमुक्तिफलप्रदाम्।
समस्तचक्रचक्रेशीं सर्वागमसुसंस्कृताम्॥
सर्वाम्नायेश्वरीं विद्यालंकृतां ब्रह्मरूपिणीम्।
उपचारैर्यजेद् भक्त्या गन्धपुष्पाक्षतादिभिः॥

तर्पणानि पुनर्दद्यात् त्रिवारं मूलविद्यया ।
योनिमुद्रां प्रदर्श्याथ मुद्राः संदर्शयेत् क्रमात् ॥
वनस्पतिरसोपेतैः पवित्रै रन्यगन्धिभिः ।
दशाङ्गाद्यैर्धूपमयैर्धूपयेत् परमेश्वरीम् ॥
अभितो देविका-चक्रं दीपमाला घृताप्लुताः ।
कर्पूररचिताश्चैव तैलपूर्णा प्रदापयेत् ॥
धूपदीपैर्निवेद्याथ तर्पयेद् विधिवच्छिवे ॥
आरात्रिकविधिं कुर्याद् विधिवद् वीरवन्दिते ।
नैवेद्यं षड्रसोपेतं घृतपुष्पादिसंयुतम् ॥
संकल्प्य परमेशान्यै नित्यहोमविधिं चरेत् ।
मूलेन प्राणसहिता आहुतीः पञ्च होमयेत् ॥
षडाहुतीः षडङ्गानां नित्यहोमः समीरितः ।
उपविश्यासने रम्ये वामभागे ततः परम् ॥
मण्डलं चतुरस्रं तु तन्मध्ये विलिखेत् प्रिये ।
त्रिकोणवृत्तं व्याकोषं मण्डलं पूजयेत्ततः ॥
व्यापकान्ते मण्डलाय हृदन्ते वाग्भवं पराम् ।
मुखे कृत्वा पूजनीयं मण्डलं मनुना प्रिये ॥
एवं मण्डलमभ्यर्च्य मण्डलानां चतुष्टयम् ।
ईशानवह्निनैर्ऋत्यवायुकोणेषु पूर्ववत् ॥
मण्डलानि विधायाथ पूर्ववत् पूजयेत् प्रिये ।
पूर्ववद् बलिदानं च दद्यात् सर्वसमृद्धये ॥
बटुकाय महेशानि योगिनीनां च वल्लभे ।
गणेशक्षेत्रपालाभ्यां पूर्ववद् बलिमुत्सृजेत् ॥

व्याकोषं विकचपद्मं व्याकोषं व्यारकं व्योममण्डलमिति केचित् । पूर्ववत् बालामन्त्रवत् । बलिमन्त्रादिप्रपञ्चो बालामन्त्रे द्रष्टव्यः ।

तथा

वामभागे कृतस्याथ मण्डलस्योपरि क्षिपेत् ।
आधारं पूजयेत्तत्र पात्रञ्चाम्भोदकान्वितम् ॥
सकारणं मन्त्रयित्वा सर्वभूतबलिं हरेत् ।
षोडशार्णेन मनुना त्रिवारं वीरवन्दिते ॥

तथा बलिपञ्चकमाख्यातं सदा रक्षाकरं सताम् ।
एकमेकं पञ्चबलिं दद्याद् व्यापकमण्डले ॥
वामभागे स्थितं देवि सर्वविघ्नहरं भवेत् ।
चक्रमभ्यर्च्य सकलं विधिवत् परमेश्वरि ॥
श्रीगुरोः कृपया देवि सर्वज्ञं सर्वतत्त्ववित् ।

तन्त्रे तारं च भुवनेशानी व्यापकादि च मण्डलम् ।
ङेन्तं वाग्भवहृन्मन्त्रान्मनुः सूर्याक्षरो भवेत् ॥

"ओँ ह्रीँ व्यापकमण्डलाय ऐँ नमः" इति मन्त्रः ।

तथा चतुरस्रे व्योमचक्रं मन्त्रेणानेन संयजेत् ।
संस्थाप्य पात्रं तत्रैव कलार्णेन बलिं हरेत् ॥

कलाः षोडश मन्त्रश्च

तारं च भुवनेशानी सर्वविघ्नपदं वदेत् ।
कृद्भ्यश्च सर्वभूतेभ्यो हूंकारो वह्निवल्लभाम् ॥
समुच्चरन् बलिं दद्यात् मुद्रया तत्त्वसंज्ञया ।

"ओँ ह्रीँ सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हूँ स्वाहा" इति मन्त्रः । तत्त्वमुद्रा लक्षितैवेत्यलं विस्तरः ।

वाराहीतन्त्रे महोत्सवपवित्रे च शुक्लाष्टम्यां प्रपूजयेत् ।
नार्चयेद् वाममार्गेण अनाचारेण नार्चयेत् ॥
अणिमां विन्दुस्थाने च पश्चात् कामकलां यजेत् ।
ब्राह्मीं तृतीयभागे च सुन्दरीं च चतुर्थके ॥
आकर्षणीं पञ्चमे च षष्ठे कामेश्वरीं यजेत् ।
वसुपत्रे च भेरुण्डां षोडशारे कुलेश्वरीम् ॥
पुष्पाञ्जलित्रयं दद्याज्जपेन्मन्त्रमनन्यधीः ।
एतदेव भवेन्नित्यं सूतके मृतके त्यजेत् ॥
अवश्यं तु स्मरेन्मन्त्रं योऽतिभक्तिसमन्वितः ।
करजापी नैत्यके च षडङ्गन्यासमाचरेत् ॥
न जपेद् वैष्णवे रात्रौ शाक्ते शैवे न दुष्यति ।

श्रीक्रमे　　अत्यन्तरोगयुक्तो वा शुचिर्वाप्यथवाशुचिः ॥
अकालेऽप्यथवा काले अधिकारी सदा भवेत् ।
योगयुक्तेन मनसा प्रसीदामि ततः प्रभो ॥
तेन संतुष्टहृदयः स भवेन्मम साधकः।
यतिर्वा भूपतिर्वापि नान्योस्ति मम पूजकः ॥

इति संक्षेपः ।

तथा पुरश्चरणे　　यत्र वा कुत्रचिद् भागे लिङ्गमत् पश्चिमामुखम् ।
स्वायंभुवं बाणवृत्तं फलमूल्यं जलस्थितम् ॥
पश्चिमायतनं वापि इतरद् वापि सुव्रते ।
शक्तिक्षेत्रेषु गङ्गायां नद्यां पर्वतमस्तके ॥
पवित्रं सुस्थलं देवि यजेद् विद्यां प्रसादवान् ।

बाणवृत्तं बाणासुरस्थापितमित्यर्थः । फलमूल्यं फलमूलादियोग्यं दृश्यमिति यावत् । शक्तिक्षेत्रं कामरूपादिपीठम् ।

तथा　　तत्र स्थित्वा जपेल्लक्षं साक्षाद्देवीस्वरूपकः ।
ततो भवति विद्येयं त्रैलोक्यवशकारिणी ॥
एवं यजेद् यथाशक्ति होमकर्म समाचरेत् ।
किंशुकैर्हवनं कुर्याद् यथाशक्ति वरानने ॥
कुसुम्भकुसुमैर्वापि मधुरत्रयमिश्रितैः ।
विधिनोक्तप्रकारेण विघ्नादीन्नाशयेद् ध्रुवम् ॥

मधुरत्रयं मध्वाज्यैक्षवाणि दधिदुग्धघृतानीति कश्चित् ।

चतुश्शत्यां　　जपेन्नरो लक्षमेकं त्रैलोक्यक्षोभको भवेत् ।
होमं कुर्याद् दशांशेन कुसुमैर्ब्रह्मवृक्षजैः ॥
कुसुम्भकुसुमैर्वापि त्रिमध्वक्तैर्विधानवित् ।

तन्त्रे　　पश्चिमाभिमुखं लिङ्गं वृषशून्यमथापि वा ।
स्वयंभूबाणदेशे च शिवस्थाने महेश्वरि ॥
तत्र स्थित्वा जपेल्लक्षं प्रधानक्षेत्रगोऽपि वा ।
मुक्तारुद्राक्षपद्माक्षस्फटिकोद्भवमालया ॥
माणिक्यपद्मरागादिमालाभिर्वा जपं चरेत् ।

लक्षजपेन मन्त्रसिद्धौ विशेषमाह

योषितो भ्रामयन्त्येव सततस्तस्य सुनिश्चलम् ।
तदा द्वितीयलक्षं तु प्रजपेत् साधकोत्तमः ॥
पातालतलनागेन्द्रकन्यकाः क्षोभयन्ति तम् ।
तासां कटाक्षजालैस्तु सम्मोहं याति साधकः ॥
तदा लक्षत्रयं कुर्यात् साधकः स्थिरमानसः ।
एवं लक्षत्रयं जप्त्वा तत्रस्थः स्वस्थमानसः ॥
संक्षोभयति भूर्लोकस्वर्लोकतलवासिनः ।
पुरुषा योषितो वश्याश्चराचरमिदं शिवे ॥

उक्तं तन्त्रेऽपि

जप्ते लक्षैकमात्रे तु भूचर्या विघ्नकारकाः ।
तदा लक्षत्रयं कुर्यान्नियमेन शुचिव्रत इति ॥

एवं च

लक्षमात्रं जपेद् यस्तु महापापैः प्रमुच्यते ।
लक्षद्वयेन पापानि सप्तजन्मभवान्यपि ॥
महापातकमुख्यानि नाशयेन्नात्र संशयः ।
ततो लक्षत्रयं जप्त्वा मन्त्रं यन्त्रकलेवरः ॥
महापातककोटिं तु नाशयेन्नात्र संशयः ।
चतुर्लक्षं जपेद् देवि महावागीश्वरो भवेत् ॥
कुवेर इव देवेशि पञ्चलक्षजपाद् भवेत् ।
षड्लक्षजपमात्रेण महाविद्याधरो भवेत् ॥
सप्तलक्षजपान्मन्त्री खेचरीमेलको भवेत् ।
अष्टलक्षजपान्मन्त्री देवपूज्यो न संशयः ।
अणिमाद्यष्टसिद्धीनां नायको भवति प्रिये ॥
नवलक्षप्रमाणेन जपेत् त्रिपुरसुन्दरीम् ।
रुद्रमूर्तिः स्वयं कर्त्ता हर्त्ता साक्षान्न संशयः ॥
सर्ववन्द्यो महास्वच्छः सर्वसौभाग्यवान् भवेत् ।

इत्यादि जपः काम्यः पुरश्चरणानन्तरं पृथगभिधानादित्यलं विस्तरः ।

अथ संक्षेप-पूजाविधिः ।

सम्यगाचम्य ह्रीं आधारशक्तिकमलासनाय नम इत्यासनं संपूज्य तत्रासने समुपविश्य कुङ्कुमारुणशरीरो रक्तवस्त्रावृतस्ताम्बूलापूरितमुखो धूपामोदितो रक्ताभरणभूषितो रक्तपुष्पानुलेपनो रक्तासनोपविष्टः सकलशृङ्गारवेशाढ्यः स्थिरमानसः शुद्धदेशे सुगन्धपुष्पामोदिते कुङ्कुमेन सिन्दूरादिना वा चक्रमालिखेत् । ततः शिरसि गुं गुरुभ्यो नमः पुर्वसिद्धगुरुभ्यो नमः आदिसिद्धगुरुभ्यो नमः । यद्वा गुं गुरुभ्यो नमः इति गुरून तत्रैव गं गणपतये नमः इति गणेशं शिखायां पं परमगुरुभ्यो नमः इतिपरमगुरुं हृदये देवतां नमस्कुर्यात् ।

अथ सामान्यार्घस्थापनम् । वामे त्रिकोणगर्भ चतुरस्रं मण्डलं लिखित्वा तत्र त्रिपादिकां तदुपरि शंखं संस्थाप्य गन्धादिकं दत्वा विशेषार्घजलभागत्रयैकभागमितेन शुद्धजलेनापूर्य तत्र षडङ्गानि पूजयेत् । ततो मूलमन्त्रमष्टधा मत्स्यमुद्रयाच्छाद्य जपेत् ।

ततो विशेषार्घस्थापनम् । सामान्यार्घजलेन भूमौ चतुरस्र-मध्यगंत्रिकोणं विलिख्य तत्र वह्निरूपां यन्त्रिकां विन्यस्य तत्र त्रिकोणवृत्त-षटकोण-मण्डलं बिचिन्त्य मं वह्निमण्डलाय दशकलात्मने नमः इति संपूज्य मध्ये त्रिकूटेनार्चयेत् । तत्रैकैकबोजेन त्रिषु कोणेषु संपूज्य बालामन्त्रेण द्विरावृत्या षट्कोणेषु षडङ्गानि पूजयेत् । ततोऽस्त्रक्षालितमर्घपात्रं तत्र संस्थाप्य अं द्वादशकलात्मने सूर्यमण्डलाय नमः इति संपूज्य पूर्ववद् यन्त्रं लिखेत् । ततः समस्तेन व्यस्तेन च त्रिकूटेन मध्ये तां त्रिकोणं च संपूज्य षटकोणेषु षडङ्गानि पूजयेत् । ततोऽर्घपात्रं शुद्धजलेनापूर्य डं षोडशकलात्मने चन्द्रमण्डलाय नमः इति तत्र संपूज्य पूर्ववद् यन्त्रमालिख्य तत्र त्रिकोणमध्ये कोणेषु च हक्षवर्णद्वयं अकारादिककारादिथकारादि षोडशाक्षराणि विचिन्त्य समस्तव्यस्तत्रिकूटेन पूर्ववत् पूजयेत् । षट्कोणेषु षडङ्गानि मूलविद्यां यथावदर्चयेत् । संपूज्यात्मासनादिचतुष्कं वक्ष्यमन्त्रेण संपूज्य तत्र ततोऽष्टधामूलमुच्चार्य वमिति धेनुमुद्रां योनिमुद्रां च बध्वा अस्त्रेण संरक्ष्य तज्जलेनात्मानं पूजोपकरणानि चाभिषिच्य सर्वविद्यामयं भावयेत् ।

ततो भूतशुद्धिः । तद्यथा । हसक्षमलवरयऊं आनन्दभैरवाय वषट् सहक्षमलवरयईं सुधादेव्यै वौषट् इत्यानन्दभैरवं संपूज्य मूलेन भूतनिवारणं दिग्बन्धनस्फोटनानि च कृत्वा अङ्गुष्ठानामिकाभ्यां पुष्पं गृहीत्वा करकच्छपिकां

बद्ध्वा कुक्षौ दक्षिणभागे वामभागे वा पापपुरुषं विचिन्त्य मूलाधाराज्जीवात्मकं तेजः प्रणवेन हंस इति मन्त्रेण वा द्वादशान्तःस्थसदाशिवे संयोज्य आकाशादिपञ्चविंशतितत्त्वानि तत्र लीनानि चिन्तयेत्। ततः पुष्पं शिरसि विन्यस्यात्मानं पूजयेत्। ततो मूलाधारे पुष्पाञ्जलित्रयं दद्यात्। ततो यमितिवायुबीजोत्पन्नवायुना देहं संशोष्य रमिति वह्निबीजोत्पन्नदक्षपादाङ्गुष्ठोत्थितेन वह्निना दग्धं विचिन्त्य लमिति संप्लाव्य वमित्यमृतबीजोत्पन्नामृतवृष्ट्या संजातमात्मानं देवीरूपं चिन्तयेत्। ततो लीनानि तत्त्वानि जीवात्मानं च सोऽहमिति मन्त्रेण स्वस्थानमानयेत्।

अथवा 'पूरककुम्भकरेचकादिक्रमेण वायुबीजवह्निबीजामृतबीजैः षोडशचतुःषष्ठिद्वात्रिंशन्मात्राक्रमेण प्राणायामत्रयरूपां भूतशुद्धिं यथोपदेशं कुर्यात्।

ततोऽस्य मन्त्रस्य दक्षिणामूर्तिऋर्षिः पंक्तिश्छन्दो महात्रिपुरसुन्दरी देवता कवित्वाद्यभीष्टसिद्ध्यै विनियोगः इति स्मृत्वा शिरसि ऋषिं मुखे छन्दो हृदि देवतां विन्यसेदिति निबन्धारः। ततः करशुद्धिं कुर्यात् यथा अं मध्यमाभ्यां नमः आं अनामिकाभ्यां नमः सौः कनिष्ठाभ्यां नमः अं अङ्गुष्ठाभ्यां नमः आं तर्जनीभ्यां नमः सौः करतलपृष्ठाभ्यां नमः इति विन्यस्यासनचतुष्कं विन्यसेत्। तद्यथा ह्रीं क्लीं सौः आत्मासनाय नमः इति पादयोः ह्रैं क्लीं ह्सौः सर्वचक्रासनाय नमः इति जङ्घयोः ह्सैं ह्सकलह्रीं ह्सौः मन्त्रासनाय नमः इति जानुनोः ह्रीं क्लीं ब्लैं सिद्धासनाय नमः इति लिङ्गे न्यसेत्। ततः ऐं क्लीं सौः इति द्विरावृत्तेन बालामन्त्रेण ऐं हृदयायनमः इत्येवमङ्गुष्ठादिकरतलान्तमङ्गमन्त्रान् विन्यस्य दिग्बन्धनं कृत्वा ऐं हृदयाय नमः हृदि एव क्लीं शिरसे स्वाहा सौः शिखायै वषट् ऐं कवचाय हूँ क्लीं नेत्रत्रयाय वौषट् सौः अस्त्रायफट् इति षडङ्गमन्त्रांस्तत्तदङ्गेषु न्यसेत्। ततो मूलेन व्यापकत्रयं विन्यस्य षोडशाक्षरीं गलत्पीयूषधारामरुणां शिरसि स्मरेत्।

ततो बालामन्त्रवदन्तर्बहिश्च मातृकां न्यसेत्।

ततो वशिन्यादिन्यासं कुर्यात्। यथा शिरसि क्रमेण अं आं इत्यादि क्रमेण षोडशस्वरानन्तरं रब्लूं वशिनीवाग्देवतायै नमः। एवं ललाटे कवर्गं ह्सकलरीं कामेश्वरीं भ्रूमध्ये चवर्गं नब्लीं मेदिनीं, कण्ठे टवर्गं ब्लूं विमलां, हृदि तवर्गं जमरीं अरुणां, नाभौ पवर्गं ह्सलवयऊं जयिनीं, आधारे यवर्गं झमरयह्रीं सर्वेशीं, समस्तशरीरे शवर्गं क्षमरईं कौलिनीं उत्क्रमेण न्यसेत्।

अथ षोढ़ान्यासं कुर्यात्। तत्र प्रथमं गणेशन्यासः। ललाटे अं विघ्नेशश्रीभ्यां नमः। एवं आं विघ्नराजक्रियाभ्यां नमः। इं विनायकतुष्टिभ्यां नमः। ईं शिवोत्तमशान्तिभ्यां नमः। उं विघ्नहृत्पुष्टिभ्यां नमः। ऊं विघ्नकर्तृसरस्वतीभ्यां नमः। ऋं विघ्नराड्रतिभ्यां नमः। ॠं गणनायकमेधाभ्यां नमः। लृं एकदन्तकान्तिभ्यां नमः। ॡं द्विदन्तकामिनीभ्यां नमः। एं गजवक्त्रमोहिनीभ्यां नमः। ऐं निरञ्जनजटाभ्यां नमः। ओं कपर्दितीव्राभ्यां नमः। औं दीर्घवक्त्रज्वालिनीभ्यां नमः। अं सङ्कर्षणनन्दाभ्यां नमः। अः वृषध्वजसुरसाभ्यां नमः। कं गणनाथकामरूपिणीभ्यां नमः। खं गजेन्द्र-शुभ्राभ्यां नमः गं सूर्पकर्णजयिनीभ्यां नमः घं त्रिलोचनसत्याभ्यां नमः ङं लम्बोदरविघ्नेशीभ्यां नमः चं महानन्दस्वरूपिणीभ्यां नमः छं चण्डमूर्त्तिकाम-दाभ्यां नमः जं सदाशिवमदविह्वलाभ्यां नमः झं आमोदविकटाभ्यां नमः ञं दुर्मुखपञ्चशीर्षाभ्यां नमः टं सुमुखपूर्णिमाभ्यां नमः ठं प्रमोदभूमिभ्यां नमः डं एकपादसतीभ्यां नमः ढं द्विजिह्वरमाभ्यां नमः णं सुरमानुषीभ्यां नमः तं वीरमकरध्वजाभ्यां नमः थं षण्मुखविवर्णाभ्यां नमः दं वरदभ्रुकुटीभ्यां नमः धं वामदेवलज्जाभ्यां नमः नं वक्रतुण्डदीर्घघोणाभ्यां नमः पं द्विरण्डकधनुर्धराभ्यां नमः फं सेनानीमालिनीभ्यां नमः बं ग्रामिणीरात्रिभ्यां नमः भं तमचन्द्रिकाभ्यां नमः मं विमलशशिप्रभाभ्यां नमः यं मत्तवाहनलोलाभ्यां नमः रं जटिचपलेक्ष-णाभ्यां नमः। लं मुण्डिरुचाभ्यां नमः। वं षड्विन्दुभगाभ्यां नमः। शं वरेण्य-सुभगाभ्यां नमः। षं वृषकेतुशिवाभ्यां नमः। सं भक्ष्यप्रियदुर्गाभ्यां नमः हं मेघनादकामिनीभ्यां नमः। लं गजेशाकालकुब्जाभ्यां नमः। क्षं गणेशविश्व-हारिणीभ्यां नमः। अनेन क्रमेण मातृकोक्तस्थानेषु न्यसेत्। महानन्द इत्यत्र महानाद इति चण्डमूर्त्तिरित्यत्र चतुर्मूर्त्तिरिति पञ्चशीर्षेत्यत्र पूर्णेति पूर्णिमेत्यत्र भूतिमेति क्वचित्पाठः।

ततो ग्रहान् न्यसेत् यथा अं आंइत्यादि षोडशस्वरान्त हृदि सूर्यग्रहाय नमः भ्रूमध्ये कंखंगंघंङं विधुग्रहायनमः चक्षुषि चंछंजंझंञं भौमग्रहायनमः हृदि टंठंडंढंणं बुधग्रहायनमः। तदुपरि तंथंदंधंनं बृहस्पतिग्रहानमः। गले पंफंबं भंमं शुक्रग्रहायनमः। नाभौ यंरंलंवं शनिग्रहायनमः वक्त्रे शंषंसंहं राहुग्रहायनमः। पादयोः लंक्षं केतुग्रहायनमः।

अथनक्षत्रन्यासः। अं आं अश्विनीनक्षत्रायनमः इति ललाटे। एवं इं ईं भरणी दक्षनेत्रे। उं ऊं कृत्तिका वामनेत्रे। ऋंॠंलृं रोहिणी

दक्षकर्णे। एं मृगशिरा वामकर्णे। ऐं आर्द्रा वामनासायां। ओं औं पुनर्वसु दक्षनासायां। कंपुष्य कण्ठे। खंगं अश्लेषा दक्षस्कन्धे। घंङं मघा वामस्कन्धे। चं पूर्वफल्गुनी दक्षभुजे। छंजं उत्तरफल्गुनी वामभुजे। झंञं हस्त दक्षमणिबन्धे। टंठं चित्रा वाममणिबन्धे। डं स्वाती दक्षहस्ते। ढं णं विशाखा वामहस्ते। तंथंदं अनुराधा नाभौ। धं ज्येष्ठा दक्षोरुमूले। नंपंफं मूल वामोरुमूले। बं पूर्वाषाढ़ दक्षोरौ, भं उत्तराषाढ़वामोरौ। मं श्रवणा दक्षजानुनि। यंरं धनिष्ठा वामजानुनि। लं शतभिषा दक्षजंघायां। वंशं पूर्वभाद्र वामजंघायां। षंसंहं उत्तरभाद्र दक्षपादे अं अः लंक्षं रेवती नक्षत्रायनमः इति न्यसेत्।

अथ योगिनीन्यासः। यथा कण्ठे अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः डांडींडूं डाकिन्यैनमोरक्षरक्षत्वगात्मने। हृदि कंखंगंघंङंचंछंजंझंञंटंठं रांरींरूं राकिन्यै नमोरक्षरक्षासृगात्मने। नाभौ डंढंणंतंथंदंधंनंपंफंलांलीं लूं लाकिन्यैनमोरक्षरक्ष मांसात्मने। लिङ्गे बंभंमंयंरंलंकांकींकूं काकिन्यैनमो रक्षरक्षमेदात्मने। मूलाधारे वंशंषंसंसांसींसूं साकिन्यैनमोरक्षरक्षास्थ्यात्मने। भ्रूमध्ये हंक्षंहांहींहूं हाकिन्यैनमोरक्षमज्जात्मने। इति

अथ राशिन्यास। अंआंइंईं मेषराशयेनमः इति दक्षगुल्फे। उंऊं वृषराशये नमः इति दक्षजानुनि। ऋंॠंऌंॡं मिथुनराशयेनमः इति वृषणे। एंऐं कर्कटराशयेनमः इति कुक्षौ। ओंऔंसिंहराशयेनमः इति दक्षस्कन्धे। अंअःशंषंसंहंलंक्षं कन्याराशये नमः इति शिरोदक्षदेशे। कंखंगंघंङं तुलराशये नमः इति शिरोवामदेशे। चंछंजंझंञं वृश्चिकराशयेनमः इति वामस्कन्धे। टंठंडंढंणं धनुराशयेनमः इति कुक्षौ। तंथंदंधंनं मकरराशयेनमः इति वृषणे। पंफंबंभंमं कुम्भराशयेनमः इति वामजानुनि। यंरलंवंक्षं मीनराशयेनमः इति वामगुल्फे।

ततः पीठन्यासः। अंकामरूपपीठायनमः आं वाराणसीपीठाय नमः। एवं इंनेपाल ईं पौण्ड्रवर्धन उं परस्थिर ऊं कान्यकुब्ज ऋं पूर्णगिरि ॠं अर्बुद लृं आम्रातकेश्वर ॡं एकाम्र एं त्रिस्रोतस ऐं कामकोट ओं कैलास औं भूतनगर अं केदार अं पुण्ड्रक कंश्रीपुर खं ऐंकार गं जालन्धर घं मालव ङं कुलान्त चं देवीकोट छं गोकर्ण जं दारुकेश्वर झं अट्टहास ञं विरज टं राजगृह ठं महापथ डं कोलगिरि ढं एलापुर णं कामेश्वर तं जयन्तीपुर थ उज्जयिनीपुर दं चरित्रपुर मं क्षीरीपुर धं हस्तिनापुर पं उड्डीशपुर फं प्रयागपुर बं षष्ठीशपुर भं मायापुर मं अजेशपुर यं मलयागिरि रं श्रीशैल लं मेरुगिरि वं वागिरि शं

माहेन्द्रपुर षं वामनपुर सं हिरण्यपुर हं महालक्ष्मीपुर लं उड्डियान क्षं छायापुर पीठानि मातृकान्यासवत्तत्तत्स्थानेषु न्यसेत् । चरस्थिरमित्यत्रकान्यकुब्ज-मिति भूतनगरमित्यत्र भृगुकेदारं पीठं चन्द्रपुरं तत इति दारुकेश्वरमित्यत्र मारुतेश्वरमिति क्वचित्पाठः ।

अथ कामन्यासः । यथा अं कामरतिभ्यां नमः । आं कामि-परमेश्वरीभ्यां नमः । इं कान्तकामिनीभ्यां नमः । ईं कान्तमोहिनीभ्यां नमः उं कामदेवकलाभ्यां नमः । ऊं कामचारविलासिनीभ्यां नमः । ऋं कर्णकल्प-लताभ्यां नमः । ॠं कामुकश्यामाभ्यां नमः । ऌं कामवर्धनशुचिस्मिताभ्यां नमः । ॡं कामविस्मयाभ्यां नमः । एं रसविशालाक्षीभ्यां नमः ऐं रसणले-लिहानाभ्यां नमः । ओं रतिनाथदिगम्बराभ्यां नमः । औं रतिप्रियरामाभ्यां नमः । अं रात्रिनाथकुब्जाभ्यां नमः । अः स्मरेशकान्ताभ्यां नमः । कं रममाणनित्याभ्यां नमः । खं निशाकरकल्याणिनीभ्यां नमः । गं नन्दन-रोहिणीभ्यां नमः । घं नन्देशकामदाभ्यां नमः । ङं मदनसुलोचनाभ्यां नमः । चं नन्दयितृसुलोचनाभ्यां नमः । छं निशाचरमालिनीभ्यां नमः । जं रतिहासकलहप्रियाभ्यां नमः । झं पुष्पधनुकांक्षिणीभ्यां नमः । ञं महा-धनसुमुखीभ्यां नमः । टं भ्रामिणीनीलिमाभ्यां नमः । ठं भ्रमणजटिलाभ्यां नमः । डं भ्रममाणपालिनीभ्यां नमः । ढं भ्रमरशिखाभ्यां नमः । णं भ्रान्तमुग्धाभ्यां नमः । तं भ्रामणीरमाभ्यां नमः । थं भ्रगुभूमाभ्यां नमः । दं भ्रान्तिसचारुलोचनाभ्यां नमः धं भ्रमावहवञ्चलाभ्यां नमः । नं मोहनदीर्घ-जिह्वाभ्यां नमः । पं मोचकमतिभ्यां नमः । फं मुग्धलोलाक्षीभ्यां नमः । बं मोहवर्धनभृङ्गिणीभ्यां नमः । भं मोहकचपेटाभ्यां नमः मं मन्मथनाथाभ्यां नमः । यं मतङ्गमालिनीभ्यां नमः । रं भृङ्गनायकहंसिनीभ्यां नमः लं गायन-विश्वतोमुखीभ्यां नमः । वं गीतिजननन्दिनीभ्यांनमः । शं नर्त्तकरङ्गिनीभ्यां नमः । षं खेलकान्तिभ्यां नमः । सं उन्मत्तकलकण्ठाभ्यां नमः । हं मत्तक-वृकोदरीभ्यां नमः लं मेघश्यामाभ्यां नमः । क्षं विमलश्रीभ्यां नमः । इति नमोन्तानेवं मातृकास्थानेषु न्यसेत् । कामघ्नश्चेत्यत्र कामदेवकले इति कामुकेत्यत्र कोमलेति मोहिनीत्यत्र भोगिनीति मालिनीत्यत्र मर्दिनीति भ्रमणश्चेत्यत्र भीम इति क्वचित्पाठः ।

ततो नवयोनिन्यासं बालामन्त्रोक्तक्रमेण कुर्यात् । ततो बालामन्त्रेण हृदि चतुरस्रं विचिन्त्य गोलकन्यासक्रमेण स्वस्वस्थाने तत्तद्देवतासहितं

श्रीचक्रं चिन्तयेत्। ततो मूलाधारे समस्तप्रकटयोगिनीभ्यो नमः। अधिष्ठाने गुप्तयोगिनीभ्यो नमः। अनाहते संप्रदाययोगिनीभ्यो नमः। विशुद्धचक्रे कुलयोगिनीभ्यो नमः। विन्दुचक्रे निगर्वयोगिनीभ्यो नमः। ललाटे रहस्ययोगिनीभ्यो नमः। सीमन्ते अतिरहस्ययोगिनीभ्यो नमः। शिरोविले परापरादिरहस्ययोगिनीभ्यो नमः। इति योगिनीन्यासः। एकैकमेव न्यासः सर्वासामिति कश्चित्।

ततो ब्रह्मरन्ध्रे मूलमन्त्रे विन्यस्य पृष्ठे गुरुभ्यो नमः। एकैकं वा पूर्वोक्तान् गुरून् विन्यस्य षोडशस्वरयुक्ताः षोडश-नित्या-मातृकान्यासवत् तत्तत्स्थानेषु न्यसेत्। यथा अं कामेश्वर्यैनमः इति ललाटे। आदौ तत्तन् मन्त्रसम्बन्धोऽपीति प्राञ्चः। आं भगमालिन्यै नमः इति मुखवृत्ते। एवं इं नित्यक्लिन्नां ईं भेरुण्डां उं विन्ध्यवासिनीं ऊं महाविद्येश्वरीं ऋं शिवदूतीं ॠं नमितां लृं विमलां ॡं नित्यां एं नीलपताकां ऐं विजयां ओं सर्वमङ्गलां औं ज्वालामालिनीं अं विचित्रां अः महात्रिपुरसुन्दरीं चक्रादिषु न्यसेत्। ( ततो वक्त्रे मातृकां ) ततः प्राणायामत्रयं कृत्वा क्षोभणादिमुद्राः प्रदर्शयेत्। इदानीं अर्घसंस्कार इति प्राञ्चः।

ततः पीठेऽग्न्यादिकोणेषु धर्मज्ञानवैराग्यैश्वर्याणि प्रागादिदिक्षु अधर्माज्ञानावैराग्यानैश्वर्याणि संपूज्य मध्ये अनन्तपद्मसूर्यमण्डलवह्निमण्डल-चन्द्रमण्डलानि सत्त्वरजस्तमांसि आत्मान्तरात्मापरमात्मानः स्वनामाद्यक्षर-बीजेन ह्रीँ ज्ञानात्मने नमः इति ज्ञानात्मानं च संपूज्य आत्मासनं सर्वचक्रासनं मन्त्रासनं सिद्धासनं च प्रागुक्तमन्त्रैः संपूज्य हसौः ब्रह्मविष्णुरुद्रेश्वरसदा-शिवमहाप्रेतपद्मासनाय नमः ऐँ ह्रीँ श्रीँ साङ्गोपाङ्गाय महात्रिपुरसुन्दर्यास-नायनमः इति पूजयेत्। ततः ऐँ ह्रीँ श्रीँ महात्रिपुरसुन्दरी—रत्नसिंहासनाय नमः इति संपूज्य पुष्पमादाय त्रिखण्डां मुद्रां बद्ध्वा देव्या ध्यानं कुर्यात्। तद्यथा

ततः पुष्पनिभां देवीं बालार्ककिरणारुणाम्।
जवाकुसुमसंकाशां कुङ्कुमोदरसन्निभाम्॥
स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिताम्।
कालालिकुलसंकाशकुटिलालककुन्तलाम्॥
प्रत्यग्रारुणसंकाशवदनाम्भोजमण्डलाम्।
किञ्चिदर्धेन्दुकुटिलललाटमृदुपट्टिकाम्॥

पिनाकधनुराकारसुभ्रूवं परमेश्वरीम् ।
आनन्दमुदितोल्लोललीलान्दोलितलोचनाम् ॥
स्फुरन्मयूषसंघातविलसद्धेमकुण्डलाम् ।
सुगण्डमण्डलाभोगजितेन्दुमृदुमण्डलाम् ॥
विश्वकर्मादिनिर्माणसूत्रविस्पष्टनासिकाम् ।
ताम्रविद्रुमबिम्बाभरक्तौष्ठीममृतोपमाम् ॥
दाड़िमीबीजरक्ताभदन्तपंक्तिविराजिताम् ।
रत्नद्वीपसमुद्भासिजिह्वाममलभाषिणीम् ॥
स्मितमाधुर्यविजितमाधुर्यरससागराम् ।
अनौपम्यगुणोपेतचिबुकोद्देशशोभिताम् ॥
कम्बुग्रीवां महादेवीं मृणाललितैर्भुजैः ।
रक्तोत्पलकुलाकारसुकुमारकराम्बुजाम् ॥
कराम्बुजनखज्योतिर्वितानितनभःस्थलाम् ।
मुक्ताहारलतोपेतसमुन्नतपयोधराम् ॥
त्रिवलीवलनायुक्तमध्यदेशसुशोभिताम् ।
लावण्यसरिदावर्त्ताकारनाभिविभूषिताम् ॥
अनन्तरत्नघटितकाञ्चीयुक्तनितम्बिनीम् ।
नितम्बबिम्बद्विरदरोमराजिवराङ्कुशाम् ॥
कदलीदलितस्तम्भसुकुमारोरुमीश्वरीम् ।
लावण्यकदलीतुल्यजङ्घायुगलमण्डिताम् ॥
गूढ़गुल्फपदद्वन्द्वां प्रपदाजितकच्छपाम् ।
तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिताम् ॥
ब्रह्मविष्णुशिरोरत्ननिघृष्टचरणाम्बुजाम् ।
सितांशुशतसंकाशकान्तिसन्तानहासिनीम् ॥
लौहित्यजितसिन्दूरजवापीतिमरागिनीम् ।
रक्तवस्त्रपरीधानां पाशाङ्कुशकरोद्यताम् ॥
रक्तपुष्पनिविष्टान्तु रक्ताभरणभूषिताम् ।
चतुर्भुजां त्रिनेत्रां च पञ्चबाणधनुर्धराम् ॥
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम् ।
महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ॥

सर्वशृङ्गारवेषाढ्यां सर्वालङ्कारभूषिताम् ।
जगदानन्दजननीं जगद्रञ्जनकारिणीम् ॥
सर्वदेवमयीं देवीं कदम्बवनमध्यगाम् ।
सर्वलक्ष्मीमयीं नित्यां परमानन्दनन्दिताम् ॥
वहन्नाडीपुटद्वारि निर्गतां चिन्तयेत् क्रमात् ।

एवंरूपां ध्यात्वा मूलाधारे तडिदाकारां देवीं संचिन्त्य ललाटान्तमानीय मूलमुच्चार्य महात्रिपुरसुन्दरि आगच्छावाहयामि इति वहन्नाड्या करकमलस्थपुष्पप्रकरे संयोज्य समस्तेन भैरवीमन्त्रेण तदादिबीजेन वा यन्त्रादौ

श्रीमहापद्मवनान्तस्थे केवलानन्दविग्रहे ।
सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥

अस्मिन् महामण्डले सान्निध्यं कुरु महात्रिपुरसुन्दरि इहागच्छ इह तिष्ठ इह सन्निधेहि इह सन्निरुध्यस्व देवताशरीरे षडङ्गानि विन्यस्य त्रितालदिग्बन्धनाभ्यां संरक्ष्य सकलीकृता भव हूँ इति अवगुण्ठिता भव वं इति अमृतीकृता भव परमीकृता भवेति तत्तन्मुद्राभिर्विदध्यात् । ततो मुद्रां प्रदर्श्य मूलेनार्घोदकेन त्रिः संतर्पयेत् आत्मतत्त्वाय स्वाहा विद्यातत्त्वाय स्वाहा शिवतत्त्वाय स्वाहा इति मन्त्रैस्तर्पणमिति कश्चित् । ततो ह्रीँ क्लीँ सौः इति मन्त्रेण महात्रिपुरसुन्दरि देवि स्वागतमिदमासनमास्यतामित्यासनं दत्वा मूलेन महासुन्दरि पाद्यं निवेदयामि नमः इति वा अर्घं निवेदयामि मधुपर्कं निवेदयामि आचमनीयकं निवेदयामि रक्तांशुकं आचमनीयमलङ्कारं निवेदयामि । असत्त्वे कल्पयामीति ब्रूयात् । प्रतिनिवेदनं कुसुमं जलं वा दद्यात् । ततो मूलेन गन्धं निवेदयामि । ततो मूलेन महात्रिपुरसुन्दरीपादुकां पूजयामि स्वाहा नमः इति वा पुष्पं दूर्वाक्षते माल्यानि च दद्यात् । अर्घदानादावपि निवेदयामीत्यनन्तरं स्वाहा नमः इति वा योज्यमिति केचित् । ततो

वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः ।
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ धूपं निवेदयामि ॥
सुप्रकाशो महातेजाः सर्वत्र तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम ॥ दीपं निवेदयामि ॥

निवेद्य घंटां वौषट् इति वादयित्वा मूलमन्त्रान्ते

अन्नं चतुर्विधं हृद्यं रसैः षड्भिः समन्वितम् ।
मया निवेदितं तुभ्यं गृहाण परमेश्वरि ॥ इति नैवेद्यं दद्यात् ॥

मूलेनामृतोपस्तरणमसि स्वाहा इति जलगण्डूषं दत्वा ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय स्वाहा ॐ उदानाय स्वाहा ॐ समानाय स्वाहा मुद्रां प्रदर्श्य पुष्पाञ्जलिं दत्वा ग्रासमुद्रां बद्ध्वा अमृतापिधानमसि स्वाहेति गण्डूषं दत्वा मूलेन

पूगीफलं नागपत्रं नानावर्णमनौपमम् ।
कर्पूरादिसमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

निवेदयामीति निवेद्य त्रिवारं मूलेन संतर्पयेत् ।

ततो मध्ये त्रिकोणं विभाव्य दक्षिणपूर्वोत्तररेखासु पञ्चशः अकारादि-स्वरान् विलिख्य वामावर्त्तेन-प्रतिपदादि-पौर्णमास्यन्तास्तिथिरूपकामेश्वर्यादि विचित्रान्ताः शुक्लपक्षेऽनुलोमेन कृष्णे विचित्रादि-कामेश्वर्यन्तं विलोमेन संपूज्य विसर्गे सुन्दरीमर्चयेत् । यथा ऐं क्लीं सौः ओँ नमः कामेश्वरि इच्छाकाम-फलप्रदे सर्वसत्त्ववशंकरि सर्वजनक्षोभकरे हूं हूं हूं ह्रां ह्रीं क्लीं ब्लूं सः सौः क्लीं ऐं कामेश्वरीपादुकां पूजयामीति पूजयेत् । ऐं भगभगे भागिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि भगसर्ववशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वभगानि मे आनय वरदे रेते सुरेते भगक्लिन्ने क्लिन्ने क्लिन्नद्रवे क्लेदय द्रावयामोघे सर्वसत्त्वान् भगेश्वरि आत्मने भगवित् क्षुभं क्षोभय सर्व-सत्त्वान् भगेश्वरि ऐं ब्लूं जभब्लूं भौं ब्लूं सौं ब्लूं ह्रैं ब्लूं ह्रौं क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर क्लें ह्रीं इति भगमालिनीम् । ह्रीँ नित्यक्लिन्ने मदद्रवे स्वाहा इति नित्यक्लिन्नाम् । ओँ क्रों क्रों भ्रें च्रौं छ्रौं ज्रौं भ्रौं स्वाहा इति भेरुण्डाम् । ह्रीँ विन्ध्यवासिन्यै नमः इति विन्ध्यवासिनीम्, ओँ ह्रीं फ्रें सः नित्यक्लिन्ने मदद्रवे स्वाहा इति वज्रेश्वरीम् । ह्रीं शिवदूत्यै नमः इति शिवदूतीम् । ओँ ह्रीँ हूं खेचक्षेक्षः स्त्रीँ हूं क्षे ह्रीँ फट् इति त्वरिताम् । ऐं क्लीं सौः हसऐं हसकलरीं हसऔः ऐं क्लीं सौः द्रां द्रीं क्लीं ब्लूं सः इति नित्याम् । ओँ ह्रीँ फ्रें ब्लूं ह्रीं क्रों नित्यमदद्रवे हूं क्रों इति नीलपताकाम् । भमरऔं इति विजयाम् । स्वौं सर्वमङ्गलायै नमः इति सर्वमङ्गलाम् । ओँ नमो भगवति ज्वालामालिनि देवि देवि सर्वभूतसंहारकारिके जातवेदसि ज्वल ज्वल प्रज्वल प्रज्वल हूं हूं हूं रं रं रं हूं फट् स्वाहा इति ज्वालामालिनीम् । चक्रऔं इति विचित्राम् । मूलेन महात्रिपुरसुन्दरीं शेषे पूजयेत् । कृष्णपक्षे एवमेव विचित्रादिकामेश्वर्यन्ताः संपूज्य त्रिपुरसुन्दरीमर्चयेत् ।

ततो गुरुपूजनम्। मध्यप्राक् त्रिकोणमध्ये परगुरुभ्यो नमः अपरगुरुभ्योनमः परापरगुरुभ्यो नमः परमेष्ठिगुरुभ्यो नमः परमगुरुभ्यो नमः स्वगुरुभ्यो नमः इत्यर्चयेत्। यद्वा गुं गुरुभ्यो नमः पूर्वसिद्धगुरुभ्यो नमः आदिसिद्धगुरुभ्यो नमः इति संपूज्य सर्वक्षोभणचक्रे पूर्वाम्नायं रत्नाकरचक्रे दक्षिणाम्नायं मध्यचक्रे पश्चिमाम्नायं नवचक्रे कुबेराम्नायं बैन्दवे मध्यचक्रे सिंहासनं संपूज्य एवमेव श्रीविद्यां लक्ष्मीं महालक्ष्मीं त्रिशक्ति सर्वसाम्राज्यलक्ष्मीं पूजयेत्। एवमेव श्रीविद्यां परानिष्कलशाम्भवीं अजयां मातृकाश्च संपूज्य एवमेव श्रीविद्यात्वरितापारिजातेश्वरीत्रिपुरापञ्चबाणेशीः पूजयेत्। एवमेव श्रीविद्यामृतपीठेशीसुधा-श्रीअमृतेश्वरी-अन्नपूर्णाश्च संपूज्य श्रीविद्या सिद्ध लक्ष्मी मातङ्गी भुवनेश्वरी वाराही चेति पञ्चरत्नानि संपूज्य बिन्दौ कौशाम्बिकां संपूजयेत्। ततो बिन्दौ शैवदर्शनं परितः शाक्तदर्शनं भूबिम्बे ब्राह्मं वामे वैष्णवं सृष्टिचक्रं सूर्यदर्शनं स्थितिचक्रे बौद्धं परितः श्रीविद्यां पूजयेत्। ततस्तत्त्वमुद्रया त्रिवारं मूलेन देवीं संतर्प्य ज्ञानमुद्रया पुष्पमर्पयेत्। ततः सर्वोपचारैः संपूज्य मुद्रां दर्शयेत्। यद्वा गुरुपूजनानन्तरमेव देवीं सतर्प्य ज्ञानमुद्रया पुष्पमर्पयेत्।

अथावरणपूजा। तद्यथा आग्नेय-ईशान-वायव्य-निर्ऋतिकोणेषु मध्ये दिक्षु च हृदयशिरःशिखाकवचनेत्रास्त्राणि अङ्गानि पूजयेत्। ततस्त्रैलोक्यमोहने चक्रे योगिनीः प्रकटाः पूजयेत्। तद्यथा चक्रे आद्यरेखायां पश्चिमद्वारि दक्षिणभागे अणिमां ऐं ह्रीं श्रीं मन्त्रेण अणिमासिद्धिपादुकां पूजयामीति पूजयेत्। एवमुत्तरद्वारि पश्चिमभागे लघिमां पूर्वद्वारि वामभागे महिमां दक्षिणद्वारे ईशितां वायव्ये वशित्वां ईशकोणे प्राकाम्यं आग्नेये भुक्ति नैऋते पूर्वभागे इच्छासिद्धिं अध ऊर्ध्वं च प्राप्तिसिद्धिं सर्वसिद्धिं च पूजयेत्। ततो द्वितीयरेखायां पश्चिमादि वामावर्त्तेन ब्राह्म्याद्याः—आं असिताङ्ग भैरवयुतब्राह्मीपादुकां पूजयामि। एवं ईं रुरुभैरव ऊं चण्डभैरव ऋं क्रोधभैरव लृं उन्मत्तभैरव ऐं कपालभैरव औं भीषणभैरव अः संहारभैरवसहिताः क्रमेण माहेश्वर्याद्याः पूजयेत्। ततो तृतीयरेखायां वायुकोणादि वामक्रमादध ऊर्द्ध्वं च द्रां क्षोभणीं द्रीं द्रावणीं क्लीं आकर्षिणीं ब्लूं वशंकरीं सः उन्मादिनीं क्रों महाङ्कुशां सहरैं खेचरीं स्फं बीजमुद्रां ऐं योनिमुद्रां ऐं ह्रीं श्रीं त्रिचण्डाम्। ऐं ह्रीं श्रीं द्रां क्षोभणीं मुद्रापादुकां संपूजयामीति क्रमेण संपूज्य सर्वसंक्षोभमुद्रां प्रदर्शयेत्। ततः समस्तप्रकटयोगिन्यः त्रैलोक्यमोहनचक्रे

समुद्राः शक्तिपरिवाराः पूजिताः सन्त्विति निवेदयेत्। एवं चक्रान्तरेऽपि निवेदनम्। ततः षोडशारे पश्चिमभागे वामावर्त्तेन सर्वाशापूरकं चक्रं संपूज्य प्रागुक्तक्रमेण कामाकर्षिणी बुद्ध्याकर्षिणी अहंकाराकर्षिणी शब्दाकर्षिणी स्पर्शाकर्षिणी रूपाकर्षिणी रसाकर्षिणी गन्धाकर्षिणी चित्ताकर्षिणी धैर्याकर्षिणी स्मृत्याकर्षिणी आत्माकर्षिणी अमृताकर्षिणी शरीराकर्षिणी षोडशभिः स्वरैः, ऐं ह्रीं श्रीं अं कायाकर्षिणीपादुकां पूजयामीतिक्रमेण वामावर्त्तेन गुप्तयोगिनीः पूजयेत्। ततः ऐं क्लीं सौः इति मन्त्रेण चक्रेशीं त्रिपुरेशीं संपूज्य सर्वविद्राविणीमुद्रां प्रदर्शयेत्। ततोऽष्टदले सर्वक्षोभण - चक्रं संपूज्य पूर्वदिशि गन्धपुष्पादिना वामक्रमेण ऐं ह्रीं श्रीं कंखं गं घंङं अनङ्गकुसुमापादुकां पूजयामीति। एवं दक्षिणे चंछं जंझंञं अनङ्गमेखलां पश्चिमे टंठंडंढं णं अनङ्गमदनां उत्तरे तंथंदंधंनं अनङ्गमदनातुरां वह्निकोणे पंफं बंभंमं अनङ्गरेखां नैर्ऋते यंरंलंवं अनङ्गवेगां वायव्ये शंषंसंहं अनङ्गाङ्कुशां ईशाने लंक्षं अनङ्गमालिनी-गुप्ततरयोगिनीः पूजयेत्। ततः चक्रेशीं त्रिपुरेशीं ह्रींक्लींसौः चक्रेशी-त्रिपुरसुन्दरीपादुकां पूजयामीति संपूज्य सर्वाकर्षिणीमुद्रां प्रदर्शयेत्। ततः चतुर्दशारे सर्वसौभाग्यदं चक्रं संपूज्य पश्चिमदिशि ऐँ ह्रीँ श्रीँ सर्वसंक्षोभिणी-श्रीपादुकां पूजयामीति सपूज्य वामावर्तेन। एवमेव सर्वविद्राविणी सर्वाकर्षिणी सर्वाह्लादिनी सर्वसंमोहिनी सर्वस्तम्भिनी सर्वजृम्भिनी सर्वावेशकरी सर्वानुरञ्जिनी सर्वोन्मादिनी सर्वार्थसाधकी सर्वसम्पत्तिपूर्णा सर्वमन्त्रमयी सर्वद्वन्द्वक्षयकरीः सम्प्रदाययोगिनीः क्रमेण पूजयेत्। ततः चक्रेशीं हसऐं हसकलरीं हसऔः त्रिपुरवासिनी चक्रेशीपादुकां पूजयामीति संपूज्य पश्चिमे ऐं ह्रीं श्रीं सर्वसिद्धिप्रदाश्रीपादुकां पूजयामीति पूजयेत्। एवमेव वामावर्तेन सर्वसंपत्प्रदा सर्वमृत्युप्रशमनी सर्वप्रियङ्करी सर्वमङ्गलकारिणी सर्वकामप्रपूर्णा सर्वदुःखप्रमोचिनीं सर्वविघ्ननिवारिणी सर्वाङ्गसुन्दरी सर्वसौभाग्यप्रदायिनी कुलयोगिनीः पूजयेत्। ततो हसैं हसकलह्रीं हसऔः त्रिपुरेश्वरी-चक्रेशी-पादुकां पूजयामीति संपूज्य हसैं हक्लीं हसौः त्रिपुरश्रीचक्रनायिकाश्रीपादुकां पूजयामीति पूजयेत्। (सर्वोन्मादनमुद्रां च प्रदर्शयेत्) ततोऽन्तर्दशारचक्रे पश्चिमभागे ऐँ ह्रीं श्रीं सर्वज्ञादेवीपादुकां पूजयामीति पूजयेत्। एवमेव वामावर्तेन सर्वशक्ति सर्वैश्वर्यप्रदा सर्वज्ञानमयी सर्वव्याधिविनाशिनी सर्वाधारस्वरूपा सर्वपापहरा सर्वानन्दमयी सर्वरक्षास्वरूपिणी सर्वेप्सितार्थदा विगर्भा योगिनीः क्रमेण पूजयेत्। ततः सर्वज्ञापुरतः ह्रीँ क्लीं क्लेँ त्रिपुरमालिनी-चक्रेशीपादुकां पूजया-

मीति संपूज्य महाङ्कुशमुद्रां दर्शयेत्। ततोऽष्टकोणे सर्वरोगहरचक्रं संपूज्य ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं आः ब्लूं वशिनीपादुकां पूजयामीति पूजयेत्। एवमेव वामावर्त्तेन कामेश्वरी मोदिनी विमला अरुणा जयिनी सर्वेशी कौलिनी न्यासक्रमोक्तमन्त्रैः रहस्ययोगिनीः पूजयेत्। ततश्च ऐं ह्रीं श्रीं हसरैं हसकलरीं हसरौः त्रिपुरा-चक्रेशी-पादुकां पूजयामीति संपूज्य खेचरीमुद्रां दर्शयेत्। ततः सर्वसिद्धिप्रदं चक्रं मध्ये त्रिकोणे संपूज्य परापररहस्ययोगिनीं पूजयेत्। यथा त्रिकोणाद्बहिः द्रां द्रीं क्लीं ब्लूं सः जं जम्भनेभ्यः कामेश्वरबाणेभ्यो नमः। एवमेव तत्रैव कामेश्वरीबाणान् पश्चिमदिशि पूजयेत्। उत्तरदिशि थं मोहनाय कामेश्वर-धनुषे नमः एवमेव तत्रैव कामेश्वरीधनुः पूजयेत्। पूर्वदिशि अं ह्रीं वशीकरणाय कामेश्वरपाशाय नमः तत्रैव एवमेव कामेश्वरीपाशं पूजयेत्। दक्षिणदिशि क्रों स्तम्भनाय कामेश्वराङ्कुशाय नमः। एवमेव तत्रैव कामेश्वर्यङ्कुशं पूजयेत्। मध्ये अग्रकोणे वाग्भवेन कामगिरिपीठे देवीकामेश्वरीपादुकां पूजयामीति पूजयेत्। दक्षकोणे एवमेव कामबीजेन पूर्णगिरिपीठे वज्रेश्वरीं शक्तिबीजेन वामकोणे जालन्धरपीठे भगमालिनीमितिक्रमेणातिरहस्ययोगिनीः पूजयेत्। ततो मध्ये बालामन्त्रेण त्रिपुराम्बिकाचक्रेश्वरीपादुकां पूजयामीति पूजयेत्। ततो बीजमुद्रां दर्शयेत्। ततो ब्रह्मरन्ध्रनामक- विन्दौ सर्वानन्दमयचक्रं संपूज्य मूलेन वारत्रयं सुन्दरीपादुकां पूजयामीति गन्धादिना संपूज्य प्रशस्तपुष्पाञ्जलिभिः समस्तदेवतारूपां समस्तवर्णमयीं परापरातिरहस्ययोगिनीं महात्रिपुरसुन्दरीं पूजयेत्। ततश्चामेव चक्रेश्वरीमपि संपूज्य मूलेन वारत्रयं सुन्दरीपादुकां तर्पयामीति तर्पयेत्। ततो योनिमुद्रां बद्ध्वा बालामन्त्रोक्तक्रमेण धूपदीपौ निवेद्य पूर्ववत् त्रिस्तर्पयेत्।

ततः पुर्ववदारात्रिकं दत्वा षड्रसं नैवेद्यं नित्यहोममङ्गहोमं च बालामन्त्रोक्त-क्रमेण समाप्य ताम्बूलादि तद्वदेव निवेदयेत्। आद्यबीजेन महात्रिपुरसुन्दर्या-त्मतत्त्वाय स्वाहा मध्यबीजेन महात्रिपुरसुन्दरीविद्यातत्त्वाय स्वाहा अन्त्यबीजेन महात्रिपुरसुन्दरी शिवतत्त्वाय स्वाहा इत्यर्घोदकं दत्वा तर्पयेदिति केचित्। ततो यथाशक्ति जपं कृत्वा

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादात् सुरेश्वरि॥

इति देवतायै जपं समर्प्य पुष्पाञ्जलिं दत्वा पादुकां पूजयामीति नमस्कृत्य विसर्जयेदिति संक्षेपः ।

अथ वामकेश्वरतन्त्रानुसारेण संक्षेपः । करशुद्धिं कृत्वा आसनचतुष्कं विन्यस्य देवीं ध्यायेत् । ततो महात्रिपुरसुन्दरीपादुकां पूजयामीति देवीमावाह्य चक्रमध्ये स्थापयेत् । ततो मुद्रां बद्ध्वा पूजामाचरेत् । तद्यथा अणिमाद्यष्टकं ब्राह्म्याद्यष्टकं कामाकर्षणरूपादिषोडशकं अनङ्गकुसुमाद्यष्टकं क्षोभण्यादिषोडशकं सर्वसिद्धिप्रदादिदशकं सर्वज्ञादिदशकं वशिन्याद्यष्टकं कामबाणचतुष्कं पश्चिमादि वामावर्त्तेन पूजयेत् । ततस्त्रिकोणे कामेश्वरी-वज्रेश्वरी-भगमालिनीः संपूज्य सुन्दरीमुपचारैः प्रपूजयेत् । द्वितीयचक्रे कामनां तृतीये ब्राह्मीं ततस्त्रिवारं संतर्प्य मन्त्रं यथाशक्ति जप्त्वा महात्रिपुरसुन्दरीं पूजयामीति नमस्कृत्य विसर्जयेदिति निबन्धारः ।

षडङ्गं विन्यस्य देवीमावाह्य विन्दुचक्रे अणिमां द्वितीयचक्रे कामनां तृतीयचक्रे ब्राह्मीं चतुर्थे सुन्दरीं पञ्चमे आकर्षिणीं षष्ठे कामेश्वरीं वसुदले भेरुण्डां षोडशारे कुलेश्वरीं संपूज्य देवीं पुष्पाञ्जलिभिः पूजयित्वा मन्त्रं जपेदिति वाराहीतन्त्रेऽतिसंक्षेपः ।

अथ रुद्रयामले ।

नमामि सद्गुरुं शान्तं प्रत्यक्षं शिवरूपिणम् ।
शिरसा योगपीठस्थं सर्वकामार्थसिद्धये ॥
या नित्या परमा शक्तिर्जगच्चैतन्यरूपिणी ।
तां नमामि महादेवीं पञ्चमीं मातृरूपिणीम् ॥
यस्याः सर्वं समुत्पन्नं यस्यामद्यापि तिष्ठति ।
लयमेष्यति तामेव पञ्चमीं प्रणमाम्यहम् ॥
अधः कल्पतरोर्नित्यं भवान्या रत्नमन्दिरे ।
रत्नसिंहासने देव्याः श्रीचक्रं प्रणमाम्यहम् ॥
इन्द्रो मां रक्षयेत्पूर्वमाग्नेय्यामग्निदेवता ।
याम्ये यमः सदा पातु नैर्ऋत्यां पातु निर्ऋतिः ॥

पश्चिमे वरुणः पातु वायव्ये वायुदेवता ।
धनदश्चोत्तरे पातु ऐशान्यामीश्वरो विभुः ॥
ऊर्द्ध्वं प्रजापतिः पातु अधश्चानन्तदेवता ।
एवं दश दिशो रक्षां कुर्वन्तु देवतागणाः ॥
गणेशः सर्वदापातु क्षेत्रेशो रक्षयेत् सदा ।
द्वारश्रीः सर्वदा पातु देहली रक्षयेत् सदा ॥
गणनाथः सदा पातु दुर्गा मां परिरक्षतु ।
वटुको भैरवश्चान्ते क्षेत्रपालोऽपि रक्षतु ॥
सह रत्या सुपत्न्या च कामदेवश्च सर्वदा ।
प्रीत्या सह वसन्तोऽपि पातु मां नन्दने वने ॥१०॥
चक्रस्य पश्चिमे द्वारे भवान्या रत्नमन्दिरे ।
पद्मशङ्खनिधी रक्षां कुर्वतां मम सिद्धये ॥
पातु मां रत्नसोपानं परमैश्वर्यशोभितम् ।
रक्षयेत् पश्चिमं द्वारं भवान्या रत्नमन्दिरे ॥
सरस्वती महालक्ष्मीर्माया दुर्गा विभूतयः ।
भद्रकाली च चामुण्डा स्वाहा चैव शुभंकरी ॥
गौरी च लोकधात्री च वागीश्वर्यादयो मम ।
एता मञ्चस्थिताः सर्वा रक्षां कुर्वन्तु सर्वदा ॥
पाखण्डचारिणो भूता भूमौ ये चान्तरीक्षगाः ।
दिव्यलोकस्थिता ये च ते नश्यन्तु शिवाज्ञया ॥
शिवं कुर्वन्तु ताः सर्वा आसने पञ्चदेवताः ।
वास्तूनामधिपो ब्रह्मा त्वष्टा रक्षतु सर्वदा ॥
चक्रस्य पश्चिमे भागे श्रीमत्पात्रस्य मण्डले ।
पञ्चरत्नं सदा पातु षडङ्गानां च सिद्धये ॥
तत्र पात्रासने पुण्ये सर्वदा वह्निमण्डले ।
वह्नेश्च मण्डलं पातु कुलदेव्याश्च पूजने ॥
धूम्रार्चिरुक्माज्वलिनी ज्वालिनी विस्फुलिङ्गिनी ।
सुश्री सुरूपा कपिला हव्यकव्यवहे अपि ॥
वह्नेर्दशकला ज्ञेया धनधर्मफलप्रदाः ।
एताभिः सहितो रक्षां कुर्याद् वैश्वानरो मम ॥२०॥

तत्र पात्रे वरे दिव्ये श्रीमदादित्यमण्डले ।
सूर्यस्य मण्डलं पातु मम सर्वार्थसिद्धये ॥
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा बोधिनी धारिणी क्षमा ॥
एताः कलास्तु सूर्यस्य सूर्यमण्डलसंस्थिता ।
एताभिः सहितो रक्षामादित्यः कुरुतां मम ॥
सवितुर्मण्डले तत्र सोमस्यामृतमण्डले ।
प्रथमं सर्वदा पातु भैरवानन्दहेतवे ॥
अमृता मानदा पूषा तुष्टिः पुष्टी रतिर्धृतिः ।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ॥
पूर्णा पूर्णामृता कामदायिन्यः स्वरजाः कलाः ।
सोममण्डलमध्यस्था रक्षां कुर्वन्तु सर्वदा ॥
रविवेदकलापूर्णे सुधासंपूर्णमण्डले ।
नक्षत्राधिपती रक्षां करोतु मम सर्वदा ॥
सूर्याग्निमण्डले देवि संपूर्णे शशिमण्डले ।
आनन्दभैरवो रक्षां करोतु मम सर्वदा ॥
तत्र पूर्णामृते पुण्ये शक्तिर्या वारुणी कला ।
आनन्दरूपिणी रक्षां करोतु मम सर्वदा ॥
सर्वाधो मण्डलाधारे रुद्राः कालानलो विभुः ॥ ३० ॥
रक्षां करोतु मे नित्यं या मूलं प्रकृतिः कला ॥
ततश्चाधारशक्तिर्या मम रक्षां करोतु सा ।
कूर्मस्तु सततं पातु अनन्तो रक्षयेत् सदा ॥
तस्य मध्ये स्थितश्चक्रे वराहः परिरक्षतु ।
दन्ते तस्य स्थिता पृथ्वी पातु नित्यं वसुन्धरा ॥
समुद्रः सर्वदा पातु सरत्नममृतैर्जलैः ।
रत्नद्वीपं तु मे रक्षां करोतु स्वर्णपर्वतः ॥
पातु मां नन्दनोद्यानं रक्षन्तां कल्पपादपाः ।
अधस्तेषां सदा पातु विचित्रा रत्नभूमिका ॥
श्रीरत्नमन्दिरं पातु सततं पातु वेदिका ।
श्वेतच्छत्रं सदा पातु रत्नसिंहासनं सदा ॥

सिंहासनस्य पार्श्वस्थं धर्मज्ञानं तु रक्षतु ॥
वैराग्यं रक्षयेन्नित्यमैश्वर्यं रक्षयेत्सदा ॥
अधर्मो रक्षयेन्नित्यमज्ञानं परिरक्षतु ।
अवैराग्यं च मे पातु अनैश्वर्यं तु सर्वदा ॥
सिंहासनस्य मध्यस्थं पद्मं च परिरक्षतु ।
कन्दो मां पातु तत्रैव पद्मनालं च सर्वदा ॥
ऊर्द्ध्वमधश्छदः पातु ऊर्द्ध्वरूपं च कर्णिका ।
अर्कस्य मण्डलं पातु पातु मां सोममण्डलम् ॥
वह्नेस्तु मण्डलं पातु पातु सत्त्वं च मां सदा ।
रजस्तु पातु मां नित्यं नित्यं पातु तमोगुणः ॥ ४० ॥
ज्ञानमयी कला नित्या तत्त्वात्मानो विभूतये ।
रत्नसिंहासने देव्या रक्षां कुर्वन्तु सर्वदा ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरोऽथ सदाशिवः ।
एते पञ्च महाप्रेता रक्षां कुर्वन्तु सर्वदा ॥
सुधार्णवासनं पातु पातु रत्नाम्बुजासनम् ।
देव्यासनं सदा पातु पातु चक्रासनं सदा ।
सर्वमन्त्रासनं पातु सर्वसिद्धासनं तथा ।
तत्रैव संस्थिता देव्यो रक्षां कुर्वन्तु सर्वदा ॥
ईश्वरी सुन्दरी चैव वासिनी श्रीश्च मालिनी ।
सिद्धेश्वर्यादयः सर्वास्त्रिपुराद्याश्च पान्तु माम् ॥
समस्ता प्रकटा गुप्ता तथा गुप्ततरा च या ।
सम्प्रदायकुला कौलरहस्यातिरहस्यगाः ॥
परापररहस्या च योगिनी चक्रसंस्थिता ।
एतास्तु सततं रक्षां कुर्वन्तु योगिनीगणाः ॥
अणिमा पश्चिमे पातु लघिमा चोत्तरे सदा ।
पूर्वद्वारे तु महिमा ईशिता पातु दक्षिणे ॥
वशिता पातु वायव्ये प्राकाम्या पातु ईशाके ।
भुक्तिसिद्धिस्तथाग्नेय्यां इच्छा रक्षतु नैऋते ॥
अधः पातु सदा ब्राह्मी सर्वकामप्रदायिनी ।
सर्वकामप्रदा पातु ऊर्द्ध्वं चोर्द्ध्वनिवासिनी ॥ ५० ॥

भैरवश्चासिताङ्गो यः कामरूपस्य पीठके ।
ब्रह्माणीसहितः पूर्वे द्वारे मां परिरक्षतु ॥
मलये चाग्निदिग्भागे संस्थितो रुरुभैरवः ।
माहेशी-सहितः पातु कुलाकुलसमृद्धये ॥
चण्डः कोलगिरौ रक्षां कौमारी-सहितो यमे ।
करोतु भैरवो नित्यं पूजकानां च सिद्धये ॥
भैरवीसहितः क्रोधः कुलान्ते पीठराजके ।
नैरृत्यां सर्वदा पातु भोगकामार्थसिद्धये ॥
चौहारे पश्चिमे पातु वाराही-सहितः सदा ।
उन्मत्तभैरवो रक्षां करोतु मम सर्वदा ॥
जालन्धरे महापीठे कापालीभैरवः सदा ।
इन्द्राणीसहितो रक्षां वायव्यां प्रकरोतु मे ॥
उड्डियानोत्तरे पीठे चामुण्डा-सहितः सदा ।
भीषणो भैरवः पातु साधकानां च सिद्धये ॥
संहारश्चण्डिकासार्धं देवीकोटस्य पीठके ।
ऐशान्यां सर्वदा पातु कुलाम्नायस्य हेतवे ॥
सर्वसंक्षोभिणी मुद्रा पश्चिमे पातु सर्वदा ।
द्राविणी चोत्तरे पातु पूर्वे चाकर्षिणी सदा ॥
याम्ये वश्या सदा पातु उन्मदा मारुते सदा ।
ईशे महाङ्कुशा पातु त्रिखण्डा पातु चानले ॥ ६० ॥
नैरृत्यां बीजरूपा च ऊर्द्ध्वं रक्षतु खेचरी ।
महामुद्रा अधः पातु योगिनी योनिरूपिणी ॥
एताश्चक्रस्थिता नित्यं देवताः सर्वकामदाः ।
चतुरस्रत्रिरेखायां रक्षां कुर्वन्तु सर्वदा ॥
कामाकर्षणरूपा च बुद्ध्याकर्षणरूपिणी ।
अहंकाराकर्षिणी च शब्दाकर्षणरूपिणी ॥
स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी ।
रसाकर्षणरूपा च गन्धाकर्षणरूपिणी ॥
चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी ।
स्मृत्याकर्षणरूपा च नामाकर्षणरूपिणी ॥

बीजाकर्षणरूपा च आत्माकर्षणरूपिणी ।
अमृताकर्षिणी देवी शरीराकर्षरूपिणी ॥
एताश्चक्रस्थिता नित्याः सुभगाः षोडशे दले ।
सर्वाभीष्टप्रदा देव्यो रक्षां कुर्वन्तु सर्वदा ॥
अनङ्गकुसुमा पूर्वे दक्षिणेऽनङ्गमेखला ।
पश्चिमेऽनङ्गमदना उत्तरे मदनातुरा ॥
अनङ्गरेखा चाग्नेय्यां नैऋतेऽनङ्गवेगिनी ।
अनङ्गाङ्कुशा वायव्ये ईशानेऽनङ्गमालिनी ॥
कवर्गाद्यष्टवर्गस्था अष्टौ चानङ्गशक्तयः ।
रक्षां कुर्वन्तु ताः सर्वा देव्यश्चाष्टदले स्थिताः ॥ ७० ॥
सर्वसंक्षोभिणीशक्तिः सर्वविद्राविणी तथा ।
सर्वाकर्षणशक्तिश्च सर्वाह्लादनकारिणी ॥
सर्वसंमोहिनी शक्तिः सर्वस्तम्भनकारिणी ।
सर्वजृम्भणशक्तिश्च सर्वतोवशकारिणी ॥
सर्वरञ्जनशक्तिश्च सर्वोन्मादस्वरूपिणी ।
सर्वार्थसाधिनीशक्तिः सर्वसंपत्तिकारिणी ॥
सर्वमन्त्रमयी शक्तिः सर्वदुःखक्षयंकरी ।
चतुर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा ॥
सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदा तथा ।
सर्वप्रियंकरी चैव सर्वमङ्गलकारिणी ॥
सर्वकामप्रदा देवि सर्वदुःखविमोचिनी ।
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी ॥
सर्वाङ्गसुन्दरी देवी सर्वसौभाग्यदायिनी ।
बहिर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा ॥
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यफलप्रदा ।
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ॥
सर्वाधारस्वरूपा च सर्वपापहरा तथा ।
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ॥
तथैव हि महादेवी सर्वेप्सितफलप्रदा ।
अन्तर्दशारचक्रस्था रक्षां कुर्वन्तु सर्वदा ॥ ८० ॥

वाग्देवी वशिनी पातु पातु कामेश्वरी च माम् ।
मोदिनी विमला पातु अरुणा जयिनी च माम् ॥
सर्वेश्वरी च मे रक्षां करोतु कौलिनी तथा ।
अष्टकोणान्तरे देव्या रक्षां कुर्वन्तु सर्वदा ॥
पाशाङ्कुशौ धनुश्चापौ नित्यं चायुधदेवताः ।
देव्याः श्रीचक्रमध्यस्था रक्षां कुर्वन्तु सर्वदा ॥
षडङ्गयुवती पातु अङ्गस्थानङ्गरूपिणी ।
महादेव्यश्च चक्रस्था रक्षां कुर्वन्तु सर्वदा ॥
श्रीमत्त्रिकोणमध्ये तु तत्तत् कोणत्रयेषु च ।
मध्ये च सर्वदा पातु चतस्रः पीठदेवताः ॥
कामे कामेश्वरी पातु पूर्णे वज्रेश्वरी च माम् ।
जालन्धरे महापीठे पातु मां भगमालिनी ॥
पातु सूर्येन्दुपीठे तु विन्ध्याचलनिवासिनी ।
ब्रह्मस्वरूपिणी पातु श्रीमत्त्रिपुरसुन्दरी ॥
त्रैलोक्यमोहने चक्रे चतुरस्रे सुशोभने ।
पातु मामनिशं देवि त्रिपुरा परमेश्वरी ॥
सर्वाशापूरके चक्रे षोडशारे मनोहरे ।
तत्र चक्रेश्वरी नित्यं पातु मां परमेश्वरी ॥
तथा मदनचक्रे तु सर्वसंक्षोभकारके ।
तत्र चक्रेश्वरी नित्यं पायात् त्रिपुरसुन्दरी ॥ १० ॥
चतुर्दशारचक्रे तु ततः सौभाग्यदायके ।
तत्र चक्रेश्वरी नित्या पायात् त्रिपुरवासिनी ॥
बहिर्दशारचक्रे तु सर्वसौभाग्यदायके ।
त्रिपुराश्रीः सदा पातु मम कल्याणहेतवे ॥
अन्तर्दशारचक्रे तु सर्वरक्षाकरे परे ।
नित्या चक्रेश्वरी देवी पायात् त्रिपुरमालिनी ॥
तथाष्टकोणे चक्रे च सर्वरोगहरे वरे ।
पातु मां त्रिपुरासिद्धा देवी चक्रेश्वरी सदा ॥
सर्वसिद्धिप्रदे चक्रे अष्टकोणान्तरे सदा ।
चक्रेश्वरी च मे रक्षां करोतु त्रिपुराम्बिका ॥

सर्वानन्दमये चक्रे श्रीमत्त्रिकोणमध्यगे ।
महाचक्रेश्वरी पातु श्रीमत्त्रिपुरसुन्दरी ॥
नित्या कामेश्वरी पातु पातु मां भगमालिनी ।
क्लिन्ना मां सर्वदा पातु भेरुण्डा पातु मां सदा ॥
विन्ध्याद्रिवासिनी पातु महाविद्येश्वरी तथा ।
पातु मां शिवदूती च त्वरिता रक्षयेत् सदा ॥
कुलसुन्दरी च मां पातु नित्या नित्या च पातु माम् ।
नीलपताका नित्या च विजया पातु मां सदा ॥
श्रीसर्वमङ्गला पातु नित्यं ज्वालांशुमालिनी ।
विचित्रा सर्वदा पातु षोडशी पातु सुन्दरी ॥ १०० ॥
महाविद्या तु विजया पातु मां बहुरूपिणी ।
महासप्तदशी पातु नित्यमानन्दकारिणी ॥
चतस्रश्च महादेव्यो योगिन्योः पान्तु मां सदा ।
डाकिनी राकिनी पातु लाकिनी काकिनी तथा ॥
साकिनी हाकिनी पातु चक्रस्था योगिनीगणाः ।
वर्णस्था मातृका सर्वा रक्षां कुर्वन्तु सर्वदा ॥
चतुरस्रे महाचक्रे बुद्धो मां परिरक्षतु ।
पातु मामनिशं देवः षोडशारे प्रजापतिः ॥
तथाष्टदलचक्रस्थः शिवो मां परिरक्षतु ।
चतुर्दशारचक्रे तु भास्करो रक्षयेत् सदा ॥
द्विदशारे सदा पातु प्रभुर्नारायणो हरिः ।
अष्टारे मध्यचक्रे तु पातु मां परमेश्वरी ॥
नवचक्रेश्वरी नित्या या नित्या परमापरा ।
पातु मामनिशं देवि श्रीमत्त्रिपुरसुन्दरी ॥
महात्रिपुरसुन्दर्याश्चिन्तनीया च यापरा ।
ब्रह्मस्वरूपिणी पातु पञ्चमी परदेवता ॥
पञ्चतत्त्वस्तथा पातु यत् किंचित् परमं स्मृतम् ।
नित्यं पञ्चगुणैः पातु पञ्चमी परदेवता ॥
पञ्चमी सततं पातु नित्यं रक्षतु पञ्चमी ।
शान्तिं करोतु सा नित्या पञ्चमी परदेवता ॥ ११० ॥

ऐशान्यां सर्वदा पातु नित्यं निर्माल्यवासिनी ।
शेषिका सुन्दरी पातु बिन्दुचक्रनिवासिनी ॥
नित्यं कामकला पातु मुद्रा मां पातु खेचरी ।
शक्तिर्मां सा सदा पातु या मूलाधारवासिनी ॥
इदं त्रिपुरसुन्दर्याः स्तवराजं मनोहरम् ।
पूजाक्रमेण कथितं साधकानां सुखावहम् ॥
क्रमेणानेन विधिना श्रीमत्त्रिपुरसुन्दरीम् ।
संपूज्य साधकः श्रेष्ठो रक्षामन्त्रं सदा पठेत् ॥
प्रातःकाले शुचिर्भूत्वा निशायामर्धरात्रके ।
अथवा संकटे प्राप्ते राजस्थाने सुदुर्गमे ॥
जले वा ज्वलने वापि श्मशाने दुर्गमे गिरौ ॥
यत्र तत्र भयप्राप्तौ सर्वत्रैव पठेन्नरः ॥
सर्वावयवभावेन देवीं संचिन्त्य साधकः ।
रक्षां कुर्वीत यत्नेन सर्वोपद्रवनाशिनीम् ॥
स्तोत्रं वाञ्छितमेवेदं त्रैलोक्यस्यापि दुर्लभम् ।
गोपनीयं प्रयत्नेन यदीच्छेऽऽत्मनो हितम् ॥
यस्मै कस्मै न दातव्यं न वक्तव्यं कदाचन ।
शिष्याय भक्तियुक्ताय साधकाय प्रकाशयेत् ॥
भ्रष्टेभ्यः साधकेभ्योऽपि बान्धवेभ्यो न दर्शयेत् ।
दत्ते च सिद्धिहानिः स्यादित्याज्ञा शङ्करैः कृता ॥१२० ॥
मन्त्राः पराङ्मुखा यान्ति क्रुद्धा भवति सुन्दरी ।
अशुभं च भवेत्तस्य तस्माद् यत्नेन गोपयेत् ॥
यद्गेहे विद्यते ग्रन्थं लिखितं स्तोत्रमुत्तमम् ।
चञ्चलापि स्थिरा भूत्वा कमला तत्र वर्त्तते ॥
तस्माद् यत्नादिदं ग्रन्थं पूजयेद् गन्धपुष्पकैः ।
पूजाफलं भवेन्नित्यं सान्निध्या सुन्दरी भवेत् ॥
स्तवराजमिमं पुण्यं यः पठेत् सुसमाहितः ।
यत् फलं लभते तस्मात् शृणुध्वं साधकाश्च तत् ॥
वारमेकं तु योऽधीते प्राप्नोति पूजनं फलम् ।
विदितो मातृचक्रस्य साधको भुवि जायते ॥

मासमेकं क्रमेणैव पठेत् भक्तिपरायणः ।
स्वर्गेऽपि विदितो भूत्वा देवीपुत्रस्तु भूतले ॥
भक्त्या वा धारयेद् यस्तु लिखित्वा स्तोत्रमुत्तमम् ।
शिखायामथवा कण्ठे करे वा वामदक्षिणे ॥
स भवेत् साधकश्रेष्ठो मातृणां च भवेत् प्रियः ।
लभते सर्वकामानि परं स्वस्त्ययनं भवेत् ॥
तस्मादिदं प्रयत्नेन धारयेद् विधिना सदा ।
पठित्वा पूजयित्वा तु त्रैलोक्यं वशमानयेत् ॥
भक्ताय दीयते यस्मै मन्त्रं रक्षाकरं परम् ।
धृत्वा सुवर्णमध्यस्थं सर्वकामफलं लभेत ॥
यद्यत् वाञ्छति कामानि भुक्तिमुक्तिकराणि च ।
लभते नात्र संदेहो भुवि स्वर्गे रसातले ॥
दृष्ट्वा तं साधकश्रेष्ठं ग्रहराक्षसहिंसकाः ।
दूरादेव पलायन्ते न समर्थाश्च हिंसितुम् ॥
विषं निर्विषतां याति यान्ति पापानि संक्षयम् ।
देववन्मानवो भूत्वा भुनक्ति बहुलं सुखम् ॥
तस्मान्नित्यं पठेद् धीमान् भक्तिकामार्थसिद्धये ।
भक्त्या तु पूजयेद् देवीं स्वरक्षां सर्वदा चरेत् ॥
पूर्वजातिपरिज्ञानं वेद्यं जन्मसहस्रशः ।
न पुनर्जायते योनौ मरणं नास्ति चापरम् ॥
गन्धर्वरूपवान् भूत्वा संपूज्य परमेश्वरीम् ।
रक्षामन्त्रं पठित्वा च देवत्वं लभते ध्रुवम् ॥
अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् ।
असाध्यं साधयेत् सर्वं दुर्लभं लभते ध्रुवम् ॥
अतिदुःखालये घोरे भीमे निगडबन्धने ।
तत्र यस्तु पठेद् भक्त्या ध्रुवं मुच्येत् बन्धनात् ॥
यत्र तत्र स्थितश्चापि शुचिर्वाप्यथवाशुचिः ।
देव्या स्तोत्रं पठित्वा च देवत्वं लभते ध्रुवम् ॥
अत्यन्तरोगयुक्तो वा यदि देवीं प्रपूजयेत् ।
सम्यग् वा श्लोकमेकं वा सद्यो रोगात् प्रमुच्यते ॥ १४० ॥

मोहनस्तम्भनाकर्षमारणोच्चाटनं तथा ।
पठनादेव जायन्ते सर्वसिद्धिमुपालभेत् ।'
इति त्रिपुरसुन्दर्याः स्तवराजं मनोहरम् ।
रक्षायन्त्रं च शुभदं शिवेन परिकीर्तितम् ॥
छत्रं मूर्ध्नि सहस्रपत्रकमलं रक्तं सुधावर्षिणं
दिव्यस्त्रीपरिचार्यमानमनिशं चात्मानमेवं सदा ।
ध्यायेन्मानसपङ्कजे भगवतीं रक्ताब्जपूर्णासनां
सोऽयं स्वस्तिसमस्तमाशु लभते राजास्पदं भूतले ॥
आकाशे सुप्रकाशे सकलगुणमयीं सुन्दरीं रक्तनेत्रां
नित्यां पद्मासनस्थां तरुणरविनिभां रक्तनेत्रप्रभाभाम् ।
आत्मानं सर्वभावैः सकलगुणयुतां सर्वदा यो विपश्चिद्
देवः को वा शिवो वा मदनहनकृत् खेचरो जायते सः ॥

इति रुद्रयामलोक्तः स्तवराजः समाप्तः ॥

अथ काम्यानि ॥

गोरोचनाभिर्द्रव्यैश्च यन्त्रराजं समालिखेत् ।
अतीवसुन्दरं रम्यं तन्मध्ये प्रतिमां वराम् ॥
ज्वलन्तीं कामसहितां महाबीजविदर्भिताम् ।
चिन्तयेत्तु ततो देवीं योजनाष्टसहस्रतः ॥
अदृष्टपूर्वा देवेशि श्रुतपूर्वाथ दुर्लभा ।
राजकन्याथवा भार्या लज्जाभयविवर्जिता ॥
आयाति साधकं सम्यक् मन्त्रमूढा सती प्रिये ।

महाबीजं कामराजबीजम् ।

अथवा देवदेवेशि यदैकान्ते चतुःपथे ।
तत्समीपे लिखेच्चक्रं सिन्दूरेण महाप्रभम् ॥
सर्वं बाह्यत आरभ्य यावन्मध्यं महेश्वरि ।
अकारादिक्षकारान्तां मातृकां तत्र विन्यसेत् ॥

पूजयेद् रात्रिसमये कुलाचारक्रमेण यः ।
तत्क्षणात् स महादेवि साधकः खेचरो भवेत् ॥
पूजयित्वा महेशानि तद्वदेकतरौ गिरौ ।
अजरामरतां सम्यक् लभते नात्र संशयः ॥
महाभूतदिने चापि श्मशाने यदि पूजयेत् ।
पूर्ववन्निशि देवेशि सर्वसिद्धिमवाप्नुयात् ॥
अञ्जनं विविधं चैव खेटकं यक्षिणीं तथा ।
यत् किंचित् सिद्धिनिचये विद्यते तदवाप्नुयात् ॥

महाभूतदिनं कृष्णचतुर्दशी ।

तथा चक्रमध्यगतो भूत्वा साधकश्चिन्तयेत्तदा ।
उद्यत्सूर्यसहस्राभमात्मानमरुणं तथा ॥
साध्यमप्यरुणीभूतं चिन्तयन् परमेश्वरीम् ।
अनेन क्रमयोगेन स्वयं कन्दर्परूपवान् ॥
सर्वसौन्दर्यसुभगः सर्वलोकवशंकरः ।
सर्वरक्तोपचारैस्तु मुद्रासहितविग्रहः ॥
चक्रं प्रपूजयेद् यस्तु यस्य नाम विदर्भितम् ।
स भवेद् दासवद् देवि धनाढ्यो वापि भूपतिः ॥
चक्रमध्यगतं कुर्यान्नाम यस्यास्तु योषितः ।
अदृष्टां तां महेशानि योनिमुद्राधरः प्रिये ॥
हठादानयते शीघ्रं यक्षिणीं राजकन्यकाम् ।
राजकन्यामप्सरसं खेचरीं सुरकन्यकाम् ॥
विद्याधरीं दिव्यरूपामृषिकन्यां रिपुस्त्रियम् ।
मदनोद्भवसंतापां स्फुरज्जघनमण्डलाम् ॥
कामबाणप्रभिन्नान्तःकरणां लोलचक्षुषम् ।
महाकामकलाध्यानयोगात्तु सुरवन्दिते ॥
क्षोभयेत् स्वर्गभूलोकपातालतलयोषितः ।
रोचनाभागमेकं च भागमेकं च कुङ्कुमम् ॥
अथ भागद्वयं देवि चन्दनं मर्दयेत् समम् ।
एकत्र तिलकं कुर्यात् त्रैलोक्यवशकारकम् ॥

अष्टोत्तरशतावृत्त्या मन्त्रयित्वा वशं नयेत् ।
राजानं नगरं ग्रामं येन यच्च दृश्यते ॥
मन्त्रिणा परमेशानि तत्सर्वस्तस्य वश्यगम् ।
तथा पुष्पं गन्धं फलं वस्त्रं तोयं पर्णं वरानने ॥
शतमष्टोत्तरं जप्त्वा यस्मै कस्मै प्रयच्छति ।
स वश्यो जायते देवि नात्र कार्या विचारणा ॥
स्त्रियस्तु सकला वश्या दासीभूत्वा भवन्त्यपि ।
हठाकर्षणमेतत्तु कथितं नान्यथा भवेत् ॥
रहस्यस्थानके देवि लिखेद्रोचनया भुवि ।
चारुशृङ्गारवेशाढ्यः सर्वाभरणभूषिताम् ॥
प्रतिमां सुन्दराङ्गीं तां विलिख्य सुमनोहराम् ।
तद्भालकण्ठहृन्नाभियोनिमण्डलयोजिताम् ॥
जन्मनाममहाविद्यामङ्कुशार्णविदर्भिताम् ।
सर्वसन्धिषु देहस्य मदनाक्षरमालिखेत् ॥
नीलं दाडिमपुष्पाभं चिन्तयेद् देहसंधिषु ।
तदाशाभिमुखो भूत्वा स्वयं देवीस्वरूपकः ॥
मुद्रां तु क्षोभिणीं बद्ध्वा मन्त्रमष्टशतं जपेत् ।
नियोज्य दहनागारे चन्द्रसूर्यकलात्मके ॥
ततो विकलसर्वाङ्गीं कामबाणेन पीडिताम् ।
अनन्यमनसां प्रेमभ्रममाणां मदालसाम् ॥
एवमाकर्षयेद् देवि योजनानां शतादपि ।

जन्म साध्याक्षरं नाम साध्यस्य जन्मनाम इत्येकमेवेति कश्चित् । महाविद्या मूलमन्त्रः, अङ्कुशः क्रों, मदनाक्षरं कामराजबीजम् । ककार इति कश्चित् । तदाशेति साध्यदिगभिमुख इत्यर्थः । दहनागारः त्रिकोणम् ।

मातृकां विलिखेच्चक्रबाह्यतः सकलां शिवे ।
भूर्जपत्रे स्वर्णपात्रे रौप्यपात्रेऽथ ताम्रके ॥
सोऽवध्यः सर्वजन्तूनां व्याघ्रादीनां विशेषतः ।

मातृकामिति मातृकार्णविदर्भितनामाक्षरेण वेष्टनमिति संप्रदायः । तथैवोत्तरवाक्यसंदर्शनात् ।

तथैव मातृकायुक्तं स्वसंज्ञाचक्रमण्डितम् ।
कर्पूरकुङ्कुमाद्यैश्च अजरामरतां लभेत् ॥

स्वसंज्ञेति मातृकाक्षरद्वयम् । तत्र एकं नामाक्षरं ततो मातृकाक्षरद्वयम् । एवं समस्तमातृकामन्त्रेण वेष्टितमित्यर्थः ।

अनेनैव विधानेन रोचनागुरुकुङ्कुमैः ।
लिखेत्तच्चक्रयोगेन साध्यनाम वरानने ॥
विदर्भितं स्वनाम्ना तु यस्मिन् कस्मिन् व्यवस्थितम् ।
स्थावरं जङ्गमं वापि सकलं वशमानयेत् ॥

चक्रयोगेन प्रागुक्तदेवताचक्रयोगेनेत्यर्थः ।

महात्रिपुरसुन्दर्या कामकूटेन भास्वता ॥
एकमेकमवष्टभ्य साध्यनामाक्षराणि च ।
बहिरप्यखिलैर्वर्णैः मातृकायाः प्रवेष्टयेत् ॥
हेममध्यगतं कुर्याच्छिखायां वामके भुजे ।
धारयेद् यत्र कुत्रापि त्रैलोक्यवशकारणम् ॥
पूर्वक्रमेण नगरनाम संदर्भ्य शलजे ।
मध्ये चतुः पथे वापि चतुर्दिक्षु निधापयेत् ॥
महाक्षोभो योषितां च जनानां महतामपि ।
तथैव पूर्वदृष्टानां पुरस्थानां च जायते ॥

पूर्वक्रमेण एकमेकमवष्टभ्येत्यादिक्रमेणाव्यवधानात् । अन्तरङ्गत्वात पूर्वक्रमेण जन्मनाम महाविद्याङ्कुशेनेत्यादिक्रमेण इति कश्चित् ।

तथा एतन्मध्यगतां पृथ्वीं सशैलवनकाननाम् ।
ज्वलन्तीं सर्वराजेन्द्रमण्डितां सागराम्बराम् ॥
मास-षट्कं चिन्तयेद्यः साक्षात् कामोपमो भवेत् ।
कटाक्षक्षेपमात्रेण नार्यस्तस्य वशाः शिवे ॥
राजानो ब्राह्मणा वैश्याः शूद्राश्च पशवो जगत् ।
दृष्ट्या चाकर्षयेद् देवि त्रैलोक्यं सचराचरम् ॥

दृष्ट्या विषं नाशयेत् स नात्र कार्या विचारणा ।
भूतघ्नं तपिशाचांश्च ज्वरांश्चातुर्थकादिकान् ॥
शूलगुल्मादिरोगाँश्च दृष्ट्या नाशयति क्षणात् ।
एतत् सिन्दूरसुभगं रात्रौ संपूजितं शिवे ॥
योजनानां शताद् देवि सम्यगाकर्षयेत् स्त्रियम् ।
अर्कक्षीरेण संयुक्तं धुत्थूरकरसं तथा ॥
रोचनाकुङ्कुमे चैव लाक्षालक्तकसंयुतम् ।
कस्तूरीद्रवसंयुक्तं एकीकृत्य ततः परम् ॥
चक्रमेतत् समालिख्य यस्य नाम्ना महेश्वरि ।
तस्य व्याघ्रभयव्याधिरिपुसर्पगजादिकम् ॥
चोरग्रहजनारिष्टशाकिनीडाकिनीभयम् ।
भयं न विद्यते देवि परमन्त्राभिचारतः ॥
अथवा मध्यगां देवीं त्रिकोणोभयतस्तथा ।
अधस्तान्नामसंयुक्तां रोचनाकुङ्कुमान्विताम् ॥
लिखापयेत् स सप्ताहाद् दासवत् किङ्करो भवेत् ।
पीतद्रव्यैः समालिख्य पीतपुष्पैः समर्चयेत् ॥
पूर्वाशाभिमुखो भूत्वा स्तम्भयेत् सर्ववादिनः ।
सहस्रवदनो देवि विमूको भवति क्षणात् ॥

पीतद्रव्यं गोरोचनादि । अत्र धारयेदिन्द्रदिग्गतामिति चतुःशत्या-मुक्तम् । तत्र गृहादौ पूर्वभागे स्थापयेदित्यर्थः ।

चक्रं विन्यस्य देवेशि महानीलीरसेन च ।
नाम संयोज्य विधिवद् दक्षिणाभिमुखो बुधः ॥
वह्नौ दग्ध्वा महेशानि मारयेद् वैरिणं शिवे ।
महिषाश्वपुरीषाभ्यां रसमाकृष्य शैलजे ॥
गोमूत्रेण च संलिख्य नाम संदर्भ्य पूर्ववत् ।
क्षिप्त्वा लवणमध्यस्थं विद्वेषणकरं महत् ॥

पूर्ववत् एकमेकमवष्टभ्येतिप्रकारेण जन्मनाम महाविद्यामित्यादिक्रमेण वेत्यर्थः । लवणेति "क्षिप्त्वालनालमध्यस्थं" इति चतुःशत्यां पाठः । आलनालं काञ्जिकम् ।

कृत्वा रोचनया नाम मध्यस्थं काकमध्यगम् ।
लम्बमानं तदाकाशे शत्रूच्चाटनकारणम् ॥
महानीलीरोचनाभ्यां दुग्धलाक्षारसादिभिः ।
विलिख्य धारयेन्मन्त्री सर्ववर्णान् वशं नयेत् ॥
अनेनैव विधानेन स्थापयेद्वारिमध्यगम् ।
तेनोदकेन संस्नातः पीतं तत्सर्ववश्यकृत् ॥
यमाशाभिमुखो भूत्वा चक्रं कृष्णं यदार्चयेत् ।
यस्य नामाङ्कितं तस्य मन्त्रहानिः प्रजायते ॥
रोचनालिखितं चक्रं क्षीरमध्ये विनिःक्षिपेत् ।
सर्ववश्यकरं देवि भवत्येव न संशयः ॥
गोमूत्रमध्यगं सम्यक् शत्रूच्चाटकरं भवेत् ।
तैलस्थं चक्रराजं तु विद्वेषणकरं भवेत् ॥
ज्वलज्ज्वलेतिमध्यस्थं शत्रुनाशकरं भवेत् ।

इति संक्षेपः । विस्तरस्तु ज्ञानार्णवेऽनुसंधेयः ।

तथा

नित्यहोमं ततः कुर्यात् काम्यहोमं ततः परम् ।
मालतीजातिकामल्लीकुसुमैर्मधुमिश्रितैः ॥
घृतप्लुतैर्ज्वलेद् देवि वागीशत्वं प्रजायते ।
मूकस्यापि हि मूढस्य शिलारूपस्य नान्यथा ॥
जवापुष्पैराज्ययुक्तैः करवीरैस्तथाविधैः ।
हवनान्मोहयेन्मत्री लोकत्रयनिवासिनः ॥
कर्पूरकुङ्कुमं देवि मिश्रं मृगमदेन हि ।
हवनान्मदनो देवि मन्त्रिणा विजितो भवेत् ॥
सौभाग्येन विलासेन सामर्थ्येनापि सुव्रते ।
चम्पकैः पाटलैर्हुत्वा श्रियं प्रोल्लसिताम्बराम् ॥
प्राप्नोति महतीं मन्त्री स्तम्भयेज्जगतीमिमाम् ।
श्रीखण्डं गुग्गुलुं चन्द्रमगुरुं होमयेत्ततः ।
राजनागेन्द्रदेवानां पुरन्ध्रीं वशमानयेत् ।
सर्वलोका वशास्तस्य भवेयुर्नात्र संशयः ॥

चन्द्रः कर्पूरम् ।

लक्षहोमाल्लभेद्राज्यं दारिद्र्यभयपीड़ितः ।
दुर्गोपसर्गशमनं पलाण्डुमधुहोमतः ॥
खेचरो जायते रात्रौ होमं कृत्वा चतुःपथे ।
क्षीरं च मधु दध्याज्ये पृथग् हुत्वा वरानने ॥
आयुर्बलमथारोग्यं समृद्धिर्जायते नृणाम् ।
क्रमेण शैलजे क्षीरमधुभ्यां रिपुनाशनम् ॥
दधिमाक्षिकहोमेन सौभाग्यं धनमाप्नुयात् ।

पलाण्डुः लशुनविशेषः। पलान्नमिति युक्तः पाठः। "हुत्वा च पलमध्वन्नं मन्त्रं स्मृत्वा महेश्वरि। खेचरो जायते देवि रात्रौ हुत्वा चतुःपथे" इति चतुः शती-दर्शनात्। पलं मांसं माक्षिकं मधु।

सितया केवलं होमो वैरिस्तम्भनकारकः।

सिता शर्करा।

होमो दधिमधुक्षीरलाजाभिर्वीरवन्दिते ।
रोगहन्ता कालहन्ता मृत्युहन्ता न संशयः ॥
कमलैररुणैर्होमः सर्वसंपत्तिदायकः ।
रक्तोत्पलैर्जगद् वश्यं राजानो वशगा क्षणात् ॥
नीलोत्पलैर्महादुष्टा वशमायान्ति नान्यथा ।
श्वेतोत्पलैः श्रियं वाचं लभते हवनाच्छिवे ॥
श्वेतैस्तु ब्रह्मकमलैर्लक्ष्मीं सौभाग्यमाप्नुयात् ।
कह्लारहवनान्मन्त्री सौभाग्यं च बलं लभेत् ॥
पुन्नागवरहोमेन वशीकुर्यान्महेश्वरान् ।
मातुलुङ्गफलोद्भूतहोमेन क्षत्रिया वशाः ।
नागरङ्गफलैर्होमाद् वैश्या वश्या भवन्ति हि ॥
कूष्माण्डफलहोमेन शूद्रा वश्यास्तथापरे ।
द्राक्षाफलैः सिद्धयोष्टौ लक्षहोमान्न संशयः ॥
कदलीफलहोमेन लक्षमात्रेण भूभृतः ।
वशास्तु दशसंख्याका भवन्ति हि न संशयः ॥

खर्जूरीफलहोमेन लक्षमात्रेण भूभृतः ।
वशा विंशतिसंख्याका इत्याज्ञा परमेश्वरी ॥
नारिकेलफलैर्होमात् समृद्धिर्जायते प्रिये ।
लक्षमात्रेण मन्त्रज्ञो राजा पर इव प्रिये ॥
पक्वाम्रफलहोमेन लक्षमात्रेण सुन्दरि ।
चतुःसमुद्रपर्यन्तां मेदिनीं वशमानयेत् ॥
पनसस्य फलैर्होमाल्लक्षेण शतभूभुजः ।
वश्या भवन्ति देवेशि नात्र कार्या विचारणा ॥
तिलाज्यहोमाद् देवेशि कार्यसिद्धिर्भवेत् प्रिये ।
राजिकालवणाभ्यां त दुष्टलोकान् वशं नयेत् ॥
कुङ्कुमेन हुनेद् देवि त्रैलोक्यं वशमानयेत् ।
गुग्गुलस्य च होमेन सर्वदुःखानि नाशयेत् ॥
वैरिणोऽपि वशाः शीघ्रं चन्दनस्यापि होमतः ।
रक्तचन्दनहोमेन वश्यास्त्रिपुरुषा स्त्रियः ॥
कर्पूरस्य च होमेन वाग्वश्यं जायते नृणाम ।
कस्तूरीहोमतो देवि राजानो राजमन्त्रिणः ॥
वश्या भवन्ति सकलाः परिवारयुताः प्रिये ।
तिलतण्डुलहोमेन शान्तिर्भवति मन्दिरे ॥
शर्करागुड़होमेन सर्वकार्यार्थसाधकः ।
घृतपायसहोमेन सितायुक्तेन मन्त्रिणः ॥
त्रैलोक्यं वशमायाति धान्यसिद्धिमवाप्नुयात ।
नानाविधान्नहोमेन धान्यसिद्धिर्भवेद्ध्रुवम् ॥
सोपस्करैस्तु वटकैरुपसर्गान् विनाशयेत् ॥
वन्धूककुसुमैर्होमात् सर्वसत्त्वान् वशं नयेत् ।
जवापुष्पैर्जगद् वश्यं वाणपुष्पैश्च मोहनम् ॥

बटको घृतादिपक्वो व्यञ्जनविशेषः । वाणो गेण्ठीति प्रसिद्धं पुष्पम् ।

वकुलस्य हुनेत् पुष्पैः सौभाग्यं जायते महत् ॥
दशाङ्गधूपहोमेन सौभाग्यमतुलं भवेत् ।
जम्बूफलै स्त्रियो वश्याः कूष्माण्डैर्दैत्यकन्यकाः ।
श्रीफलरतुलां लक्ष्मीं पर्णैर्वा सुरवन्दिते ॥

श्रीफलं विल्वम् ।

इक्षुखण्डैः सुखावाप्तिः तद्वशाः राजकन्यकाः ।
वश्या भवन्ति देवेशि नारिकेलजलेन वा ।।
केवलं घृतहोमेन वरदाः सर्वशक्तयः । इत्यलं विस्तरः ।।

होमादिकं तु सकलं कुमारीपूजनं विना ।।
परिपूर्णफलं नैव सकलं पूजनाद् भवेत् ।
कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम् ।।
कुमार्यै यज्जलं दत्तं तज्जलं सागरोपमम् ।
एकाब्दा षोडशाब्दान्ताः कन्यकाः परिपूजयेत् ।।
विवाहरहिताः पूज्या उत्तरोत्तरसिद्धिदाः ।
कुमारीपूजने देवि कुमारी संतता भवेत् ।

कुमारीमनुना भवेदिति क्वचित्पाठः ।

तथा क्षीराज्यमधुमैरेयं द्रवभेदा भवन्त्यमी ।
सर्वथैव वरारोहे शक्तिदोषो न विद्यते ।।
क्षीरं जलं घृतं भद्रे मधुमैरेयमैक्षवम् ।
पौष्पं तरुमयं तक्रनिर्मितं धान्यसंभवम् ।।
सहकारमयं देवि विविधं वन्धभेदवत् ।

तन्त्रान्तरे माकन्दफलजं देवि नैव सेव्यं द्विजातिभिः ।।
अमादकत्वाद् देवेशि शैशिरं सेव्यते बुधैः ।
अनामिषं नास्ति किंचित् सर्वं क्षीरादिकं शिवे ।

एवं चासवं सर्वत्र चरमजातिपरम् । अन्येषां पातकहेतुत्वात् । तदुक्तं भैरवतन्त्रे
क्षीरेण ब्राह्मणैस्तर्प्यो घृतेन नृपवंशजैः ।
माक्षिकैर्वैश्यवंश्यैश्च आसवैः शूद्रजातिभिः ।।

तन्त्रान्तरे तर्पणं तु प्रकुर्वीत पयसा पायसेन च ।
आज्येन मधुना वापि सुरया मन्त्रसाधकः ।।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्चैव यथाक्रमम् ।

एवं विना मद्येन मांसेन पुंश्चलीसेवनं विना ।
मन्त्रसिद्धिं न चाप्नोति तस्माद् यत्नपरो भवेत् ।।

इत्यपि यथाधिकारमेवानन्यगतिकत्वात् । तथा
मादनं सकलं वस्तु वर्जयेत् कनकादिकान् ।।

कलञ्जं पातकी तस्मात् धर्मो वेदविदांवर ॥
(इति कालिकापुराणे)

तथा ब्राह्मणस्तु सुरां दत्वा ब्राह्मण्यादेव हीयते।
स्वगात्ररुधिरं दत्वा स्वात्मवध्यमवाप्नुयात्। इत्यलं विस्तरः ॥

**अथ षोडशीमन्त्रः ॥**

तत्र ज्ञानार्णवे— आद्य बीजद्वयं भद्रे विपरीतक्रमाल्लिखेत्।
विलिख्य परमेशानि ततोऽन्यानि समुद्धरेत् ॥
अन्तर्मुखा वरारोहे कुमारी त्रिपुरेश्वरी।
एभिस्तु पञ्चसंख्याकैर्बीजैः संपुटितां यजेत् ॥
षट्कूटा परमेशानी विद्येयं षोडशाक्षरी।

आद्यबीजद्वयं शक्तिलक्ष्मीरूपम्। "चन्द्रान्तं वरुणान्तं च शक्रादिसहितं पृथक्।
वामाक्षिबिन्दुनादाढ्यं विद्यादौ योजयेच्छिवे ॥

इत्यभिधानात्। विपरीतमादौ लक्ष्मीबीजं ततः शक्तिबीजमित्यर्थः। अन्तर्मुखेति अन्तर्मध्यबीजं मुखमाद्यं यत्रेत्यर्थः। कुमारी बाला। एभिः पञ्चभिर्बीजैः पुटितं षट्कूटं लिखेत्। तच्च प्रथमं बालामन्त्रेण ततो बीजद्वयेन तन्त्रस्वरसात्। तच्च व्यस्तेन बालामन्त्रेण संपुटत्वं व्यस्ता ततो बाला इति श्रुत्येकवाक्यताबलात्। न च तद्विद्याविशेषणं क्रमात्कूटत्रयमिति तन्त्रविरोधात्। व्यस्तत्वं चान्तर्मुखत्वादिनोक्तरूपेण वस्तुतो बीजद्वयं ततो बाला इत्येवं क्रमः। एभिरिति क्रमोक्तस्यैव लाभात्। गुरुक्रमोऽप्येवमेव। श्रीक्रमसंहितायां।

मा माये मदनो योनिः परेतानि मुखे कुरु।
वेदादि भुवनेशानी श्रीबीजादित्रिकूटकम्।
षट्कूटां संपुटीकुर्यादाद्यैः पञ्चभिरक्षरैरित्यत्र

क्रमेणोक्तलाभात्। गुरुक्रमोऽप्येवमेव। षट्कूटं च तारशक्तिरमास्तदन्ते सुरसुन्दरीबीजत्रयं तन्त्रैकवाक्यताबलात्। एवं च सुन्दरीकूटभेदात् षट्कूटभेदो द्रष्टव्यः।

ज्ञानार्णवे— शिवरूपा शक्तिरूपा महात्रिपुरसुन्दरी।
वेदादिमण्डिता देवि शिवशक्तिमयी यदा ॥
तदा भेदास्तु सकलाः षट्कूटाः परमेश्वरीत्युक्तम्।

तत्र शिवरूपा भुवनेशी शक्तिरूपा लक्ष्मीः वेदादिः प्रणवः तेनादौ मण्डि-तेत्यर्थः। एवं च "तारपुटिता माया त्रिकूटं चे" ति व्याख्यानमपास्तम्। तन्त्रविरोधात्। एवं सुन्दरीत्रिकूटभेदाद् बहवः षोडशीभेदा द्रष्टव्याः। त्रिकूटमात्रस्यैव घटकत्वात्। दक्षिणामूर्त्तितन्त्रे–

द्वितीयस्यादियुग्मं तु विपरीतं लिखेत्सुधीः।
बालयान्तमुखं कृत्वा विलिखेत्तदनन्तरम्॥
तारं मायां ततो लक्ष्मीं क्रमात् कूटत्रयं लिखेत्।
बालया पुटितं कुर्याद् रमाख्यां परमेश्वरीम्॥

आदियुग्मं लक्ष्मीमायारूपम्। बालयेति पुनरपि तन्मन्त्रं लिखेदित्यर्थः। तच्च व्युत्क्रमेणेत्युक्तमेतत्। रमाख्या लक्ष्मीः परमेश्वरी मायाबीजम्। एवं ज्ञानार्णव-तन्त्रयोर्विरोध एव। श्रुतिश्च –"मा मायेतारः पराजक्ष्मीः कुमारिका विद्या व्यस्ता बाला श्रीः पराचे" ति। अत्रापि तान्येव बीजानि तारादिबीज-त्रयबालाबीजयोः क्रममात्रं यथाश्रुतो भिद्यते।

एवं "श्रीँ ह्रीँ क्लीँ ऐँ सौः ओँ ह्रीँ श्रीँ कएइलह्रीँ हसकहलह्रीँ सकलह्रीँ क्लीं ऐँ सौः श्रीँ ह्रीँ" इति तन्त्रेषु मन्त्रः।

"श्रीँ ह्रीँ क्लीँ ऐँ सौः ओँ ह्रीँ श्रीँ सुन्दरीत्रिकूट श्रीँ ह्रीँ क्लीँ ऐँ सौः" इति ज्ञानार्णवक्रमसंहितास्वरसः।

लक्ष्मीः परा मदनयोनियुता च शक्तिस्तारं परा च कमलाप्यथ मूलविद्या। शक्त्यादिभिश्च विपरीततया प्रदिष्टं श्रीमन्त्रराजमुदितं परदेवतायाः॥ इत्यादि वचनात् क्रमोक्तानामेव पञ्चानां वैपरीत्यमिति केचित्।

श्रुतौ तु श्रीँ ह्रीँ ओँ ह्रीँ श्रीँ ऐँ क्लीँ सौः सुन्दरीत्रिकूटं क्लीँ ऐँ सौः श्रीँ ह्रीँ इति मन्त्रः।

वस्तुतोऽस्य मन्त्रस्य श्रुतौ षोडशविधत्वप्रतिपादनात् यथायथं तन्त्रादिषु पृथगेव मन्त्रः। न त्वेकवाक्यतानुरोधेन संकोचो भेदस्यावश्यक-त्वात्।

अत्र मन्त्रे पूजादि पूर्ववत्। अस्य मन्त्रस्य दक्षिणामूर्त्तिर्ऋषिः। शिष्यानां गुरुक्रम उदाहृत इति ज्ञानार्णवस्वरसात्। किंच तन्मूलभूत-बालामन्त्रे भैरवीमन्त्रे च "ऋषिःस्याद्दक्षिणामूर्त्तिश्छन्दः पंक्तिरुदाहृत" मित्य-भिधानेनात्रापि विशेषानुक्तौ तस्यैव लाभात्। पद्धतिष्वपि तथैव लिखनात्।

वस्तुतो वाराहीतन्त्रे वचनमुक्तमेव प्राक्। न त्वानन्दभैरवो "यजेदानन्दभैरव" मित्यादेरन्यथोपपन्नत्वात पूजामात्रबोधकत्वात् सुन्दरी-विद्यानां ऋष्यादिकमेव नास्ति ब्रह्मविद्यात्वादिति केचित्।

पूर्ववत् पुरश्चरणादिकमित्यलं विस्तरः॥

अथ नित्य-भेदाः।

तन्त्रचूड़ामणौ। वाङ्माया नित्यक्लिन्ने च मदद्रवरुणेयुतम्।
वह्निकान्ता-समायुक्ता वागीशेन च साचिता॥

मदद्रेति स्वरूपम्। वरुणेयुतमिति वरुणो वकारः एकारश्चेत्यर्थः।

तथा　वाङ्माया नित्यक्लिन्ने मदद्रवे वह्निवल्लभा।
महानित्येश्वरी देवी धर्मपुत्रेण सेविता॥

तथा　तारो माया वाग्भवान्ते नित्यक्लिन्ने मदद्रवे।
वाङ्मायावह्निजायान्तो नित्यामन्त्रः प्रकीर्त्तितः॥

तथा　कामेन्द्रौ शिववह्निस्थौ चतुर्थस्वरभूषितौ।
कामेशी च समुद्दिष्टा मोदिन्याद्याः पुरोक्तवत्॥

तथा　नृसिंहं कालसंयुक्तं वह्निबीजोपरिस्थितम्।
चतुर्थस्वरसंयुक्तं विन्दुमत् कौलिनी भवेत्॥

कामः ककारः। इन्द्रो लकारः। नृसिंहः क्षकारः। कालो मकारः। अन्ये बहवो भेदाः पूजाक्रमे द्रष्टव्याः॥

अथ पञ्चमीमन्त्राः।

तन्त्रे　ब्रह्मा चाधारशक्तिश्च कालस्वरपुरन्दराः।
एतान् संयोज्य परतः ईश्वरीं योजयेच्छिवे॥

ब्रह्मा ककारः। आधारशक्तिः एकारः। कालस्वर ईकारः कलास्वर इति युक्तः पाठः। पुरन्दरो लकारः। ईश्वरी भुवनेशी। कएईल ह्रीँ इति बीजम्। तत्त्वबोधे "स्मरयोनिरमादेवराजरंजितपादुके" इत्युद्धारमुखेन स्तुतिदर्शनात्।

तथा　चन्द्रबीजं तदादिस्थं शिवबीजं नियोजयेत्।
मादनं शक्रबीजस्थं योजयेद् भुवनेश्वरीम्॥

चन्द्रबीजं सकारः, तस्यादौ शिवबीजं हकारः। मादनं ककारः। शक्रबीजं लकारः। तेन हसकल ह्रीँ इतिबीजम्। उक्तं च तत्त्वबोधे

हंसशक्तिमनोजेन्द्रनन्दिते नन्दिनिप्रिये । इति

शिवबीजं मादनस्थं शक्रषष्ठसमन्वितम् ॥

वज्रसप्तमशक्रस्थं मायाबीजं समुद्धरेत् ।

शिवबीजं हकारः । मादनः ककारः । शक्रषष्ठो हकारः । वज्रं क्षकारः तस्य सप्तमरूपो विलोमेन लकारः । शक्रपदस्यान्यत्रापि संकेतितत्वात् । अन्यथा पञ्चाक्षरत्वाभावात् । रक्तसप्तमं हकारः शक्रषष्ठेत्यनुवादः । शक्रो लकारस्तत्रस्थं मायाबीजमित्यर्थः तेन हसकल ह्रीँ इतिबीजम् । उक्तं च तत्त्वबोधे "शिवकामनभोभूमिसंयुते शक्तिदायिनी" इति ।

तथा　　तुण्डाक्षरं शिवादिस्थं वियदिन्द्रसमन्वितम् ।

धराधरसुताबीजमेकत्रापि नियोजतेत् ॥

तुण्डाक्षरं ककारः । तुण्डार्थकमुखशब्दस्यादिवाचित्वात् । शिवादिस्थं वियदिति सम्बन्धः । तेन शिवादिः सकारः तदुपरिस्थं वियदित्यर्थः । सर्वत्र तथा दर्शनात् । वियत् हकारः । इन्द्रो लकारः । धरेति ह्रीँ इत्यर्थः । तेन हसकल ह्रीँ इति बीजम् । उक्तं च तत्त्वबोधे—कामाकाशपराशक्रसंस्थान-कृतरूपिणीति । परा सकारः ।

तथा　　वकाच्चतुर्थबीजाधः क्रोधीशं च नियोजयेत् ।

पिनाकीशं चन्द्रसंस्थं आकाशं रक्तसंस्थितम् ॥

चतुर्थस्वरसंयुक्तं नादविन्दुसमन्वितम् ।

सर्वमेकत्र संयोज्य पञ्च पञ्चाक्षरी भवेत् ॥

वकः शकारः । तच्चतुर्थो हकारः । चन्द्रः सकारः । तत्रस्थ इत्यर्थः । तेन लकारानन्तरं सकारस्तथैव सर्वत्र दर्शनात् । आकाशं हकारः । रक्तं रेफः । तेन ह्रीँ । एवं हकलस ह्रीँ । उक्तं च तत्त्वबोधे—वियन्मन्मथशक्रेन्दुशरीरे करुणालये । इति पञ्चविंशत्यक्षरो मन्त्र इत्यर्थः ।

कोदण्डसंवलितबाणकरे परेषां

क्षोणीभुजामपरिपन्थिनि मल्लदेवे ।

प्रस्थातरि स्थगितवारिधिवारिपूर-

माराम एव विरराम मनोविनोदः ॥

गुरुचरणसरोजन्यस्तचेताः पुरस्ता-

ल्लिखितविधिषु बालाभैरवीसुन्दरीषु ।

लिखति मनुविशेषांस्तर्कपञ्चाननोऽसा-

वथ विहितनिदेशो मल्लभूमीश्वरेण ॥

इति तन्त्रकौमुद्यां सुन्दरीपटलः ॥३॥

अथ प्रचण्डचण्डिकामन्त्राः ।

तत्र भैरवीतन्त्रे देवीसंवादे

लक्ष्मीं लज्जां तथा मायां मात्रां द्वादशकीमथ ।
वज्रवैरोचनीये द्वे माये फट्स्वाहयान्विते ॥

लज्जा शक्तिबीजम् । माया षष्ठस्वरविन्द्वन्तो हकारः । मायाबीजलज्जाबीजयोः पृथक् फलश्रवणात् । भुवनेशीति प्रसादः । द्वादशकी मात्रा ऐकारः । विन्दुः संप्रदायात् । माया प्रागुक्तैव ।

तथा लक्ष्मीबीजं यदाद्यं स्यात्तदा श्रीः सर्वतोमुखी ।
लज्जाबीजेन चाद्येन वश्यतां यान्ति योषितः ॥
मायाबीजेन चाद्येन महापातकनाशनम् ।
मात्रा द्वादशकीबीजमाद्यं स्यान्मुक्तिकारणम् ॥

मन्त्रान्तरमाह अनादिबीजं मन्त्रस्य कीर्त्तयेन्मन्त्रवित्तमः ।
वज्रवैरोचनीये स्यान्मायाबीजे ततःपरम् ॥
फट्स्वाहया समायुक्तं मन्त्रं मन्त्रिमहोरगम्
सर्वसिद्धिप्रदं पुण्यं भुक्तिमुक्तिप्रदायकम् ।

अनादिबीजं ओंकारः । एवं च

श्रीँ ह्रीँ हूँ ऐँ वज्रवैरोचनीये हूँ हूँ फट् स्वाहा इत्येको मन्त्रः ।
ओँ वज्रवैरोचनीये हूँ हूँ फट् स्वाहा इत्यपरो मन्त्रः ।

एवं च प्रथममन्त्रे प्रणवसम्बन्धो नास्ति मानाभावात्, तत्त्वबोधमत्स्यसूक्तादावप्येवमेवोद्धारात् । तत्त्वबोधे

शृणु देविप्रवक्ष्यामि षोडशीं दक्षिणामपि ।
अन्या अपि महेशानि भावेन कथयामि ते ॥
रमा कूर्चं तथा लज्जा वाग्भवं वज्रवै पदम् ।
रोचनीये पराद्वन्द्वमस्त्रं चाप्यग्निवल्लभा ॥
इयं सा षोडशी प्रोक्ता त्रिशक्तिरभिधीयते ॥

तथा तारं फान्तजवह्निस्थं वारुणं भौतिकं तथा।
रोचनीये द्विधा कूर्चं फट्स्वाहान्तस्तथा परः॥

तथा वेदाद्यं वज्रवैरोचनीये सर्वपदं वदेत्।
बुद्धिडाकिस्थानीये वज्रयुक्तं च कीर्त्तयेत्॥
वर्णिनीये शिवं षष्ठस्वरयुक् विन्दुचन्द्रवत्।
द्वेधा फड्वह्निवनिता भार्णस्त्वेष मनुर्महान्॥

द्वेधा शिवमिति सम्बन्धः। भानि सप्तविंशतिः। अतएव

प्रणवे च त्रयो देवा ब्रह्मविष्णुमहेश्वराः।
वकारे वरुणः साक्षात् जकारे च सुराधिपः॥
रेफे हुताशनो देवो वकारे च सुराधिपः।
ऐकारे च सुधा देवी रेफे त्रिपुरसुन्दरी॥
त्रैलोक्यविजया देवी सदैवौकारसंभवा।
चकारे चन्द्रमा देवो नकारे च विनायकः॥
ईकारे कमला साक्षात् येकारे च सरस्वती।
मायायुग्मे तथा देवी प्रकृत्या सह संगता॥
फट्कारे प्रकृतिः साक्षात् स्वाकारे कुसुमायुधः।
हाकारे च रतिस्तिष्ठेदेष मन्त्रसमुच्चयः॥

इत्यनेन मन्त्रवर्णक्रमकथने द्वितीयमन्त्रस्यैवाभिधानात्। यदि च तन्त्रे "प्रणवेन समायुक्तो मन्त्रः सर्वार्थसाधकः" इति पाठः तदा प्रणवयोगेन मन्त्रान्तरत्वमित्यर्थ इति निबन्धारः।

तथा भैरवोऽस्य ऋषिः प्रोक्तश्छन्दः सम्राट् वरानने।
देवता छिन्नमस्ता स्याद् बीजं मायायुगं भवेत्॥

तन्त्रान्तरे शक्ति-त्रितत्त्व-वाग्बीज-तारमन्त्रान् समुद्धरेत्।
वज्रवैरोचनीत्यन्ते भगवान्मारुतो भवेत्॥
कूर्चमस्त्रं द्विठान्तोसौ त्रिशक्तिमनुरीरितः।

एवं मन्त्र उक्तः। शक्तिः ह्रीँ। त्रितत्त्वं हूँ। भग एकारः। मारुतो यकारः। कूर्चं हूँ। अस्त्रं फट्। द्विठं स्वाहा।

तत्रैव भैरवतन्त्रे अथातः संप्रवक्ष्यामि देव्याः संक्षेपतो विधिम्।

येन सम्यग् विधानेन सर्वसिद्धिमवाप्नुयात्॥
अर्घपाद्यादिकं कृत्वा मण्डलं पुरतो न्यसेत्।
मण्डले स्थापयेद् देवीं तामावाहनमुद्रया॥
अर्चितव्या सदा भक्त्या भुक्तिमुक्तिफलप्रदा।
भुक्तौ मुक्तौ च शान्तौ च श्वेतपुष्पं विनिर्दिशेत्॥
आकृष्टौ च वशीकार्ये रक्तमेव विनिःक्षिपेत्।
स्तम्भने मोहने मन्त्री पीतपुष्पं विनिर्दिशेत्॥
उच्चाटने मारणे च कृष्णमेव विनिर्दिशेत्।
काम्यकर्मणि सर्वत्र ध्यानं स्याद् पुष्पवर्णकम्।

मण्डलं वक्ष्यमाणम्। पुष्पवर्णकमिति यद्वर्णपुष्पेण पूजा तद्वर्णां देवतां ध्यायेदित्यर्थः।

तथा रात्रौ विशेषतः पूजा कर्त्तव्या सिद्धिमिच्छता।
देवदानवगन्धर्वा सिद्धराक्षसकिन्नराः॥
एतेऽपि वशमायान्ति किं पुनः क्षुद्रमानुषाः।
साधितोऽयं महामन्त्रः सर्वसिद्धिप्रदायकः॥
ददात्यष्टौ महासिद्धीः किमन्याः क्षुद्रिकाः क्रियाः॥
रात्रौ बलिः प्रदातव्यो माषमांससुरादिभिः।
अथवा मधुपानाद्यैर्मधुरैर्विभवविस्तरैः॥
ताम्बूलवदनः श्रीमान् गुरुभक्तिपरायणः।
जपेन्मन्त्रं प्रमुच्येत् सर्वैरेव हि पातकैः॥
ताम्बूलेन विना चैव मत्स्यमांसैस्तथासवैः।
माषभक्तबलिर्देवि मन्त्रसिद्धिं न यच्छति॥
तस्मात् सर्वप्रयत्नेन बलिर्देयः सदामिषैः।
आमिषेन विना तत्र देवी तुष्टिं न गच्छति॥

सुरेति चरमजातिपरमित्युक्तमेव । अतएव द्विजातीनामन्येषामप्यशक्तौ विशेषमाह अथवेति । मधुपानेति द्वन्द्वः । पानं क्षीरादि । कर्मधारय एवेति कश्चित् । अन्यथा बलिदानेऽनन्वयप्रसङ्गात् ।

बलिदानमन्त्रश्च । उच्चरेत् प्रणवं पूर्वं सर्वबुद्धिप्रदेऽन्वितम् ।
वर्णिनीये ततो वाच्यं सर्वसिद्धिप्रदे ततः ॥
डाकिनीये ततो वाच्यं देवीनाम ततः परम् ।
एह्येहीति ततो वाच्यमिमं बलिमतः परम् ॥
गृह्ण गृह्ण ततः प्रोक्त्वा मम सिद्धिं ततः परम् ।
देहि देहीति माये च ततः फट्स्वाहयायुते ॥
बलिमन्त्रः समाख्यातः पूजितोऽयं सुरेश्वरि ॥

एवं च ओँ सर्वबुद्धिप्रदे वर्णनीये सर्वसिद्धिप्रदे डाकिनीये छिन्नमस्ते एह्येहि इमं बलिं गृह्ण गृह्ण मम सिद्धिं देहि देहि हूँ हूँ फट्स्वाहा-इति मन्त्रः ॥

तथा
अथ किं बहुनोक्तेन ब्रह्महत्यादिकं च यत् ।
तत् क्षालयति मन्त्रोऽयं लक्षजापान्न संशयः ॥
अगम्यागमनं चैव तथाभक्ष्यस्य भक्षणम् ।
सकृदुच्चरितो मन्त्रो दहत्यग्निरिवेन्धनम् ॥
अर्चितव्या सदा रात्रौ माषमांससुरादिभिः ।
एष मन्त्रः सदा गोप्यो न प्रकाश्यः कदाचन ॥
अनास्था विघ्नमत्यन्तमश्रद्धा जपकर्मणि ।
आलस्यं भीरुताऽशक्तिर्मन्त्रहाने सुनिश्चयः ॥
नारिदोषो न विद्वेषो नाशौचं नियमोऽपि न ।
सिद्धमन्त्रतया नात्र पूर्वमेवापरिश्रमः ॥
जाग्रत् शयान उत्तिष्ठन् भुञ्जानो मैथुनोद्यतः ।
सदाकालं जपेन्मन्त्रमिष्टसिद्धिप्रदायकम् ॥
वने राजकुले द्यूते संग्रामे रिपुसंकटे ।
यः सदा जपते मन्त्रमाधिस्तस्य न विद्यते ॥
लिखित्वा स्वकरे मन्त्रं मुष्टिबन्धो विधीयते ।
स्तम्भयत्याशु सर्वाणि यावन्मुष्टिं न मुञ्चति ॥

लिखित्वा स्वकरे मन्त्रमातुरं संस्पृशेन्नरः ।
विमुञ्चति हठाद्रोगाद् दीर्घमायुश्च विन्दति ॥
शुक्लेन ध्यानमात्रेण मृतमुत्थापयेन्नरम् ।
महोरगशतैर्दष्टं मृतमुत्थापयेद् ध्रुवम् ॥
रक्तेन वशमायान्ति सर्वमाकृष्यते जगत् ।
पीतेन स्तम्भयेत् सर्वं लोकवाजिगजादिकम् ॥
लिखित्वा स्वकरे मन्त्रं यावन्मुष्टिं न मुञ्चति ।
कृष्णेन ध्यानमात्रेण रिपुमुच्चाटयेन्नरः ॥
मारयेदप्रयत्नेन कृष्णध्यानान्न संशयः ॥
तर्पणं च प्रकुर्वीत पयसा पायसेन च ।
आज्येन मधुना वापि सुरया मन्त्रसाधकः ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरस्य यथाक्रमम् ।
तर्पणस्य विधानेन हठात् सिद्धिः प्रजायते ॥

तथा क्षीरेण ब्राह्मणैस्तर्प्या घृतेन नृपवंशजैः ।
माक्षिकैर्वैश्यवर्णैश्च आसवैः शूद्रजातिभिः ॥
क्षीरं वृक्षसमुद्भूतं मद्यं वल्कलसंयुतम् ।
मधु पुष्पोद्भवं चैव आसवं तण्डुलोद्भवम् ॥
इत्येवं कथिता देवी समासेन मया प्रिये ।
विशेषं च प्रवक्ष्यामि शृणु देवि यथाक्रमम् ॥
अन्तरे स्वशरीरस्य नाभिनीरजसंगताम् ।
निर्लेपां निर्गुणां सौम्यां बालचन्द्रप्रभामिव ॥
समाधिमात्रगम्यां च गुणत्रितयवेष्टिताम् ।
कलातीतां गुणातीतां भुक्तिमुक्तिप्रदां स्मरेत् ॥
अस्यास्तु कथितं ध्यानं ब्रवीम्यावाहनं शृणु ।
सर्वबुद्धिप्रदे पूर्वमुच्चरेत् साधकोत्तमः ॥
वर्णनीये ततो वाच्यं देवीनाम ततः परम् ॥
एह्येहीति ततो वाच्यमिहेति तदनन्तरम् ।
तिष्ठ तिष्ठेति वाच्यं च मायायुग्ममतः परम् ॥
फडक्षरसमायुक्तं स्वाहेति तदनन्तरम् ।
इत्यावाहनमुद्दिष्टं स्थापनेन समन्वितम् ॥

अथान्तर्यजनं वक्ष्ये यथावदवधारय ।
वामेनानिलमाकृष्य किंचिदाकुञ्चयेद् ध्रुवम् ॥
रेचयेद् भानु (ल) मार्गेण जिह्वां तालुगतां चरेत् ।
शक्तिं शिवपदे योज्य किंचिदाकुञ्जितेक्षणम् ।
अन्तर्यागमिदं देवि कथितं गुरुभिः क्रमात् ॥

तथा

करकच्छपिकां बद्ध्वा श्वासस्याधारणं तथा ।
ओंकारेण पुरो जीवमूर्द्ध्वमुत्क्षिप्य यत्नतः ॥
निर्जीवं देहमोङ्कारवह्निबीजेन दाहयेत् ।
तेनैव वायुबीजेन तद्भस्मापगमं भवेत् ।
तेनैव मेघरूपेण तत्र वृष्टिं विचिन्तयेत् ॥
तेनैवामृतवृष्टिं च ध्यात्वा देहं नवीकृतम् ।
पूर्वोक्तदेवतारूपं सर्वकल्मषवर्जितम् ॥
करकच्छपिकापुष्पं हस्ते मूलेन धारयेत् ।
इतीयं भूतशुद्धिस्तु लोकानां हितकारिणी ॥

तथा

उच्चरेत्पूर्वमाकारं विन्दुलाञ्छितमस्तकम् ।
खड्गाय हृदयायेति स्वाहायुक्तं कनीयसि ॥
ईकारं च ततो देवि चन्द्रकोटिसमप्रभम् ।
सुखड्गाय ततो वाच्यं शिरसे तदनन्तरम् ॥
स्वाहायुक्तं ततो वाच्यं पवित्राङ्गुलिसंयुतम् ।
ऊंकारं च ततो देवि विन्दुलाञ्छितमस्तकम ।
श्रीवज्राय ततो युक्तं शिखायै च ततः परम् ॥
स्वाहान्तं मध्यमायां तु विन्यसेत् तदनन्तरम् ।
मात्राद्वादशकं देवि पाशाय कवचायान्तम् ॥
स्वाहान्तं विन्यसेन्मन्त्रं तर्जन्यां तदनन्तरम् ।
औंकारं च ततो देवि विन्दुलाञ्छितमङ्कुशम ॥
नेत्रत्रयायसंयुक्तमङ्गुष्ठकरयोर्न्यसेत् ।
अकारं च बिसर्गान्तं सुररक्षायसंयुतम् ॥
असुररक्षायसंयुक्तमस्त्रायेति ततः परम् ।
फडक्षरसमायुक्तं विन्यसेत् करयोर्द्वयोः ॥

हृदि मूर्ध्नि शिखायां तु कवचे नेत्रमण्डले ।
यावदस्त्रं चतुर्दिक्षु विदिक्षु च यथाक्रमम् ॥

अङ्गुष्ठकरयोः कराङ्गुष्ठयोरित्यर्थः ।

अथास्या मण्डलं वक्ष्ये यथावदवधारय ।
दीक्षाकरं महादेवि सर्वकर्मप्रयोजकम् ॥
सितं कुर्याद् दलं पूर्वमाग्नेयं रक्तवर्णकम् ।
याम्ये कृष्णमतः पीतं शुक्लं रक्तं (सितो ) ततोसितम् ॥
ततो पीतं प्रकुर्वीत कर्णिका तस्य मध्यगा ।
तत्र मध्ये प्रकुर्वीत मण्डलं चण्डरोचिषः ॥
रजःसत्त्वतमो रेखा रक्तशुक्लासिताःक्रमात् ।
मायायुग्मं तथा न्यस्य फडक्षरसमन्वितम् ॥
बाह्यान्तरस्य चक्रस्य कुर्यात् त्रिद्वारसंगतम् ।
पूर्वं रक्तं ततः पीतं शुक्लं रक्तं यथाक्रमम् ॥
चतुर्द्वारसमायुक्तं क्षेत्रपालैरधिष्ठितम् ।

रजःसत्त्वेति एवं त्रिकोणं सिद्ध्यति तत्रैव त्रिद्वारयुक्तत्वं तस्यैवान्तरचक्रत्वात् ।

पूर्वद्वारे करालं च विकरालं च दक्षिणे ।
पश्चिमे चातिकालं च महाकालं तथोत्तरे ॥
चतुर्थ्या च नमोन्तेन पूजामेषां समाचरेत् ।
आधारशक्तिं कूर्मं च नागराजमतः परम् ॥
पद्मनालं च पद्मं च पूजयेन्मन्त्रविन्नरः ।
मण्डलं चण्डरश्मिं च रजः सत्त्वं तमस्तथा ॥
रतिकामौ च संपूज्य शक्तिपूजां समाचरेत् ।
एकलिङ्गाभिधां देवीं योगिनीं डाकिनीं तथा ॥
भैरवीं च महापूर्वभैरवीं तदनन्तरम् ।
इन्द्राक्षीमसितां देवीं ततः संहारिणीं क्रमात् ॥
पूर्वादिकदले पूज्याः शक्तयः क्रमयोगतः ।
ततो देव्यासनं मध्ये देवीमूर्तिमतः परम् ॥

तस्मादावाहनं कुर्यान्मन्त्रेणानेन साधकः ।
चलच्चन्द्रप्रभातुल्यां प्रदीपकलिकोत्तमाम् ॥
षोडशवर्षदेशीयां ध्यायेन्मण्डलसंयुताम् ।
ततः पुष्पाञ्जलिं दत्वा उच्चरेन्मन्त्रमुत्तमम् ।
शिखामन्त्रेण संपूज्य मण्डलस्थां महेश्वरीम् ॥
संपूजयेत्तथाङ्गानि ततो मन्त्रजपं चरेत् ।
दश द्वादशधा वापि ततो होमं समाचरेत् ॥
गुरवे दक्षिणां दद्यात् सुवर्णानि वसुन्धराम् ।
एतत्ते कथितं देवि दीक्षाकर्म यथाक्रमम् ॥
मण्डलं पूर्ववत् कृत्वा पूजां पञ्चोपचारिकीम् ।
समिद्भिः श्रीफलानां च घृतयुक्तैः समाचरेत् ॥
अथवा तत्समैः कुर्यादुदुम्बरपलाशयोः ।
तदभावे विधातव्यमपामार्गसमुद्भवैः ॥
शतमष्टोत्तरं देवि होतव्यं मन्त्रसाधकैः ।

अयं च होमः पूजाङ्गं दीक्षासंदंशात् । काम्यहोमस्य पृथगेव वक्ष्यमाणत्वात्, पुरश्चरणस्याप्रस्तुत्वात् ।

तथा

शृणु देवि प्रवक्ष्यामि वह्निस्थापनसंगतिम् ।
जायन्ते सिद्धयो येन साधकस्य तथेप्सिताः ॥
होमकर्म विधातव्यं कामनां मन्त्रविच्चरेत् ।
ततो जपं प्रकुर्वीत जायन्ते येन सिद्धयः ॥
लक्षं जप्त्वास्य मन्त्रस्य लभेत् सिद्धिं यथेप्सिताम् ।
सर्वं संपद्यते देवि जपहोमान्न संशयः ॥

इत्यलं विस्तरः ।

अथ पूजापद्धतिः संक्षिप्य लिख्यते ।

आदौ सम्यगाचम्यार्घस्थापनं कुर्यात् । तद्यथा अस्त्रमन्त्रेणार्घं प्रक्षाल्य मूलेन जलैरापूर्य तेनैव चन्दनादिकं दत्वा विस्तारितहस्तं तदुपरि दत्वा मूलेन दशधाभिमन्त्र्य तज्जलेन मूलेनैव पूजोपकरणं संप्रोक्ष्य कवचेनावगुण्ठ्यास्त्रेण रक्षयेत् । ततश्चतुर्द्वारभूपुरावृत्तं अष्टदलं पद्मं विलिख्य तन्मध्ये

भानुमण्डलं तत्र रजःसत्त्वतमोरूपरेखात्रययुतं त्रिद्वारं योनिमण्डलं तत्र हूंकारद्वयं फटकारं च लिखेत्। ततो वामे गुरुभ्यो नमः दक्षिणे गणेशाय नमः पुरतो देवतां नमस्कृत्य सुन्दरीपरिच्छेदोक्तभूतशुद्धिं कुर्यात्। ततोदेवीं ध्यायेत्।

स्वनाभौ नीरजं ध्यायेत् शुद्धं विकसितं सितम्।
तत्पद्मकोषमध्ये च मण्डलं चण्डरोचिषः॥
जवाकुसुमसंकाशं नवबन्धूकसन्निभम्।
रजःसत्त्वतमोरेखायोनिमण्डलमण्डितम्॥
मध्ये चैव सदा देवीं सूर्यकोटिसमप्रभाम्।
देवीं तां च करे वामे धारयन्तीं स्वमस्तकम्॥
प्रसारितमुखं भीमं लेलिहानाग्रजिह्वकम्।
प्रपिबद्रौधिरीं धारां निजकण्ठसमुद्गताम्॥
विकीर्णकेशनिचयां नानाभूषणभूषिताम्।
दिगम्बरां महाघोरां प्रत्यालीढपदां स्थिताम्॥
रतिकामोपरिस्थां तां केचिद् ध्यायन्ति मन्त्रिणः।
विपरीतरतिस्थं च ध्यायेद् रतिमनोभवम्॥
वर्णिनीडाकिनीयुक्तां वामदक्षिणपार्श्वयोः।
दक्षिणे वर्णिनीं ध्यायेत् डाकिनीं वामके तथा॥
वर्णिनीं लोहितां सौम्यां मुक्तकेशीं दिगम्बराम्।
कपालकर्त्तृकाहस्तां वामदक्षिणयोगतः॥
देवीगलोच्छलद्रक्तधारापानं प्रकुर्वतीम्।
अस्थिमालाधरां देवीं नागयज्ञोपवीतिनीम्॥
डाकिनीं वामदेशे तु कल्पान्तज्वलनोपमाम्।
विद्युच्छटाभनयनां दन्तपंक्तिबलाकिनीम्॥
दंष्ट्राकरालवदनां पीनोन्नतपयोधराम्।
महादेवीं महाघोरां मुक्तकेशीं दिगम्बराम्॥
लेलिहानमहाजिह्वां मुण्डमालाविभूषिताम्।
करस्थेन कपालेन भीषणेनातिभीषणाम्॥
आभ्यां निषेवितां ध्यायेद् देवीं साधकसत्तमः॥

अपरं च प्रवक्ष्यामि शृणु देवि यथाक्रमम् ।
स्वनाभौ नीरजं शुभ्रं भानुमण्डलमण्डितम् ॥
तत्र मध्ये महादेवीं ध्यायेत्तस्याधिदेवताम् ।
प्रदीपकलिकाकारामतिभीमां व्यवस्थिताम् ॥
करकच्छपिकां बद्ध्वा बद्धपद्मासनस्थिताम् ॥
योगनिद्रासमायुक्तां हृदयस्थितलोचनाम् ॥
इतीदं निःकलं ध्यानं तथा चातिकलं स्थितम् ।
इत्येवं रूपमात्मानं विचिन्तयेत् ।

ततोऽस्य मन्त्रस्य भैरवऋषिः सम्राट्छन्दः छिन्नमस्ता देवता हूंकारद्वयं बीजं स्वाहाशक्तिरभीष्टसिद्ध्यर्थे विनियोगः । इति स्मृत्वा ऋषिच्छन्दोदैवतानि शिरोवदनहृत्सु विन्यस्य कराङ्गन्यासं कुर्यात् । तद्यथा आं खड्गाय हृदयाय स्वाहा इति कनिष्ठयोः । ईं सुखड्गाय शिरसे स्वाहा इत्यनामिकयोः । ॐ श्रीवज्राय शिखायै स्वाहा इति मध्यमयोः । ऐं पाशाय कवचाय स्वाहा इति तर्जन्योः । औं अङ्कुशाय नेत्रत्रयाय वौषट् इत्यङ्गुष्ठयोः । अः सुररक्षाय असुरक्षयाय अस्त्राय फडिति करतलपृष्ठयोः । तत एतानेव मन्त्रान् हृदयशिरःशिखाकवचनेत्रकरतलपृष्ठेष्वपि विन्यसेत् । तत ओंकारेण पुष्पमेकं गृहीत्वा अस्त्रेण जलेनात्मानं वेष्टयित्वा नाभेरधः करकच्छपिकां बद्ध्वा यथोक्तरूपां देवीं संचिन्त्य आधारस्थदीपशिखाकारतेजःस्वरूपां कट्याकुञ्चनेनापानवायुमाकृष्य गुदध्वजान्तरे योनिस्थानेऽनवरतबन्धूककुसुमसमानां कामोपरिस्थां परमसूक्ष्मां देवीं वामपादगुल्फेन सन्निरुद्ध्यापानवायुनोत्थाप्य कुण्डलिनीमुद्बोध्य सुषुम्नायां प्रवेश्य षट्कमलानि भित्त्वा जिह्वान्तानुगतां कृत्वा सदाशिवे संयोज्य तामेव शिवयोगेन देवीत्रयरूपां क्रमेण स्थूलतामुपगतां दक्षनासापुटेन निःसार्यबाह्याञ्जलावारोप्य मण्डले स्थापयेदनेन मन्त्रेण "ओं सर्वबुद्धिप्रदे वर्णनीये सर्वसिद्धिप्रदे डाकिनीये वज्रवैरोचनीये एह्येहि इह तिष्ठ-तिष्ठ हूँ हूँ फट् स्वाहा" तथा योनिमुद्रां प्रदर्शयेत् । ततः पुष्पाञ्जलिं दत्वा वषडन्तेन मूलमन्त्रेणार्घं देव्यै कल्पयामीति अर्घं दद्यात् । शेषे नमः स्वाहा इति योजयेदिति केचित् । ततः पाद्याचमनीयमधुपर्कपुनराचमनीयानि उक्तक्रमेण दत्वा यथाविभवं तां पूजयेत् ।

ततो मण्डलान्तरे वायव्याग्निनैर्ऋतान्तं गणेशगुरुपरमगुरुक्षेत्रपालान् पूजयेत् । ततः पूर्वाद्युत्तरपर्यन्तं करालं विकरालं अतिकरालं महाकराल

संपूज्य मध्ये ओं आधारशक्त्यै नमः। एवं कूर्मानन्तपद्मनालपद्मतत्कर्णिका-दित्यमण्डलरजः सत्त्वतमांसि संपूज्य ओँ ह्रीँ रत्यैनमः ओँ क्लीँ कामायनमः इति पूजयेत्। ततो देव्याः प्रागादिवामावर्त्तेन ओं ऐं एकलिङ्गायै नमः एवं योगिनीडाकिनीभैरवीमहाभैरवीइन्द्राक्षीअसिताक्षीसंहारिणीः पूजयेत्। ततो देवीं मध्ये त्रिःसंपूज्य देवीदक्षिणे ओँ ह्रीँ प्रकृत्यै वर्णिन्यैनमः वामे ओँ ह्रीँ विकृत्यै डाकिन्यैनमः मध्ये मूलेन वषडन्तेन चन्दनं दत्वा पुष्पाञ्जलित्रयेण पूजयेत्। ततो देवीदक्षिणवामक्रमेण कोणचतुष्टये चतुर्दिक्षु अङ्गानि पूजयेत्।

ततो मूलेन नमोन्तेन नैवेद्यादिकं दद्यात्। ततो माषभक्तादिना बलिदानम्। तत्र मन्त्रः ओँ सर्वबुद्धिप्रदे वर्णिनीये सर्वसिद्धिप्रदे डाकिनीये छिन्नमस्ते एह्येहि इमं बलिं गृह्ण गृह्ण मम सिद्धिं देहि देहि हूँ हूँ फट् स्वाहा। स्वाहान्तेन ताम्बूलमुद्वर्त्तनं च दद्यात। पुष्पाञ्जलिं दत्वा देवीरूपमात्मानं विचिन्त्य ओँ वैरोचनीये विद्महे छिन्नमस्तायै धीमहि तन्नो देवी प्रचोदयादिति जप्त्वा मूलमन्त्रं जपेत्। ततो दण्डवत् प्रणम्य अस्त्रमन्त्रेण निर्माल्यपुष्पमेक-मुत्तरदिशि निःक्षिप्य संहारमुद्रया अञ्जलावारोप्य वामनासापुटेन योनिमुद्रा-समारूढां प्रदीपकलिकाकारां कृष्णपक्षप्रतिपच्चन्द्रकलामिव क्रमशः सूक्ष्मतामुप-गतां चण्डरश्मौ निवेशयेत्। तत्र मन्त्रः

उत्तरे शिखरे जाते भूम्यां पर्वतवासिनि।
ब्रह्मयोनिसमुत्पन्ने गच्छ देवि ममान्तरम्॥

ततः स्वेच्छया विहर इति वदेत्। रात्रौ बलिदानं चतुःपथश्मशानादौ कुर्यात्। अथ स्तुतिः।

नाभौ शुभ्रसरोजमध्यविलसद्बन्धूकपुष्पारुणं
भास्वत्भास्करमण्डलं तदुदरे यद् योनिचक्रं महत्।
तन्मध्ये विपरीतमैथुनपरप्रद्युम्नतत्कामिनी
पृष्ठस्थां तरुणार्ककोटिविलसत्तेजःस्वरूपां सिताम्॥१॥
वामे छिन्नशिरोधरां तदितरे पाणौ बृहत्कर्त्तृकां
प्रत्यालीढपदां दिगन्तवसनामुन्मुक्तकेशाव्रजाम्।

छिन्नात्मीयशिरःसमुच्छलदसृग्धारां पिबन्तीं परां
बालादित्यसमप्रकाशविलसन्नेत्रत्रयोद्भासिनीम् ॥ २ ॥
वामादन्यत्र नाडीबहुबहलगलद्रक्तधाराभिरुच्चैः
पायन्तीमस्थिभूषां करकमललसत्कर्तृ कामुग्ररूपाम् ।
रक्तामारक्तकेशामपगतवसनां वर्णिनीमात्मशक्तिं
प्रत्यालीढ़ोरुपादामरुणिततनयनां योगिनीं योगमुद्राम् ॥ ३ ॥
दिग्वस्त्रां स्रस्तकेशां प्रलयघनघटाघोररूपां प्रचण्डां
द्रंष्टादुःप्रेक्ष्यवक्त्रोदरविवरवलल्लोलजिह्वाग्रभासम् ।
विद्युल्लोलाक्षियुग्मां हृदयतटलसद्भोगिभीमां सुमूर्त्तिं
सद्यश्छिन्नात्मकण्ठप्रगलितरुधिरैर्डाकिनीं वर्धयन्तीम् ॥ ४ ॥
ब्रह्मेशानाच्युताद्यैःशिरसि विनिहितानन्दपादारविन्दा-
मात्मज्ञैर्योगिमुख्यैः प्रतिपदमनिशं चिन्तिताचिन्त्यरूपाम् ।
संसारे सारभूतां त्रिभुवनजननीं छिन्नमस्तां प्रशस्ता—
मिष्टान्तामिष्टदात्रीं कलिकलुषहरां चेतसा चिन्तयामि ॥ ५ ॥
उत्पत्तिस्थितिसंहृतीर्घटयितुं धत्ते त्रिरूपां तनुं
त्रैगुण्याज्जगतो यदीयविकृतिर्ब्रह्माच्युतः शूलधृक् ।
तामाद्यां प्रकृतिं स्मरामि मनसा सर्वार्थसंसिद्धये
यस्याः स्मेरपदारविन्दयुगले लाभं भजन्तेऽमराः ॥ ६ ॥
अलिपिशितपुरन्ध्रीयोगपूजापरोऽहं
बहुविधगुरुकर्मारम्भसंभावितोऽहम् ।
पशुजनविरतोऽहं भैरवीसंस्थितोऽहं
गुरुचरणपरोऽहं भैरवोऽहं शिवोऽहम् ॥ ७ ॥
इमं स्तवं महापुण्यं ब्रह्मणा भाषितं पुरा ।
यः पठेत् प्रातरुत्थाय देव्याः सन्निहितोऽपि वा ॥
तस्य सिद्धिर्भवेद्देवि वाञ्छितार्थप्रदायिनी ।
धनं धान्यं सुतं जायां हयं हस्तिनमेव च ।
वसुन्धरां महाविद्यामष्टौ सिद्धीर्लभेद् ध्रुवम् ॥



अथ होमविधिं वक्ष्येऽवश्यं वशमवाप्नुयात् ।
येन सम्यग् विधानेन सर्वसिद्धिः प्रजायते ॥
विधाय मण्डलं पूर्वं पूर्वास्यं च यथाविधि ।
षट्कोणे मण्डले चैव वह्नेः स्थापनमाचरेत् ॥
ततो होमं प्रकुर्वीत समिद्भिः कुसुमैर्नवैः ।
श्रीफलानां पलाशानां तथैवोदुम्बरस्य च ॥
सर्वसिद्धिप्रदो होमः कर्त्तव्योऽत्र प्रयत्नतः ।
शतमष्टोत्तरं हुत्वा जपं कुर्यात् ततः परम् ॥
मालतीकुसुमैर्होमः कर्त्तव्यो मधुसंयुतैः ।
घृतेन सहितो वापि वागीशत्वप्रदायकः ॥
आज्ययुक्तेन भक्तेन बलिर्देयः सदामिषैः ।
षण्मासं दधिसंयुक्तो लक्ष्मीस्तस्य स्थिरा भवेत् ॥
छागमांसं सरक्तं च घृतेन प्लावितं तथा ।
यो जुहोत्ययुतं देवीं राजा तस्य वशो भवेत् ॥
श्वेतेन करवीरेण होमं सम्यक् करोति यः ।
लक्षमात्रविधानेन स जीवेत् कालदष्टकम् ॥
जुहुयात् तिलपुष्पेण मधुनाक्तेन साधकः ।
लक्षसंख्यानि यो देवि सिद्धिस्तस्य न संशयः ॥
कर्णिकारसहस्राणि यो जुहोति घृतैः सह ।
स प्राप्नोति परां सिद्धिमीप्सितां सुरसुन्दरि ॥
वन्धूककुसुमं हुत्वा घृतेनायुतसंख्यकम् ।
तस्य प्रिया भवेद् देवी सर्वसिद्धिफलप्रदा ॥
तिलतण्डुलहोमन्तु यो घृतेन समाचरेत् ।
जगन्ति तस्य मित्राणि जायन्ते सुरसुन्दरि ॥
पायसेन चरेद्धोमं घृतेन सह सुन्दरि ।
त्रिसन्ध्यं मासमात्रं तु वागीशत्वमवाप्नुयात् ॥
इत्येकः कथितो देवि क्रमो होमविधेर्मया ।
अपरं च प्रवक्ष्यामि कामनायां विशेषतः ॥

गोमांसं मधुनालोड्य वामहस्तेन होमयेत् ।
अपि देवा वशं यान्ति किं पुनः क्षुद्रमानुषाः ॥
निष्ठीवनं दन्तकाष्ठं स्वदेहोद्वर्त्तनं तथा ।
नाम्ना मधूकहोमेन त्रैलोक्यं वशमानयेत् ॥
रजस्वलाया रक्तेन युतमुग्दीर्णभोजनम् ।
सहितं मानुषैः केशैः साध्यमाकर्षयेद्ध्रुवम् ॥
रुरुमांसेन साज्येन कृत्वा होमं वरानने ।
सर्वसिद्धिमवाप्नोति सुराणामपि दुर्लभाम् ॥
पललं माहिषं हुत्वा मधुना सह सुन्दरि ।
स्तम्भयत्याशु शत्रूणां बलं दूरेऽपि संस्थितम् ॥
चम्पकं घृतसंयुक्तं हुत्वा नगवरात्मजे ।
रिपुसैन्यं महाघोरं स्तम्भयत्यचिराच्छिवे ॥
सद्यो गोमायुमांसेन होतव्यं सुरयान्वितम् ।
नूनं हस्ते भवेत्तस्य सर्वसिद्धिप्रवर्त्तनम् ॥
गोमायुं होमयेद् यस्तु धनदेन समो भवेत् ।
जप्तो मन्त्रो हुतो रात्रौ राष्ट्रं च विनिपातयेत् ॥
श्रीफलानां पलाशानां फलं चोदुम्बरस्य च ।
यो लक्षं होमयेदाशु धनदेन समो भवेत् ॥
महामांसेन यः कश्चिद् होमयेन्मधुसंयुतम् ।
शतमष्टोत्तरं देवि त्रिसंध्यं साधकोत्तमः ॥
स भुंक्ते मेदिनीं कृत्स्नां षण्मासेन न संशयः ।
राज्यं तस्य प्रयच्छन्ति डाकिन्यः प्रीतिसंयुताः ॥
कोकिलापक्षलक्षं तु यो जुहोति चितानने ।
स मारयति शत्रूणां बलं दूरेऽपि संस्थितम् ॥
काकपक्षकृतो होमो धुत्थूराग्नौ समाहितैः ।
आलोड्य कटुतैलेन सद्योच्चाटनमारणे ॥
शान्तिकार्ये तथा पुष्टौ चतुरस्रं कुण्डमारभेत् ।
वशीकारे त्रिकोणं च मारणोच्चाटने तथा ॥

वर्त्तुलं मण्डलाकारं कुण्डं कुर्याद् विचक्षणः ।
भुक्तौ मुक्तौ तथा देवि दीर्घं कुण्डं समाचरेत् ॥
मन्त्रं ध्यानं सुगुप्तं च पूजापद्धतिरेव च ।
उपचारोऽपि बोद्धव्यः सदैव गुरुसन्निधौ ॥

अथ बलिः ।. ह्रीँ सर्वयोगिनीभ्यः गृह्ण गृह्ण स्वाहेति गृहबलिं दद्यात् । क्षांक्षः क्षेत्रपाल इमं बलिं गृह्ण गृह्ण स्वाहेति गृहकोणे दद्यात् । ह्रीँ ह्रीँ देवीपुत्र वटुकनाथ कपिलजटाजूट भास्वरत्रिनेत्र इमं बलिं गृह्ण गृह्ण इति गृहमध्ये दद्यात् । ह्रीँ योगिनीभ्यः सर्वक्षेत्रवासिनीभ्यः सर्वपीठोपपीठ-सर्वसंदेहोपसन्देह-सचत्वरोपचत्वरनिवासिनीभ्यः इमं बलिं गृह्ण स्वाहेति माषभक्तबलिं दद्यात् ।

तथा　अथ संवत्सरं यावत् फलाहारा यतव्रतः ।
विष्णुनामग्रहपरः शिवभक्तिपरायणः ॥
यथाशक्ति जपेन्नित्यं ध्यात्वा देवीं यथोदिताम् ।
फलेऽप्यलावूकुष्माण्डौ वर्जनीयौ प्रयत्नतः ॥
अथ संवत्सरेऽतीते शौचेनान्तकतुल्यकः ।
सामर्थ्येन भवेद् विष्णुविक्रमेण दिवस्पतिः ॥
सर्वज्ञः शम्भुना तुल्यः तेजसा च दिवाकरः ।
स श्लाध्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ॥
स शूरः स च विक्रान्तः स सुखी सुन्दरः कृती ।
वर्षादूर्ध्वं च तद्देहं देवरूपं च दृश्यते ॥
यद्यत्र व्यभिचारः स्यात्तदा देवी तु तन्नरम् ।
शीघ्रं मारयति क्रुद्धा सर्वकामफलप्रदा ॥
अपरं च प्रवक्ष्यामि विद्याद्रव्यप्रकाशकम् ।
अथ कृष्णत्रयोदश्यामन्धकारेऽर्धरात्रके ॥
गृहाभ्यन्तरगो भूत्वा वियुक्तो दशरात्रतः ।
देवीरूपं स्मरन् भक्त्या ध्यायेद् वा साधकोत्तमः ॥

आनीय युवतीमेकां पञ्चपुरुषगामिनीम् ।
सुदतीं सुन्दरीमेतां सुशीलां विनयान्विताम् ॥
वस्त्रालंकारकनकं दत्वा तस्यै यथोदितम् ।
परिधाय तु तद्वस्त्रं दूरं कुर्यात् सुसंयतः ॥
पूर्वं मण्डलमालिख्य षट्कोणं तत्र संलिखेत् ।
तस्योपरि तु तां नारीं निर्लज्जां भूषणान्विताम् ॥
विवस्त्रां मुक्तकेशीं च तत्र तामुपवेशयेत् ।
पूजयेदङ्गदेवीश्च मण्डले कथितः प्रिये ॥
तत्र तां विविधैः पुष्पैः श्वेतपीतकलोहितैः ।
देवीरूपेण संचिन्त्य पूजयेत् साधकोत्तमः ॥
सहस्रमयुतं वापि जपेद् भक्तिस्वभावतः ।
बलिं च तत्र मन्त्रेण दद्यादुषसि मज्जनात् ॥
तां नारीं तोषयेन्मन्त्री वस्त्रालङ्कारभूषणैः ।
ब्राह्मणान् भोजयेत् दद्यात् गुरवे दक्षिणां बलात् ॥
अनेन विधिना लक्ष्मीं विद्यां सर्वामवाप्नुयात् ।
विद्यामदृष्टपूर्वां च दृष्ट्वा पाठयते नरः ॥
क्षुद्राणामपि लक्ष्मीः स्यात् कवित्वे वास्य का कथा ।
एकरात्रेण लभते विद्यां लक्ष्मीं न संशयः ॥
द्विरात्रेण यशोराशिं त्रिरात्रेण गुरुः स्वयम् ।

वियुक्त इति दशरात्रमारभ्य स्त्रीसंसर्गशून्य इत्यर्थः ॥

अस्मिन् कल्पे सदा देवि स्वेच्छया कर्ममाचरेत् ।
पूर्वकल्पे सदा कार्यं ब्रह्मचारिव्रतं शिवे ॥

भैरव उवाच । दिनशः प्रातरुत्थाय शय्यातलसमाश्रितः ।
ध्यात्वा व्यस्तां छिन्नमस्तां जपेदष्टोत्तरं शतम् ॥
त्रिशतं वा जपेन्नित्यमष्टोत्तरसहस्रकम् ।
षण्मासेन महावाणी गद्यपद्यमयी भवेत् ॥
वत्सराद् वेदशास्त्राणां निश्चितं पारगो भवेत् ।
त्रिवत्सराद भवेदूर्ध्वं वागीश्वर इवापरः ॥

तस्य दर्शनमात्रेण वादिनो निःप्रभावताम् ।
पलायन्ते गता भूमौ यथा सिंहभयाद् गजाः ॥
दशांशेनाङ्गमन्त्राणां मूलमन्त्रानुसारतः ।
सकृद् वा तज्जपेन्नित्यं केचित् पक्षमिमं शिवे ॥
आदौ सर्गविधात्री च पोषिका च ततो मता ।
संहारकारिणी पश्चात् त्रिमूर्त्तिः सैव कथ्यते ॥

इत्यादि विस्तरः ।

इति प्रचण्डचण्डिका-मन्त्र-परिच्छेदः ॥ ४ ॥

अथ मातङ्गीपटलः ।

तन्त्रे मन्त्रं शृणु महादेवि यथावत् कथयामि ते ।
दद्यादुच्छिष्टशब्दं तु तथा चाण्डालिनीति च ॥
सुमुखीति ततो देवीं कीर्तयेत्तदनन्तरम् ।
महापिशाचिनीं तस्मान्मायाबीजमनन्तरम् ॥
बिन्दुनादसमायुक्तं ठकारत्रितयं ततः ।
सविसर्गं महादेवि सर्वसिद्धिफलप्रदम् ॥

अत्र चाण्डालिन्यादिपदं प्रथमैकवचनान्तं देवीं कीर्त्तयेदित्यादि स्वरसात् तत्र देवीपदस्यैव कर्मताश्रवणात् । केचित्त सर्वत्र सम्बोधनमिच्छन्ति । मायाबीजं भुवनेशी । बिन्दुनादेति तेन ठंः ठंः ठंः इति स्वरूपम् ।

एवं उच्छिष्टचाण्डालिनी सुमुखी देवी महापिशाचिनी ह्रीँ ठंः ठंः ठंः । इति मन्त्रः । ऐं सौं ऐं ह्रीं आं क्लीं हे ज्येष्ठमातङ्गि नमामि उच्छिष्टचाण्डालिनि त्रैलोक्यवशं-करि स्वाहेति क्वचिन्मन्त्रः ।

अथवोच्छिष्टचाण्डालि मातङ्गिपदमीरयेत् ।
ततः सर्ववशं चान्ते करिहृद्वह्निवल्लभा ॥
एकोनविंशता वर्णैः सर्वाभीष्टकरो भवेत् ।

एवं उच्छिष्टचाण्डालि मातङ्गि सर्ववशंकरि नमः स्वाहा इति मन्त्रः ।

तथा अथातः संप्रवक्ष्यामि देवीं गुप्ततमां प्रिये ।
उच्छिष्टपूर्विकां देवीं मातङ्गीं सर्वसिद्धिदाम् ॥
सर्वापद्वारिणीं देवीं सर्वदोषविवर्जिताम् ।
यया विज्ञातया देव्या क्षयमिच्छन्ति चापदः ॥

स्थावरं जङ्गमं चैव कृत्रिमं चाङ्गजं तथा ।
इमां विद्यां जपेशानीमपराङ्गसमाश्रिताम् ॥
इयं विद्या महाविद्या सर्वपापापहारिणी ।
स्वर्गदा मोक्षदा चैव राज्यसौभाग्यदा तथा ॥
इयं विद्या मया पूर्वं शाचिनी वशिनी शुभा ।
सकृदुच्चरिता विद्या ब्रह्महत्यापहारिणी ॥
सर्वपापहरा देवी लोकसौभाग्यदा मता ।
सदोच्छिष्टमुखो भूत्वा स्मरेद् देवीं कदाचन ॥
तथा चान्तो भवेद्देवि विनैवाचमने कृते ।
दुर्भगा सुभगा नूनं दुःखिता सुखिता भवेत् ॥
वन्ध्यापि लभते पुत्रं शतहायनजीवितम् ।
दुर्बलो बलमाप्नोति मूर्खो विद्यामवाप्नुयात् ॥
यां यां प्रार्थयते सिद्धिं हठात् तां तामवाप्नुयात् ।
विधानं चात्र वक्ष्यामि शृणु देवि वरानने ॥
भोजनानन्तरं देवि विनैवाचमने कृते ।
बलिं दत्वा प्रथमतो मूलमन्त्रेण साधकः ।
ततो मन्त्रं जपेद् ध्यात्वा देवीं तामिष्टसिद्धये ।
न तिथिर्न च नक्षत्रं न चाङ्गन्यास एव च ॥
नारिदोषो न वा विघ्नं नाशौचं नियमो न च ।
यस्य तिष्ठति मन्त्रोऽयं न स विघ्नैरवाप्यते ॥
ध्यानमस्याः प्रवक्ष्यामि यथावज्जगदीश्वरि ।
शवोपरि समासीनां रक्ताम्बरविभूषिताम् ।
रक्तालंकारसंयुक्तां गुञ्जाहारविभूषिताम् ॥
षोडशाब्दां च युवतीं पीनोन्नतपयोधराम् ।
कपालकर्तृकाहस्तां परां ज्योतिःस्वरूपिणीम् ॥
वामदक्षिणयोगेन ध्यायेन्मन्त्रविदुत्तमः ।
उच्छिष्टेन बलिं दत्वा जपेत्तद्गतमानसः ॥
उच्छिष्टे नैव कर्त्तव्यो जपोऽस्याः सिद्धिमिच्छता ।
उच्छिष्टजपमानस्य जायन्ते सर्वसिद्धयः ॥

अपरं च प्रवक्ष्यामि शृणु देवि फलप्रदम् ।
होमं च तर्पणं चैव सर्वकामार्थसिद्धये ॥
स्थण्डिले मण्डलं कृत्वा चतुरस्रं समाहितः ।
पूजयेन्मण्डलं देवि मूलमन्त्रेण मन्त्रवित् ॥
ततो देवीं समाधाय वह्निरूपव्यवस्थिताम् ।
देवीं ध्यात्वा चरेद्धोमं दधिसिद्धार्थतण्डुलैः ॥
सहस्रमात्रहोमेन राजा तु वशगो भवेत् ।
मार्जारस्य तु मांसेन देव्या होमं समाचरेत् ॥
स प्राप्नोति परां विद्यां शस्त्रशास्त्रवशीकृताम् ।
कुर्याद् छागस्य मांसेन होमं मधुसमन्वितम् ॥
सहस्रैकविधानेन भवन्ति फलसिद्धयः ।
विद्याकामश्चरेद्धोमं शर्करायुतपायसैः ॥
ध्रुवं तस्य भवन्त्येव सद्यो विद्याश्चतुर्दश ।
रजस्वलाया वस्त्रेण मधुना पायसेन च ॥
होमं कृत्वा महादेवि त्रैलोक्यं वशमानयेत् ।
नागवल्ल्या चरेद्धोमं मधुना सह सर्पिषा ॥
अयुतैकविधानेन सिद्धिरिष्टा भवेद्ध्रुवम् ।
सद्यो मार्जारमांसेन घृतेन मधुना सह ॥
चाण्डालकेशयुक्तेन भवेदाकर्षणं ध्रुवम् ।
शशकस्य च मांसेन मधुना लोहितेन च ॥
कृत्वा होममवाप्नोति विद्यावित्तवरस्त्रियः ।
धुत्थूरकाष्ठसंयुक्ते सचिताग्नौ तु मन्त्रवित् ॥
कोकिलाकाकपक्षैस्तु होमः शत्रून् विनाशयेत् ।
उच्चाटनाय शत्रूणां होमं कुर्याच्च मन्त्रवित् ॥
पूर्वोक्तेन विधानेन चिताकाष्ठहुताद् धनम् ।
उलूककाकपक्षाभ्यां कृत्वा होमं निरन्तरम् ॥
शत्रूणां द्वेषयेदिष्टमन्योन्यकलहाकुलम् ।
उलूकपक्षहोमेन गर्भपातो वरस्त्रियः ॥
सहस्रैकविधानेन कुर्याद्धोमं समाहितः ।
बिल्वपत्रैः समध्वाक्तैर्मासमेकं निरन्तरम् ॥

वन्ध्यापि लभते पुत्रं चिरजीविनमुत्तमम् ।
कर्कन्धूकुसुमं हुत्वा रक्तं मधुसमन्वितम् ॥
दुर्भगाया हठात् देवि सौभाग्यं सुखदायकम् ।
प्रातरुत्थाय यः कश्चिद्धोमं कुर्याद् दिने दिने ॥
जवापुष्पेण साज्येन शतमष्टोत्तरं शिवे ।
उज्जटे वा श्मशाने वा शून्यागारे चतुःपथे ॥
बलिप्रदानतो देवी प्रत्यक्षा भवति ध्रुवम् ।
एषा देवी मया जप्ता भैरवाकारमिच्छता ॥
इत्येषा कथिता देवी सर्वपापप्रणाशिनी ।
मन्त्रस्योच्चारणादेव सर्वपापप्रणाशनम् ॥
उच्छिष्टदूषणं हित्वा सपवित्रो भवेद् ध्रुवम् ।

अत्र यद्यपि पुरश्चरणं नोक्तं तथाप्यष्टसहस्राणि जपस्तद्दशांशेन होमादिकं बोद्धव्यम् ।

येषां जपे च होमे च संख्या नोक्ता मनीषिभिः ।
तेषामष्टसहस्राणि संख्या स्याज्जपहोमयोः ॥

इत्यभिधानात् । अत्रैव वाराहीतन्त्रे "सहस्रमष्टौ जुहुयात् लक्षं जप्ये प्रकीर्त्तयेत्" इत्युत्तरदले पाठः । एवं दक्षिणकालीमन्त्रोक्तं वा तन्त्रे प्रकरणात् । वस्तुतस्तु आसां सिद्धिविद्यात्वेन पुरश्चरणादिकं नास्तीति निबन्धारः ।

इति तन्त्रकौमुद्यां मातङ्गीपटलपरिच्छेदः ॥५॥



अथ नोलसरस्वती मन्त्रा : ।

फेत्कारिणीतन्त्रे— तस्योद्धारविधिं वक्ष्ये शृणु सार्वज्ञकारणम् ।
प्रथमं सपरं दत्वा चतुर्थस्वरभूषितम् ॥
रेफारूढं स्फुरद्दीप्तमिन्दुविन्दुविराजितम् ।
त्रङ्कारं च ततो दद्याच्चतुर्थेनैव भूषितम ॥
दीर्घौकारसमायुक्तं हकारं योजयेत्ततः ।
फट्कारं च ततो दद्यात् संपूर्णं सिद्धिमन्त्रकम् ॥

प्रथममिति सपरः हकारः । चतुर्थस्वर ईकारः । इन्दुरर्धचन्द्रः । विन्दुरनुस्वारः । तेन ह्रीँ इति बीजम । त्रंकारमिति चतुर्थवर्गप्रथमाक्षरं रेफानुस्वारयुक्तमित्यर्थः । चतुर्थेन दीर्घेकारेणेत्यर्थः । तेन त्रीमितिबीजम् । दीर्घेति अर्घीशयुक्तं हंकारमित्यर्थः । तेन ह्रीँ त्रीँ हूँ इति नीलसारस्वतो मन्त्रः । स एव फडन्त एकजटामन्त्रः । स एव तारादिः फडन्तः तारामन्त्रः ।

अतएवोक्तं त्र्यक्षरोऽसौ महामन्त्रः फटकारान्तो हृदिस्थितः ।
पञ्चरश्मिसमायुक्तोऽप्यज्ञानेन्धनदाहकः ॥

इति त्र्यक्षरमुपक्रम्य फटकाराद्यभिधानेन मन्त्रभेदलाभात् । फडन्तोऽप्यज्ञाननाशकः । पञ्चरश्मिसमायुक्तोपीत्यर्थात पञ्चरश्मिः प्रणवः । उक्तं च श्रीक्रमे तन्त्रचूडामणौ

ह्रिया नववधूशब्दो यथागः कुरुते प्रिये ।
तथैवेयं महाविद्या न कदाकुलगोचरा ॥
अस्त्रान्तेयं महाविद्या जटापुञ्जवधारिणी ।
वेदादिमुखयुक्ता चेत् तारा त्रिभवतारिणी ॥

ह्रिया लज्जया तेन ह्रीँबीजयुक्तो वधूशब्दः स्त्रीँबीजमित्यर्थः । यथागः कुरुते यथा रोषंव्यनक्ति तेन हूँबीजमिति मन्त्रोद्धार उक्तः । एवं मध्यमबीजे सकारोऽपिलभ्यते । तथापि वधूशब्दपदमेकदेशपरम् । मतान्तरं वैतत् । तदुक्तं मत्स्यसूक्ते सकारहीनं मध्यमं बीजमुक्त्वा

वशिष्ठेनास्य मुनिना शापो दत्तः सुदारुणः ।
ततः प्रभृति विद्येयं फलदात्री न कस्यचित् ॥
शाक्तबीजं त्रपान्तस्थबीजोपरिनियोजितम् ।
ततः प्रभृतिविद्येयं वधूरिव यशस्विनी ॥
श्रीबीजाद्या यदा देवी तदा श्रीः सर्वतोमुखी ।
वाग्भवाद्या महावाक्यस्वरूपा सर्ववाङ्मयी ॥
लज्जाबीजं वधूबीजं कूर्चबीजं तथा हि फट् ।
एवं पञ्चाक्षरी विद्या पञ्चभूतप्रकाशिनी ॥
तन्त्रान्तरे— लज्जायुगं वधूबीजं ततो दीर्घं तनुच्छदम् ।
सारस्वतो परो मन्त्रः संप्रोक्तश्चतुरक्षरः ॥
तदन्ते यदि फट्कारो मनुः पञ्चाक्षरो भवेत् ।

लज्जा ह्रीँ । वधूबीजं स्त्रीँ तद्वाचकत्वात् । तेन ह्रीँ ह्रीँ स्त्रीँ हूँ इति मन्त्रः । फडन्तः पञ्चाक्षरः ।

तारशक्तिवधूबीजान्यन्ते दीर्घं तनुच्छदम् ।
अस्त्रमग्निवधूरन्ते मनुः सप्ताक्षरो भवेत् ॥
मन्त्रशास्त्रेषु संप्रोक्तः तथा दीर्घेण वर्मणा ।
पुटितं च वधूबीजं अपरोऽसौ गुणाक्षरः ॥

तारेति - शक्तिः ह्रीँ । वधूबीजं स्त्रीँ । अग्निवधूः स्वाहा । तेन ओँ ह्रीँ स्त्रीँ हूँ फट् स्वाहा इति मन्त्रः । मन्त्रान्तरमाह तथेति । तेन हूँ स्त्रीँ हूँ इति मन्त्रः । मत्स्यसूक्ते

तारं पद्मे युगं पश्चान्महापद्मे समीरयेत् ।
पद्मावति ततो माये द्विठं सप्तदशाक्षरी ॥
बीजमन्त्राः स्वतन्त्रा स्युस्तारिण्याः सर्वसिद्धिदाः ।

तेन ओँ पद्मे पद्मे महापद्मे पद्मावति ह्रीँ ह्रीँ स्वाहा इति सप्तदशाक्षरो मन्त्रः ।

तथा विद्यान्तरं प्रवक्ष्यामि शृणुष्वावहितानघे ।
वाग्भवं कुलदेवीं च तारकं वाग्भवं तथा ।

हृल्लेखा चास्त्रमन्त्रान्ते वह्निजायावधिर्मनुः ॥
अष्टाक्षरो समाख्यातो वेदमातुरनुत्तमः ।
पञ्चाङ्गान्यस्य मन्त्रस्य पञ्चबीजैः प्रकल्पयेत् ॥
अस्त्रं शेषाक्षरैर्न्यस्य कृतकृत्यो भवेन्नरः ।
ध्यानपूजादिकं सर्वं पूर्ववच्च समाचरेत् ।

कुलदेवी भुवनेशी । तारक ओङ्कारः ।

शिवबीजं महेशानि शक्तिबीजं ततः परम् ।
विन्दुसर्गसमायुक्तं वेदाद्यं तदधः क्रमात् ॥
माया श्रीं वर्मबीजेन हंसबीजमुदीरितम् ।
एषा त्वष्टाक्षरी हंसतारास्नेहात्तवोदिता ॥

विन्दुसर्गेति शिवशक्त्योः क्रमेणान्वेति तेन हंस इति स्वरूपम् ।

तथा
पञ्चाक्षरी च या विद्या हंसाद्यन्ता परा भवेत् ।
अनयोर्जपपूजादि पञ्चाक्षरवदाचरेत् ॥

तथा
लिखेत् खं कूर्चसंयुक्तं रौद्रं त्रैगुण्यमेव च ।
विष्णुपत्नी महेशानी स्वशक्त्याबीजमेव च ॥
महासिद्धिकरी विद्या सर्वं पञ्चार्णवद् भवेत् ।

खं हकारः रौद्रं क्रों त्रैगुण्यमोङ्कारः विष्णुपत्नी श्रीं महेशानी ह्रीँ स्वशक्तिः स्त्रीँ बीजं हूं । एवमष्टाक्षरो मन्त्रः ।

तथा
प्रणवं पूर्वमुद्धृत्य हृल्लेखाबीजमुद्धरेत् ।
गगनं शेषसंयुक्तं विन्दुनादविभूषितम् ॥
कूर्चबीजं च हृदयं तारायै च समुद्धरेत् ।
दुस्तरं तारिणि तारय तारयेति ततो वदेत् ॥
तारमुग्रं वह्निजाया मन्त्रोऽयं सुरपादपः ॥

उग्रं क्रों ।

चतुर्लक्षजपेनास्याः सिद्धयोऽष्टौ भवन्ति हि ।
ध्यानपूजादिकं सर्वं भवेत्‌ पश्चादरक्रमात्‌ ॥

तथा　प्रणवं पूर्वमुद्धृत्य तारे च तदनन्तरम्‌ ।
उग्रापदुक्तौ तारे स्यात्‌ ततः स्वाहेति कीर्त्तयेत्‌ ॥
सर्वसिद्धिकरः प्रोक्तो मन्त्रोऽयं स्याद्‌ दशाक्षरः ।
श्यामवर्णां त्रिनयनां द्विभुजां वरपङ्कजे ॥
दधानां बहुरूपाभिः स्मेरां शक्तिभिरावृताम्‌ ।
रत्नपादुकयोर्न्यस्तपादाम्बुजयुगां स्मरेत्‌ ॥
वर्णलक्षं जपेद्‌ विद्यां नियमेन वशी नरः ।
दशांशं जुहुयान्मन्त्री घृताक्तै रक्तपुष्करैः॥
इति सिद्धा महाविद्या दद्यात्‌ सर्वमनोरथान्‌ ।

फेत्कारिणी तन्त्रे　कैलाशशिखरासीनं चन्द्रखण्डविराजितम्‌ ।
वक्षःस्थले समासीनाऽपृच्छत्तत्वं नगात्मजा ॥
कथमीशान सार्वज्ञमभवन्तो तपोधनाः ।
कां विद्यां प्राप्य कवयो भारतादीन्‌ प्रचक्रिरे ॥
श्रुत्वा नगात्मजावाक्यं विहस्य परमेश्वरः ।
प्राह प्रियां परिष्वज्य साधु साध्विति पूजयन्‌ ॥
श्रृणु साध्वी महाविद्यामज्ञानेन्धनदाहिनीम्‌ ।
यामवाप्य महात्मानो धर्मकामार्थमुक्तिषु ॥
नासाध्यं मेनिरे किंचित्‌ कवयः शुद्धबुद्धयः ।
वादे सदसि या वाचः स्तम्भिनी प्रतिवादिनः ॥
विद्याहानिकरी वैरिविदुषां वलिदानतः ।
हास्याय या सदस्यानामशुद्धमपि जल्पयेत्‌ ॥

प्रतिवादिनो वाचां स्तम्भिनीति सम्बन्धः । जल्पयेत्प्रतिवादिनमितिशेषः ।

तथा　वादिनं वाथ राजानं मन्त्रिणं वशमानयेत्‌ ।
मन्त्रस्य ज्ञानमात्रेण जपात्‌ सर्वज्ञतां नयेत्‌ ॥

एवं स्तम्भनादिसकलकर्मसु मन्त्रिणोधिकार इति भावः ।

तथा जिह्वायां न्यसनादेव मूकोऽपि सुकविर्भवेत् ॥
अव्याहता मतिः शास्त्रे विजयो वाक्पतेरिव ॥

तथा मधुना त्रिदिनाद्र्वागर्भकजिह्वासु विन्यसेदमुं मन्त्री ॥
यदि पठति पण्डितोऽसौ नो चेन्नो मूर्खतां याति ।

अथध्यानवशेन तारास्वरूपमाह

प्रत्यालीढ़पदार्पितांघ्रिशवहृद् घोराट्टहासारवा
खड्गेन्दीवरकर्तृकर्परभुजा हूंकारबीजोद्भवा ।
खर्वानीलविशालपिङ्गलजटाजूटोग्रनागैर्युता
जाड्यं न्यस्य कपालके त्रिजगतां हन्त्युग्रतारा स्वयम् ॥

प्रत्यालीढ़ेति । अग्रपश्चात्कृतसव्यापसव्यचरणद्वयेत्यर्थः । अर्पितेति शवहृदयेऽर्पितो दक्षिणचरणोऽपरः शवपादद्वयोपरि यथा तादृशीत्यर्थः इति प्राञ्चः । वस्तुतो हृद्येव चरणद्वयन्यासः अन्यत्र बोधकाभावात् । एतेन शवासनत्वमुक्तम । घोरेति घोरेण भीमेनाट्टहासे रवः शब्दो यस्यास्तथेत्यर्थः । खड्गेति दक्षिणहस्तद्वये ऊद्र्ध्वाधःक्रमेण खड्गं कर्तृकां च वामद्वये तेनैवक्रमेण कर्परमिन्दीवरं च हस्तेषु यस्यास्तथेत्यर्थः । हूंकारेति हूंकारबीजजाताकर्तृका तदुपरिगतेत्यर्थः । शब्दादेव वा जातेत्यर्थः । खर्वेति खर्वा ह्रस्वा । आ ईषत् नीला श्यामा विशाला पिङ्गला या जटा तस्या जूटः समूहो यस्यास्तथेत्यर्थः । यद्वा खर्वेति पृथक् पदम् । उग्रनागैस्तक्षकादिभिरलङ्कारमेखलारज्जुविशेषैर्युता । सुगममन्यत् । विस्तरश्चोपरिष्टात् ।

तथा महाचीनक्रमान्नत्वा तारां त्रिभवतारिणीम् ।
तत्साधनमहं वक्ष्ये श्रृणु सार्वज्ञकारणम् ॥

महाचीनो देशविशेषः । तत्र बौद्धा निवसन्ति । ते येनाचारेण तामाराधयन्ति तेन शीघ्रफलदेति भावः । तत्क्रमश्च

पूजनं मानसं दिव्यं मानसं तर्पणादिकम् ।
सर्व एव शुभः कालो नाशुभो विद्यते क्वचित् ॥
न विशेषो दिवारात्रौ न संध्यायां महानिशि ।
वस्त्रासनस्थानदेहगेहस्पर्शादिधारिणः ॥

शुद्धिं न चर्चयेदत्र निर्विकल्पं मनश्चरेत् ।
सर्वदा पूजयेद् देवीमस्नातः कृतभोजनः ॥
महानिश्यशुचौ देशे बलिं मन्त्रेण दापयेत् ।
स्त्रीद्वेषो नैव कर्त्तव्यो विशेषात् पूजनं स्त्रियः ॥
जपस्थाने महाशंखं निवेश्योदूर्ध्वं जपं चरेत् ।
स्त्रियं गच्छन् स्पृशन् पश्यन् यत्र कुत्राप्यचूडके ॥
भक्षयन् ताम्बूलमन्यांश्च भक्ष्यद्रव्यान् यथारुचि ।
मांसमत्स्यदधिक्षौद्रपयः शाकाद्यमैक्षवम् ॥
भक्त्याद्यशेषद्रव्याणि दत्वा भक्षयन् चरेज्जपम् ।
दिगादिनियमो नात्र स्थित्यादिनियमो न च ॥
जपे न कालनियमो नार्चादिषु बलिष्वपि ।
स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने ॥
नाधर्मो जायतेऽनेन किंच धर्मो महान् भवेत् ।
स्वेच्छाचारोऽत्र गदितः प्रचरेद्धृष्टमानसः ॥
कृतार्थं मन्यमानस्तु संतुष्टो निजमानसम् ।
सुगन्धिश्वेतलौहित्यकुसुमैरर्चयेद् दलैः ॥
बिल्वैर्मरुवकाद्यैश्च तुलसीवर्जितैः शुभैरित्यत्रः विस्तरः ।

मत्स्यसूक्ते　　एतत्साधकनिन्दां वा एतन्मन्त्रस्य वा चरेत् ।
महाभूतगणैः सार्धं तस्य जीवं हराम्यहम् ॥

तत्र स्थानविशेषमाह एकलिङ्गे श्मशाने वा शून्यागारे चतुःपथे ।
तत्रस्थः साधयेद् योगी विद्यां त्रिभवमोहिणीम् ॥

एकलिङ्गं पञ्चक्रोशान्तरे लिङ्गान्तरशून्यम् । तदुक्तं
पञ्चक्रोशान्तरे यत्र न लिङ्गान्तरमीक्षयते ।
तदेकलिङ्गमाख्यातं तत्र सिद्धिरनुत्तमा ॥
श्मशानेवेति मृतकाभावे । तदुक्तं
संग्रामे पतितं वापि व्यापादितमचूड्कम् ।
षण्मासान्निःसृतं प्राप्य चितायां वा तदन्तिक इति ॥

शून्यागारं देवशून्यं निर्जनं वा गृहम्। तदुक्तं

देवागारे देवशून्ये निर्जनैकान्तवेश्मनि।
उज्झटे पर्वते वापि निर्जने वा चतुःपथे ॥ इति

अथ मन्त्रप्राप्तौ कर्त्तव्यमाह

अवाप्य मन्त्रं विधिवत् परितोष्य तथा गुरुम्।
गोभूहिरण्यवस्त्राद्यैर्यथाविभवविस्तरैः ॥
मृद्वचूड़कमासीनो ह्यन्येषु कोमलेषु च।
विष्टरेषु समाश्रित्य साधयेत् सिद्धिमुत्तमाम् ॥

मृदुं षण्मासोद्ध्वं दशमासं यावद् गर्भच्युतम्। जननान्तरं चूडाकरणपर्यन्तमचूड़कम्, कोमलं चूडाकरणानन्तरमुपनयनपर्यन्तमित्यर्थः। वीरसाधनं विना तदूद्ध्वं निषेधात् तदलाभे विष्टरेष्वपि विशेषात्। तदत्रक्रमः। स्थानादिशोधनं कृत्वा स्नापितं शवमुत्तानमुत्तरशिरसं धृत्वा तच्छिरसि वसुपत्रे यन्त्रे देवीं संपूज्य वलिं दत्वा भूतशुद्ध्यादिकं कृत्वा ध्यात्वा जपं कुर्यात्। इदं च लक्षजपादिपुरश्चरणानन्तरं काम्यत्वादिति प्राञ्चः।

तथा　　　भूतशुद्धिं विधायाथ शून्यं विश्वं विचिन्तयेत्।
निर्लेपं निर्मलं शुद्धमात्मानं देवतामयम् ॥

भूतशुद्धिश्चात्र वक्ष्यमाणक्रमेण। ह्रीकारं रक्तं नाभौ संचिन्त्य तद्भूतवह्निना देहं दग्धं विचिन्त्य त्रींकारं पीतं हृदि संचिन्त्य तद्भूतवायुना तद्भस्म प्रोत्सार्य हूंकारं श्वेतं ललाटे ध्यात्वा तदुद्भूतामृतेनाप्लाव्य देवतारूपं भावयेदिति क्रमः।

अथ ध्यानम्।　　अन्तरिक्षे ततो ध्यायेत् आंकाराद्रक्तपंकजम्।
भूयस्तस्योपरि ध्यायेत् टांकारात् पद्मभाजनम् ॥
तस्योपरि पुनर्ध्यायेत् हूंकारं नीलसन्निभम्।
ततो हूंकारजां पश्चात् कर्तृकां बीजभूषिताम् ॥
कर्तृपरिणतां ध्यायेदात्मानं तारिणीमयम्।

पद्मभाजनं किञ्जल्कम्। बीजं हूंकारम्।

तथा　　　प्रत्यालीढ़पदां घोरां मुण्डमालाविभूषिताम्।
खर्वां लम्बोदरीं भीमां व्याघ्रचर्मावृतां कटौ ॥

नवयौवनसम्पन्नां पञ्चमुद्राविभूषिताम् ।
चतुर्भुजां चलज्जिह्वां महाभीमां वरप्रदाम् ॥
खड्गकर्तृधरां सव्ये वामे मुण्डोत्पलान्विताम् ।
पिङ्गोग्रैकजटां ध्यायेन्मौलावक्षोभ्यभूषिताम् ॥
बालार्कमण्डलाकारलोचनत्रयभूषिताम् ।
प्रज्वलत्पितृभूमध्यगतां दंष्ट्राकरालिनीम् ॥
सावेशस्मेरवदनां स्त्र्यलंकारविभूषिताम् ।
विश्वव्यापकतोयान्तः श्वेतपद्मोपरि स्थिताम् ॥

प्रत्यालीढेति व्याख्यातं चैतत् । पञ्चमुद्रेति श्वेतास्थिपट्टिकायुक्कपालपञ्चयुक्त-ललाटामित्यर्थः । मत्स्यसूक्ते तु संमुखं चतुरस्रं च वृत्तं गोमुखमेव च ।
योनिमुद्रेति व्याख्याताः पञ्चमुद्राः प्रकीर्त्तिताः ॥
इत्युक्तम् । अक्षोभ्येति अविनाशिचन्द्रकलाविभूषितामित्यर्थः । यद्वा जटावेष्ट-नमक्षोभ्यो वासुकिस्तद्युतामित्यर्थः । देवीगुरुरक्षोभ्य इति कश्चित् । अस्थीति अस्थ्नां अलंकारेण भूषितामित्यर्थः । स्त्र्यलंकारेति क्वचित्पाठः ।

तथा भावनावशसंपन्नो भवेद्योगी महाकविः ।
जडोऽपि यदि मूर्खः स्याद् भावनावशतत्परः ॥
लभतेऽभिमतां वाणीं लक्षं मन्त्रस्य जापतः ।
कल्पयेत् स्थिरचित्तेन पण्डितोऽहं महाकविः ।
अजस्रभावनाभ्यासाद् भवेदेवं न संशयः ॥
सुविमलनखपाणिपाददन्तो मुदितमनाः परदूषणेषु मौनी ।
हरिहरचरणारविन्दभक्तो भवति चिराय सरस्वती-निवासः ॥

एवं च दक्षिणेऽप्यन्योपासनविधिरिति भावः । वामेन शीघ्रफलदत्वमिति विशेष इत्यन्यदेतत् ।

मनुर्विमृष्य दातव्यो ज्येष्ठस्यापि विनीतताम् ।
पुत्रस्य किमथान्यस्मै विगोत्राय स्वपौरुषम् ॥

ज्येष्ठस्यापि पुत्रस्य विनयं ज्ञात्वा दातव्यः किमुतान्यस्मै । स्वपौरुषं स्वयशो दद्यादिति सम्बन्धः ।

तथा सर्वदा गोपयेदेनं मनुं च गुरुमेव च ।
तेन वीर्यवती विद्या निर्वीर्या स्यात् प्रकाशतः ॥

उत्पादकब्रह्मदात्रोर्गरीयान्मन्त्रदः सदा ।
तस्मान्मन्येत सततं पितुरप्यधिकं गुरुम् ॥

ब्रह्मदातोपनेता ।

तथा  उपदेशादङ्गमन्त्रो बलिमन्त्रस्तथैव च ।
ज्ञातव्यो विदुषा सिद्धिरस्य मन्त्रस्य लाभतः ॥

अङ्गमन्त्रो जलाधिष्ठानादिमन्त्रः बलिमन्त्रोऽग्रे वक्तव्यः ।

तथा  उपांशुः स्याच्छतगुणः साहस्रो मानसो जपः ।
अचिरादागता सिद्धिर्महाशंखाक्षमालया ॥

महाशंखो मनुष्यललाटास्थि तदभावे देहान्तरस्यापि ग्राह्यमिति निबन्धारः ।

अत्र कुब्जिकातन्त्रे यस्मिन्मन्त्रे य आचारस्तत्र धर्मस्तु तादृशः ।
कृतार्थस्तेन जायेत स्वर्गं वा मोक्षमेव वा ॥
भ्रान्तिस्तत्र न कर्त्तव्या सिद्धिहानिः प्रजायते ।
विशुद्धचित्तोऽत्र भवेत् सिद्धिः स्यादपवर्गजा ॥

इत्यादि बहुषु प्रपञ्चः

तथा  उपचारविशेषेण राजपत्नीं वशं नयेत् ।
राजानं जपमात्रेण बलिना सकलं जगत् ॥

उपचारविशेषो जपपूजाहोमादिः । तेन राजपत्नीमपि वशयेत् किमुतान्यामिति भावः ।

इति नीलसरस्वत्याः प्रपञ्चोऽयं प्रदर्शितः ।
ब्रह्मणा पूर्वमस्मभ्यं मया तुभ्यं नगात्मजे ॥
नीलसारस्वते मन्त्रे कविता विघ्नकारिणी ।
अनास्था च तृतीयं तु न किञ्चिद् विघ्नकारणम् ॥

कवितेति कविता भवत्येव परंतु अनास्था विघ्नकारणम् द्वितीयं विघ्नकारणं नेत्यर्थ इति कश्चित् । वस्तुतः तृतीये न किञ्चनेति पाठः । तेन वाग्भवप्रदेऽप्यत्र मन्त्रे तात्कालिकालौकिककवित्वमालस्यं च स्वयमेव विघ्नकारणमित्यर्थः । एवमेव प्राञ्चः । विघ्नश्चानिष्टं मन्त्रसिद्धिप्रबन्धको वेत्यन्यदेतत् ।

तथा  क्षिप्रप्रसादा जगतां सदा नीलसरस्वती ।
विशेषतः कलियुगे मत्प्रसादाद् भविष्यति ॥
सिद्धमन्त्रो यदा मन्त्री बालिशस्यापि मूर्धनि ।
करं दत्वा दिशत्याशु सोऽपि श्लोकान् करोत्युत ॥

दिशति श्लोकं कुर्वीत्यादेशं करोतीत्यर्थः ।

अल्पज्ञमपि विद्वांसो मानयिष्यन्ति वाग्मिनम् ।
वाचस्पतिमिवाचार्यं पश्य मन्त्रज्ञमादृतम् ॥

पश्येति देवीसंबोधनम् ।

तथा  मन्त्रस्य ज्ञानमात्रेण अनुभावद्वयं भवेत् ।
तात्कालिकी च कविता परैरनभिभाव्यता ॥

यद्यपि पूर्वं कविता विघ्नकारिणीत्युक्तं तथाप्यनुभावत्वेऽपि विघ्नकारित्वमविरोधात् । वस्तुतस्तु अलौकिकी कविता विघ्नहेतुरिति न किञ्चिदेतत् ।

विद्या ब्राह्मणमित्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा ॥

शेवधिर्निधिः । तथा स्यामिति असूयकाय दानमन्तरेण वीर्यवती स्यामित्यर्थः असूयके ममानुभावो नेति भावः ।

यमेव तु शुचिं विद्यान्नियतं ब्रह्मवादिनम् ।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥

निधिपो धनरक्षकः ।

तथा  यद्यदृष्टवशाल्लाभो मन्त्रस्यास्य भवेदुमे ।
स्वगोत्रपौरुषं नैतदन्यगोत्रं नयेत् सुधीः ॥
विद्यां वेदमवाप्नोति कीर्त्तिमायुर्यशः सुतान् ।
स वासः श्रीसरस्वत्योर्यत्र सारस्वतो मनुः ॥

अत्र विद्या उग्रतारा एकजटा च सरस्वत्याः फलान्तराभिधानादिति प्राञ्चः । सर्वत्र सर्वसम्बन्ध इति तत्त्वं सर्वत्रैव तथैव दर्शनात् क्वचिदपि विधिवैषम्यादेरनभिधानात् । अत्र लक्षजपात्मकमेव पुरश्चरणं होमादिसम्बन्धे मानाभावादिति केचित् । तन्न । सामान्यविधिलब्धे बाधकाभावात् ।

वस्तुतो देवागारे निर्जने वा लक्षं जप्यात् समाहितः ।
जपाद्दशांशतो होमं तद्दशांशेन तर्पणम् ॥

तद्दशांशेत्यभिषेकस्ततो ब्राह्मणभोजनमिति मत्स्यसूक्तविरोधादित्यलं विस्तरः ।

अथाचारानुगतपूजाक्रमः ।

आदौ जलमधिष्ठाय पादयोः क्षालनं मतम् ।
द्विराचम्य शिखां बद्ध्वा ततो भूमिविशोधनम् ॥
विघ्नानुत्सारयित्वा तु कुर्याद् भूम्यभिमन्त्रणम् ।
यन्त्रं कृत्वाप्यधिष्ठाय पुष्पं वाक्कायमानसम् ॥
तन्त्रचूडामणौ ओँ वज्रोदके हूँ फडिति जलमानीय मन्त्रयेत् ।
ओँ ह्रीँ सुविशुद्धान्ते धर्मगात्रि ततः परम् ॥
सर्वपापानि शमय ततोऽशेषपदं वदेत् ।
विकल्पानपनय स्वाहा तेनैव पादधावनम् ॥
ओँ ह्रीँ स्वाहेति मन्त्रेण तेनैवाचमनं मतम् ।
ओँ मणिधरिवज्रिणि पदं सर्वपदं ततः ॥
वशंकरीति हूँ हूँ फट् स्वाहा शिखां प्रकल्पयेत् ।
ओँ रक्ष रक्ष हूँ फट स्वाहेति भूमिविशोधनम् ॥
ओँ दारय दारय हूँ फट् स्वाहेति विघ्नदारणम् ।
ओँ पवित्रवज्रभूमे हूँ फट् स्वाहा भूम्यभिमन्त्रणम् ॥
ओँ आः सुरेखे वज्ररेखे हूँ फट् स्वाहा च मण्डलम् ।

मण्डलं पूजायन्त्राधिष्ठानम् ।

ओँ शताभिषेके समयश्रियेनमः श्रिये ततः ।
हूँ फट् स्वाहेति मन्त्रेण पुष्पाधिष्ठानमाचरेत् ॥
ओँ हूँ स्वाहेति मन्त्रेण ततो वाक्कायमानसम् ।

अधिष्ठायेत्यनुषज्यते । ओँ आः स्वाहेति क्वचिल्लिखनं प्रामादिकम् । शिखामन्त्रे पद्धतौ वज्रिणीत्यन्ते शिखरिणीत्यपि पाठः । शिखाबन्धनोत्तरं मत्स्यसूक्ते विशेषो यथा ।

अर्घं दत्वा परिष्कृत्य तज्जलैर्द्वारमुक्षयेत् ।
गणेशवटुकक्षेत्रपालान्ते योगिनीं ततः ॥

पूजयित्वा गृहं गत्वा ब्रह्माणं परिपूजयेत् ।
मनसा वास्तुदेवं तु तारपूर्वेण संयजेत् ॥ इति

तथार्घकरणम् । फटाभ्युदय हृदात्पूर्वे तारेण दश मन्त्रयेत् ।
फटा द्वारं प्रोक्षयेच्च बीजेनाभ्यर्चयेत सुरान् ॥
गं वं क्षां यां च बीजानि तान्युक्तानि महेश्वरीति ।

तथा विशोध्य वाचं चित्तं च भूमिं सम्यग् विशोधयेत् ।

इति चित्ताधिष्ठामानन्तरं भूमिशोधनमुक्तं

तारं लज्जा विशुद्धान्ते सर्वपापानि चोद्धरेत् ।
शमयान्ते त्वशेषान्ते विकल्पान् पदमुच्चरेत् ॥
अपनयान्ते वर्महूँ फट् स्वाहा पादविशोधनम् । इति

पादविशोधनमन्त्रे विशेष उक्तः । शिखामन्त्रेऽपि वज्रिणीत्यन्ते महाप्रेतशवे रक्ष रक्ष मामिति मध्येऽधिकमुक्तम् ।

तथा प्रणवं सर्वविघ्नांश्च उत्सादय च हूँ फट ।
स्वाहान्तमनुनानेन विघ्नानुत्सारयेत् सुधीः ॥
प्रणवं पवित्रभूमे स्यात् हूँ फट् चैव ततः पुनः ।
स्वाहेत्यनेन मनुना कुर्याद् भूम्यभिमन्त्रणम् ॥
आः कारोऽथ वज्ररेखे हूँ फट् स्वाहा च मण्डलमिति

मन्त्रेषु विशेषे उक्तः । इत्यलं विस्तरः ।

फेत्कारिणी तन्त्रे ।

सयोनि चन्दनेनाष्टदलं पद्मं ततो लिखेत् ।
मृदुमासनमध्यास्य मायां पूर्वदले लिखेत् ॥
याम्ये बीजं द्वितीयं तु फोत्तरे पश्चिमे तु टम् ।
मध्ये बीजं लिखित्वा तु भूतशुद्धिं समाचरेत् ॥
मायां नाभौ रक्तवर्णां ध्यात्वा तज्जातवह्निना ।
शुष्कं पापात्मकं देहं ततो दग्धं विचिन्तयेत् ॥
त्रींकारं हृदि नीलाभं तदुद्भूतेन वायुना ।
भस्मप्रोत्सारितं ध्यात्वा ललाटे चिन्तयेत्ततः ॥

कूर्चं तुषारवर्णाभं तदुद्भूतामृतेन तु ।
तदस्थि प्लावितं ध्यात्वा तत्रात्मानं विचिन्तयेत् ॥
समस्तपापनिर्मुक्तं निर्मलं देवतात्मकम् ।
चिन्तयित्वा ततो देवीं कराङ्गन्यासमाचरेत् ॥
षड्दीर्घाद्यवर्णेन षडङ्गं पूजयेत्ततः ।
आवाह्य स्थापयित्वादावर्घं दत्वानुलेपनम् ॥
श्रीमदेकजटेवज्रपुष्पमित्यभिधीयते ।
मूलेनाग्निप्रियान्तेन सतारेण यजेत् पुनः ॥
दत्वा गन्धादिकमपि वलिमुक्तं निवेदयेत् ।
अक्षोभ्यवज्रमादौ तु तारिणीं मूर्ध्नि पूजयेत् ॥
प्रणवाद्यग्निजायान्तं वज्रपुष्पं विनिःक्षिपेत् ।

तन्त्रचूडामणौ तु श्रीमदेकजटे चार्घं प्रतीच्छ स्वाहयायुतम् ॥
अर्घं दत्वा जवापुष्पं दापयेन्मन्त्रमुच्चरन् ।
वज्रपुष्पं प्रतीच्छेति संबोधनपदान्वितम् ॥
ओँ अक्षोभ्य वज्रपुष्पं प्रतीच्छेति संबोधनपदान्वितम् ।

इति विशेष इत्यलं विस्तरः ।

तथा वैरोचनं शंखपाण्डरं पद्मनाभकम् ।
असिताङ्गं यजेन्मन्त्री दिद्वैन्द्रीतश्चतुर्दले ॥
नामकां मामकां चैव पाण्डरां तारया सह ।
वह्न्यादिषु चतुःकोणे मन्त्रैः स्वैः स्वैर्यथाक्रमात् ॥
द्वारे पूर्वादितः पद्मन्तकं चापि यमान्तकम् ।
विघ्नान्तकं समभ्यर्च्य पूजयेन्नरकान्तकम् ॥
नात्युच्चं नातिनीचं वा ध्यात्वा मन्त्री जपेन्मनुम् ।
बलिं दत्वा नमस्कृत्य स्तुत्वा देवीं विसर्जयेत् ॥
सयोनि गोमयेनाष्टपत्रमब्जं सुशोभनम् ।
भूपुरं वसुवज्राढ्यं यन्त्रमेकजटात्मकम् ॥
बलिपूजादिकं यद्यन्निशायां क्रियते सदा ।
तत्तदक्षयतां याति तारादेव्याः प्रसादतः ॥
श्रीमदेकजटे चोक्त्वा वज्रपुष्पं प्रतीच्छ च ।
तारादिवह्निजायान्तमुदीर्य यजनं चरेत् ॥

सयोनीति योनिः कारणं बीजमिति यावत् । बीजप्रापकान्तराभावात् । योनिं त्रिकोणमिति कश्चित् । सयोनीति भूम्यपतितमित्यर्थकं गोमयविशेषणमयुक्तमपदार्थत्वात् सयोनिचन्दनमित्यत्र तदसंभवात् मत्स्यसूक्तादादुभयथाभिधानात् ।

अथपद्धतिर्लिख्यते ।

यथा सन्निवेशं पुष्पादि संस्थाप्य ओँ वज्रोदके हूँ फडिति जलाधिष्ठानम्, ओँ ह्रीँ स्वाहेति पादप्रक्षालनम् । ओँ ह्रीं सुविशुद्धधर्मगात्रि सर्वपापानि शमयाशेषविकल्पानपनय स्वाहेति आचमनम् । ओँ मणिधरिवज्रिणि सर्ववशंकरि हूँ हूँ फट् स्वाहेति शिखाबन्धनम् । ओँ रक्षरक्ष हूँ फट् स्वाहा इति भूमिविशोधनम् । ओँ दारय दारय हूँ फट् स्वाहेति विघ्नोत्सारणम् । ओँ पवित्रं वज्रभूमे हूँ स्वाहेति भूम्यभिमन्त्रणम । ओँ आः सुरेखे वज्ररेखे हूँ फट् स्वाहेति मण्डलमिति निबन्धारः । ओँ शताभिषेके समयश्रिये नम श्रिये हूँ फडिति पुष्पाण्यधिष्ठाय ओँ आः हूँ स्वाहेति कायवाक्चित्ताधिष्ठानम् । मृदुमासनमध्यास्य पुरतोऽष्टदलं सभूपुरमष्टवज्राढ्यं गोमयेन चन्दनेन वा लिखेत् । तत्र प्राग्दले ह्रीं दक्षिणदले त्रीं उत्तरे फ पश्चिमे ट मध्ये हूँ ओँ इति केचित् । इति विलिख्य भूतशुद्धिं कुर्यात् । यथा ह्रींकारं रक्तं नाभौ ध्यात्वा तदभूताग्निना दग्धं देहं विचिन्त्य ततः त्रींकारं नीलं हृदि विचिन्त्य तदुद्भूत वायुना भस्म प्रोत्सार्य हूँकारं श्वेतं ललाटे ध्यात्वा तदुदभूतामृतवृष्ट्या जगत् प्लुतं विचिन्त्यात्मानं व्यपगतसमस्तव्यक्तं ध्यायेत् । ततो विश्वव्यापके जले पद्मान्तःस्थामुक्तरूपां देवीं ध्यात्वा तद्रूपमात्मानं चिन्तयेत् । ततोऽस्य मन्त्रस्याक्षोभ्यऋषि र्बृहतीछन्द एकजटा देवता विद्याद्यभीष्टसिद्धौ विनियोगः इति स्मृत्वा शिरोवदनहृत्सु ऋषिछन्दोदेवता विन्यसेत् । ततो ह्राँ हृदयाय नमः ह्रीँ शिरसे स्वाहा ह्राँ शिखायै वषट् ह्रैँ कवचायहुँ ह्रौँ नेत्रत्रयाय बौषट् ह्रः अस्त्रायफट् इत्यङ्गुलीःकनिष्ठामारभ्य तलपर्यन्तं विन्यस्य तानेव मन्त्रान् हृदये शिरःशिखाकवचनेत्रपाणितलेष्वपि न्यसेत् । अङ्गुलीषु कनिष्ठादि पदेनोल्लेख इति प्राञ्चः । ततो योनिं वदध्वा श्री मदेकजटे इहागच्छ इहतिष्ठेत्यावाह्य मध्यमण्डले संस्थाप्य एषोर्घ ओं एकजटायै नमः इत्यर्घं दत्वा ओँ श्री मदेकजटे वज्रपुष्पं प्रतीच्छ मूलेन प्रणवादिस्वाहान्तेन त्रिः संपूज्य तथात्मानमपि पूजयेत् । अर्घा-

दावपि अर्घं प्रतीच्छ स्वाहेत्यादिक एव मन्त्र इति केचित्। मूलेन स्वाहादि-कान्तेन धूपादि दत्वा बलिं दद्यात्। ओँ अक्षोभ्य वज्रपुष्पं प्रतीच्छ स्वाहेति देवीमौलौ पूजयेत्। देवी-पूर्वदले ओं वैं वैरोचन वज्रपुष्पं प्रतीच्छ स्वाहा देवी-दक्षिणदले ओं अं असिताय वज्रपुष्पं प्रतीच्छ स्वाहा देवीपश्चिमदले ओँ पं पद्म-नाभ वज्रपुष्पं प्रतीच्छ स्वाहा देवीउत्तरदले ओँ शं शङ्खपाण्डरवज्रपुष्पं प्रतीच्छ स्वाहा अग्निदले ओं नां नामके वज्रपुष्पं प्रतीच्छ स्वाहा नैऋते ओं मां मामके वज्रपुष्पं प्रतीच्छ स्वाहा वायुदले ओं पां पाण्डरे वज्रपुष्पं प्रतीच्छ स्वाहा ऐशानदले ओं तां तारके वज्रपुष्पं प्रतीच्छ स्वाहा इति संपूज्य प्राग्द्वारादितः पद्मान्तक-यमान्तक-विघ्नान्तक-नरकान्तकान् संपूजयेत्। नाच्युच्चं नातिनीचं देवीं ध्यात्वा मन्त्रं जपेत्। ततो यथासम्भवं बलिं दत्वा नमस्कृत्य देवीं विसर्जयेत्। जपान्ते भोजनकाले च श्रीमदेकजटे महायक्षाधिपतये इमं बलिं गृह्ण गृह्ण गृह्णापय गृह्णापय परविद्यामाकृष्य त्रुट त्रुट सर्वजगद्वशमानय ह्रीं स्वाहेति बलिं दद्यात्। अत्र मन्त्रे तारादिपदेनोह इति केचित्। वस्तुत एकजटात्वं सर्वासामेव ध्यानाद्यनुरोधात्। देवतात्वं तेन तेन रूपेणेत्यन्यदेतत् अतो न मन्त्रादावूहः समवेतार्थत्वात। एवमेव समाचार इति तत्वम ॥ उक्तं च मत्स्यसूक्ते नीलेयं वाकप्रदाचेति ततो नीलसरस्वती।

तारकत्वात् सदा तारा भुक्तिमुक्तिप्रदायिनी ॥
उग्रापत्तारिणीं यस्मादुग्रतारेति कीर्तिता।
तारा त्वैकजटा त्वेषा भुक्तिमुक्तिकरी सताम् ॥
अभुक्तः प्रजपेन्मन्त्रं न दोषः कृतभोजने।
बलिप्रदाने पूजायां नात्र कार्या विचारणा।
नियमानियमौ नात्र नालस्यं भीरुता त्रपा ॥
स्वेच्छाचारोऽत्र विहितो महाचीनक्रमादिति संक्षेपः।

अथ काम्यानि
पुष्करिण्यां जलेऽगाधे यष्टिकाष्ठं तमोग्रहे ॥
दन्तेनानीय तत् तूर्णं कीलकं तेन कारयेत्।
तेनैव मधुघृताक्तेन पद्मिनीपत्रमात्रके ॥
लिखेद् वज्रावलीमध्ये मूलमन्त्रं तु सिद्धिदम्।

तमोग्रहे चन्द्रोपरागे। निशीथे कश्चित्। कीलकं कर्पमित्यर्थः तेनैव कीलकेनैव। वज्रे ति अष्टवज्रसंयुक्तभूपुरमध्ये इत्यर्थः।

तत्कुण्डे चतुरस्रे तु निःक्षिप्य जुहुयादपि ।
सहस्रं क्षीरनीराक्तं पद्मानां लोहितत्विषाम् ॥

तत्पद्मिनीपत्रलिखितयंत्रमित्यर्थः । एवं द्रव्यान्तराण्यपि तत्र तत्रोक्तानि तत्तत्फलकामो हुनेदिति भावः ।

बलिविधानमाह । प्रणवं पूर्वमुच्चार्य पद्मे युग्मं तथैव च ।
महापद्मे पदं ब्रूयात् पद्मावतिपदं ततः ॥
माये स्वाहेतिमन्त्रेण यथापूर्वं बलिं हरेत् ।
एवं यः कुरुते कर्म स स्याद् द्रुतकविध्रुवम् ॥

ओँ पद्मे पद्मे महापद्मे पद्मावति हूं हूं स्वाहेति मन्त्रः ।
यथापूर्वमिति यथा चतुःपथादावर्धरात्रे नित्यबलिहरणः तथा प्रयोगावसरे दद्यादित्यर्थः ।

नित्यबलिमाह अर्धरात्रे ततो नित्यं बलिं दद्यात् चतुःपथे ।
प्रणवं पूर्वमुच्चार्य हृल्लेखां च ततः परम् ॥
एकजटे पदान्ते च महाशब्दमुदीरयेत् ।
यक्षाधिपदमाभाष्य पतये पदतस्ततः ॥
उपनीतपदं चोक्त्वा बलिं गृह्णेति च द्विधा ।
गृह्णापय द्विधा चोक्त्वा मम सर्वपदात्ततः ॥
शान्तिं कुरु पदं चैव परविद्यामनन्तरम् ।
द्विधाकृष्येति च ब्रूयात् त्रुटछिन्धीति च द्विधा ॥
मायास्वाहेति मन्त्रोऽयं बल्यादौ बुद्धिसिद्धिदः ।
परसैन्यग्रहारिष्टरोगापद्विनिवारकः ।

भोजनकाले च ओँ ह्रीँ श्रीमदेकजटे महायक्षाधिपतये इमं बलिं गृह्ण गृह्ण गृह्णापय गृह्णापय परविद्यामाकृष्य त्रुट त्रुट छिन्धि छिन्धि सर्वं जगद्वशमानय ह्रीँ स्वाहा इति बलिदानमन्त्रः ।

अपरोऽपि भोजनकाले मधुमांसक्षेत्रमाषात्मकबलिदानंतत्रमन्त्रः । ओँ ह्रीँ एकजटे ख ख सर्वराक्षसपिशाचान् ग्रस ग्रस मम जाड्यं छेदय ह्रीँ ह्रीँ फट् ।

अथ ससिद्धबलिदानमन्त्रः ॥ ओँ ह्रोँ एकजटे इमं बलिं गृह्ण गृह्ण भञ्ज भञ्ज दह दह छेदय छेदय स्तम्भय स्तम्भय विध्वंसय सर्वग्रहेभ्यो रक्षां कुरु कुरु ऐं ऐं फट् स्वाहेति निबन्धेषु मन्त्रा लिखिताः ।

तथा अथवा मधुलाजाभ्यां जिह्वायां बालकस्य तु ।
नाडीछेदाद्यथापूर्वं लिखेद्धेमशलाकया ॥
मूलमन्त्रं लिखेन्मन्त्री यद्वौष्ठे श्वेतदूर्वया ।
वाक्योच्चारणतो वाग्मी बालो द्रुतकविर्भवेत् ॥

एवं वाक्योच्चारणमारभ्य द्रुतकविर्भवेदित्यर्थः ।

मत्स्यसूक्ते पितुर्भ्राता लिखेन्मन्त्रं मातुर्भ्राताथवा पुनः ।
पिता वाथ लिखेन्मन्त्रं नान्यस्तत्र कदाचन ॥

तन्त्रे शताभिजप्तमन्त्रेण रोचनातिलकं नरः ।
कृत्वा पश्यति यं मन्त्री तं कुर्याद् दासवद् वशम् ॥
श्मशानाङ्गारमादाय निशि मङ्गलवासरे ।
कृष्णवस्त्रेण संवेष्टय बध्नीयाद् रक्ततन्तुना ।
शताभिमन्त्रितं तच्च प्रक्षिपेद् यस्य मन्दिरे ॥
सप्ताहाभ्यन्तरे तस्य उच्चाटनमिदं भवेत् ।

अङ्गारो ज्वलमान एव ग्राह्य । पश्चात् स्वयं निर्वाप्य इति प्राञ्चः । कृष्णता वस्त्रस्य नीलीरसेन । रक्तता च तन्तूनां येन केनापीति शिष्टाचारः ।

तथा नवास्थिनि लिखेन्मन्त्रं क्षारयुक्तहरिद्रया ।
सहस्रं परिजप्यैतन्निशायां रविवासरे ॥
निःक्षिप्यते गृहे यस्य मृत्युस्तस्य त्रिमासतः ।
क्षेत्रे शस्यस्य हानिः स्याज्जवहानिस्तुरङ्गमे ॥

जवो वेगः बलहानिरिति केचित् । उक्तद्रव्येण तत्तन्नामसंयुक्तं लिखिता तत्र कीलितं मन्त्रं मारणोच्चाटनादिकरमित्यर्थः ।

रक्षाकरं यन्त्रमाह । योनियुग्मं लिखेद् भूर्जे लाक्षारसेन मन्त्रवित् ।
तन्मध्ये साध्यसंयुक्तं मूलमन्त्रं लिखेत्ततः ॥

स्वरान् क्रमगतांश्चापि वर्णान् कादीन् यथाक्रमम् ।
अष्टवज्रसमायुक्तं यन्त्रमेतत् प्रयोजयेत् ॥
वेष्टितं पीतवस्त्रेण जतुनोपरि वेष्टयेत् ।
बध्नीयाद् पट्टवस्त्रेण शिशूनां कण्ठभूषणम् ॥
स्त्रीणां वामभुजे बद्धमन्येषां दक्षिणे भुजे ।
बन्ध्यापि लभते पुत्रं निर्धनो धनवान् भवेत् ॥
इयं रक्षा पुरा बद्धा ज्ञानार्थं गोतमादिभिः ।
कीर्त्यर्थं पार्थिवैश्चान्यैः संग्रामे जयकाङ्क्षिभिः ॥

योनिरिति षट्कोणमित्यर्थः । अष्टवज्रेति एतदनुरोधात् अष्टदलमष्टवज्रयुक्तं भूपुरं च लिखनीयमिति केचित् । वस्तुतोऽष्टदलादौ प्रमाणं नास्ति प्रयोजयेद्र-क्षादाविति शेषः । जतु लाक्षा । अन्येषां पुरुषाणामित्यर्थः । उपसंहरति

इति निगदितमेतद् गोतमाद्यैर्यदुक्तं
सकलमिदमपूर्वं मन्त्रराजे स्वरूपम् ।
यदधिगमवशात् स्याद् वाञ्छिता चेष्टसिद्धि-
र्द्रुततरकवितायै यत्नमन्यं त्यजेच्च ॥

अथस्तुतिः ॥

जय जय तारे देवि नमस्ते
प्रभवति भवती यदिह समस्ते ।
संसाराम्बुधितरणे तरणि -
र्हितमनुसरतां सुगमा सरणिः ॥
प्रज्ञा - पारमितेऽ मितचरिते
प्रणतजनानां दुरितक्षयिते ।
कल्याणं त्वं कुरु मम नित्यम्
मातस्तत्ते नियतं कृत्यम् ॥

करुणामयि चामृतरसरामे
सततं न्यस्तं चेतो वामे।
निखिलसमीहितमपि मम सिद्धं
भगवति भवनुतिमञ्जनिबद्धम्[1]॥
तारिणि तारय मामिह पापात्
स्मरणादसकृत् सकृदपि जापात्।
विविधमनोरथदा भवभारा -
देकजटे त्वं तत्र स्मरणात्॥
मणिधरिवज्रिणि गर्जितसारे
रक्ष रक्ष भयतो भवसारे।
भवदैत्यादिनिषूदिनि मातः
स्वाहाबलिभुक् सायं प्रातः॥
दधती नेत्रत्रितयं रक्तं
गुरुमक्षोभ्यं जटासु रक्तम्।
नीला सुतनुर्व[illegible]मितनागा
शवहृदि दत्तपदा शमितागा॥
हस्तचतुष्केनापि विशाले
विधृतास्युत्पलकर्तृकपाले।
नवमुण्डोज्ज्वलमालामुदिते
नवयौवनमयवपुषा ललिते॥
दधती व्याघ्राजिनपमि वसनं
कुर्वत्यट्टं घोरं हसनम्।
दिव्यालङ्कृतिनिकराभरणे
लम्बोदरि सुरवन्दितचरणे॥
मा भैर्मा भैरिति जल्पन्ती
पितृवनभूमावपि विलसन्ती।

(१) भवनुतिनिकरकलञ्जं वा पाठः (ग)

विलसितमखिलं कुरु मम तस्मात्
प्रत्यक्षा त्वं सिद्धा यस्मात् ॥
सिद्ध्यै हूमिति बीजस्यान्ते
त्रोमिति ह्रीमुत्क्रमतः शान्ते ।
फट्कारान्तं कृत्वा ध्येया
पञ्चत्र्यक्षरमन्त्रबिधेया ॥
त्वं हि सरस्वत्यसि कलिकाले
प्रज्ञा शास्त्रमयी सुविशाले ।
दधती प्रतिभामतिशयितीक्ष्णां
कवितामप्यतिरसभरसूक्ष्माम् ॥
योगिनि योगसमागमगम्ये
श्रीघन - जननि त्वं जयरम्ये ।
निर्लेपा त्वं गगनाकारा
विध्यसि कल्पलता ह्यसितारा ॥
परमा ज्योतिर्मयि सुरसिद्धा
विविधमनोरथनिवहावद्धा ।
अद्वयभावाभाविनि कल्पे
कर्त्री धात्री ह्यसिकृतकल्पे ॥
मानसविलसितचिन्ताशमिते
मधुरूपे त्वं जयसि विनीते ।
स्तौति त्वां यः सोऽप्यतिधन्यः
स हि विबुधोऽसौ निपुणम्मन्यः ॥
ब्रह्मोपेन्द्रमहेशमुखेन
त्रिदशेनापि नताभिमुखेन ।
माया देवी वरदाऽनिन्द्या
तत्त्वं बुद्धशतेन च वन्द्या ॥
श्रद्धाबुद्धिः प्रज्ञा तुष्टि-
र्ह्रीस्त्वं शान्तिः क्षान्तिः पुष्टिः ।

कमसमानं फलसि च पुरुषे
प्रणतेऽशेषं हितमपि कुरुषे ॥
त्रिभुवनजननी स्थिरसुखहेतुः
भवजलधाविह करुणासेतुः ।
मम दीनस्य च यादृक् यस्मिन्
कलुषं नाशय तादृक् तस्मिन् ॥
लोकेन्द्रस्य सुताप्यथ माता
बाला वृद्धा काली श्वेता ।
स्वाहाकारा स्वधाभिधेया
तारे त्वं जगतोसि ज्ञेया ॥
हूङ्कारोत्था देवी शक्तिः
योगमयी त्वं तन्त्रे हेतुः ।
विदधानेषं जगतो वश्यं
मुक्तिं भुक्तिं कुरुतेऽवश्यम् ॥
मायारूपा गोचररूपा
दशबलवनिता सुललितवदना ।
त्रीमिति मुनयस्त्वां निगदन्ति
पुस्तकृतस्ते नियतं सन्ति ॥
ज्ञानादद्वयतस्ते हंसा
मोहध्वान्तोच्चयविध्वंसा ।
वक्त्रोग्रासि च सदया नाम्ना
ख्याता त्वं सहजेन च धाम्ना ॥
अष्टविरूपैकागमकृष्टे
परमा शक्तिस्त्वमिह विमृष्टे ।
दुर्गेभ्यस्त्वं तारयसीति
तारानाम्ना तत्ते कीर्तिः ॥
उग्रं तद् विकरोषि समन्ता—
देकजटे त्वं भास्युपशान्ता ।
दुःखशोकभयभारनिहन्त्री
सा त्वं लब्धा विधितो गन्त्री ॥

सुखगम्यां त्वामपि न भजन्ते
ये तेऽनर्थशते निविशन्ते ।
श्रीस्त्वं गीरसि गौरी माया
गङ्गा गौरस्यमृतोपाया ।
सर्वैव त्वं भगवति तारे
मामनुकम्पय पतितमपारं ।
तव वरलाभादजरामरता
सुलभा सुरताप्यथ खेचरता ॥
किमधिकमथवा सिद्ध्यति मुक्ति -
स्त्वयि यस्यास्ते सुदृढ़ा भक्तिः ।
अंजनपादुकगुटिकासिद्धि -
रणिमादिभिरपि भवति समृद्धिः ॥
शौर्यं राज्यं नवरसभोगा -
स्तव भक्ते स्युस्तेपि नियोगाः ।
वश्याकर्षणोहनभाव —
स्त्वन्मन्त्रस्य च महिमाभावः ॥
करुणामृतमयनिर्मलयशसे
देवि नमस्ते त्वं बीजेशे ।
यो जपति त्वामापत्समये
तस्य सदा शुभदा भास्यभये ।
तव चरणेऽहं पतितो नित्यं
कुरु मम चेतसि शोभनकृत्यम ॥
तारासूक्तं सततं यस्ते
प्रभुरिह मन्त्री जगति समस्ते ।
शून्यागारे श्मशाने यदि जपति जनोऽप्येकलिङ्गे तड़ागे
गङ्गागर्भे गिरौ यः शुचिविमलमतिः सर्वदा मन्त्रराजम् ।
ध्यात्वैनामुग्रतारां हृदयसरसिजे चीनदेशोद्भवासौ
विद्या सौन्दर्ययुक्तं हतरिपुनिचयं नित्यमृद्धिं प्रयच्छेत् ।
इति विरूपाक्षकृतः स्तवराजः सम्पूर्णः ॥

इति तन्त्रकौमुद्यां नीलसरस्वती-तारैकजटामन्त्रपरिच्छेदः ॥६॥

अथ कालीमन्त्राः ।

फेत्कारिणीतन्त्रे । वर्गाद्याद्यं वह्नियुतं रतिविन्दुसमन्वितम् ।

त्रिगुणं च ततः कूर्चयुगं लज्जायुगं ततः ॥

दक्षिणे कालिके चेति पूर्ववच्च ततः पुनः ।

ठद्वयेन समायुक्तं मनुमेनं समुद्धरेत् ॥

नात्र सिद्ध्याद्यपेक्षास्ति न वा सिद्धादिशोधनम् ।

न वित्तव्ययबाहुल्यं कायक्लेशकरं न च ॥

वर्गेति । वर्गाणामाद्यः कवर्गः तदाद्यः ककारः । रतिरीकारः । तेन क्रीं बीजम् । तत् त्रिगुणं त्रिवारमित्यर्थः । कूर्चं हूङ्कारः स्तुतौ तथैवोद्धारात् । लज्जा ह्रीँ । पूर्ववदिति बीजत्रयं पूर्वसंख्याया पूर्वक्रमेणैव वाच्यमित्यर्थः । ठद्वयं स्वाहा । एवं क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ दक्षिणकालिके क्रीँ क्रीँ क्रीँ हूँ हूँ ह्रीँ ह्रीँ स्वाहा इतिमन्त्रः ।

तथा तन्त्रान्तरे ।

नमः पाशाङ्कुशौ द्वेधा फट् स्वाहा कालिकालिके ।

दीर्घं तनुच्छदं कालीमनुः पञ्चदशाक्षरः ॥

तेन नमः आँ आँ क्रोँ क्रोँ फट्स्वाहा कालिकालिके हूँ इति मन्त्रः ।

मत्स्यसूक्ते —लज्जाबीजं ततः क्रोधः फडन्ता त्र्यक्षरी भवेत् ॥

तेन ह्रीँ हूँ फट् इति मन्त्रः

तन्त्रचूडामणौ ह्रीं श्मशानपूर्वायाः केवलायाह इत्यपि ।

अथातः संप्रवक्ष्यामि पुण्यं वै दक्षिणाविधिम् ।

सर्वसिद्धिप्रदं साक्षान्महापातकनाशनम् ॥

देवैर्देवत्वविधये सिद्धैश्च बलसिद्धये ।

पन्नगै राक्षसैर्मर्त्यैर्मुनिभिश्च मुमुक्षिभिः ॥

कामिभिर्धर्मिभिश्चापि मुनिभिः सेवितं सदा ।

देवीं दक्षिणसंज्ञान्तां प्रवक्ष्यामि यथाविधि ॥

करालवदनां घोरां मुक्तकेशीं चतुर्भुजाम् ।

चामुण्डां दक्षिणां दिव्यां मुण्डमालाविभूषिताम् ॥

सद्यश्छिन्नशिरः खड्गवामोर्द्ध्वाधः कराम्बुजाम् ।

अभयं वरदं चैव दक्षिणाधोर्द्ध्वपाणिकाम् ॥
महामेघप्रभां श्यामां तथा चैव दिगम्बराम् ।
कण्ठावसक्तमुण्डालीगलद्रुधिरचर्चिताम् ॥
कर्णावतंसतानीतशवयुग्मभयानकाम् ।
घोरदंष्ट्राकरालास्यां पीनोन्नतपयोधराम् ॥
शवानां करसंघातैः कृतकाञ्चीं हसन्मुखीम् ।
सृक्कद्वयगलद्रक्तधाराविच्छुरिताननाम् ।
घोररूपां महारौद्रीं श्मशानालयवासिनीम् ॥
एवं यश्चिन्तयेद्देवीं सर्वकामसमृद्धिदाम् ।
तस्य हस्ते सदैवास्ति सर्वसिद्धिर्न संशयः ॥

ध्यानं च शवोपरि—तदुक्तं तन्त्रान्तरे

शवरूपमहादेवहृदयोपरि संस्थिताम् ।
शिवाभिर्घोररावाभिश्चतुर्दिक्षु समन्विताम् ।
महाकालेन सार्धं तामुपरिष्टां रतान्विताम् ॥
गद्यपद्यमयी वाणी सभायां तस्य जायते ।
तस्य दर्शनमात्रेण वादिनो निःप्रभा मताः ॥
राजानोऽपि च दासत्वं भजन्ते किं परे जनाः ।
वह्नेःस्तम्भं जलस्तम्भं गतिस्तम्भं विवस्वतः ।
दिवारात्रिव्यत्ययं च वशीकर्त्तुं क्षमो भवेत् ।
सर्वस्यैव जनस्येह वल्लभः कीर्त्तिवर्धनः ।
अन्ते च भजते देव्या गणत्वं दुर्लभं नरैः ॥
चन्द्रसूर्यसमो भूत्वा वसेत् कल्पायुतं दिवि ।
ब्रह्महत्या सुरापानमगम्यागमनं तथा ।
सर्वमाशु भवत्येव दक्षिणामेव चिन्तयन् ॥
वागीशस्य समो वाचि धनैर्धनपतिर्भवेत् ।
कामतुल्यश्च नारीणामरीणां च यमोपमः ॥
सर्वमेतद् भवत्याशु योनिमुद्रानिबन्धनात् ।
इत्येवमादिकं चोक्तमन्यत् किं कथ्यतां पुनः ॥
न तस्य दुर्लभं किंचित् यः स्मरेत् कालिदक्षिणाम् ।

तथा अथ वक्ष्याम्यहं देव्याः पूजाविधिमनुत्तमम् ।
त्रिकोणं विन्यसेत् पूर्वं पुनश्चापि त्रिकोणकम् ।।
नवकोणं न्यसेत्तत्र तन्मध्ये स्थापयेच्छिवाम् ॥

एवं पञ्चत्रिकोणात्मकं पञ्चदशकोणं यन्त्रं लिखेदित्यर्थः । केचित्तु प्रथमं षट्कोणं तन्मध्ये नवकोणलिखनं बहिःषट्कोणक इत्यादि संदंशात् ।

तथा कालीं कपालिनीं कुल्लां कुरुकुल्लां विरोधिनीम् ।
विप्रचित्तां न्यसेच्चैव बहिःषट्कोणके बुधः ॥
उग्रामुग्रप्रभां दीप्तामपरत्रिकोणके न्यसेत् ।
नीलां घनां वलाकां च तथैवान्यत्रिकोणके ॥
मात्रां मुद्रां च मित्रां च न्यसेच्चान्यत्रिकोणके ।
सर्वाः श्यामा असिकरा मुण्डमालाविभूषणाः ।
तर्जनीं वामके हस्ते धारयन्त्यश्च संमिताः ॥

अत्र बहिःषट्कोणके इत्यभिधानात् बहिरुपक्रमेणान्तरं यावत्पूजनं पद्धतावन्त-रुपक्रमेण लिखनमबोधात् ।

तथा बहिर्मण्डलके चापि ब्राह्मीं नारायणीं तथा ।
माहेश्वरीं च चामुण्डां कौमारीं चापराजिताम् ॥
वाराहीं च ततोऽभ्यर्चेन्नारसिंहीमनन्तरम् ।
सर्वासामपि वै देयो बलिः पूजनमेव च ॥
अनुलेपनकं चापि विभवेनोपकल्पितम् ।
त्रिस्त्रिः पूजा प्रकर्त्तव्या सर्वासामपि सर्वदा ॥
अङ्गन्यासकरन्यासौ यथावत्कथयाम्यहम् ।
षड्दीर्घवर्गाद्याद्येन वह्निविन्दुयुतेन च ॥
षडङ्गानि न्यसेन्मन्त्री त्रिः सकृत् वा यथासुखम् ॥
पञ्चधा नवधा वापि मूलमन्त्रेण सप्तधा ।
समस्ताङ्गं प्रकुर्वीत शोधितं मन्त्रवित्तमः ॥
ततः पूर्वोक्तरूपां तां ध्यायेद् देवीं च दक्षिणाम् ।
योगिनी-चक्रसहितां महाकालसमन्विताम् ॥
संपूज्य यत्नतश्चापि बलिं च प्रतिपादयेत् ।
बलिमुत्सार्य नैवेद्यं नैऋत्यां च निवोधयेत् ॥

हृदये चैव देवीं स्वे समर्प्य विधिवत् पुनः ।
नैऋत्यां वै शुचौ देशे धारिणीयं सदा बुधैः ॥

षड्दीर्घमाकारादिषट्कम् । वर्गाद्यं ककारः । मूलमन्त्रेणेति शोधनान्वितम् ।

अथ पुरश्चरणम् । लक्षं चैव जपेन्मन्त्री हविष्याशी दिवा शुचिः ।
अशुचिश्च तथा रात्रौ लक्षमेकं तथा जपेत् ॥
दशांशं होमयेन्मन्त्री तर्पयेदभिषेचयेत् ।
होमे च तर्पणे चैव पूजावत् कथितो विधिः ॥
एवं देवीं कलुषदहनीं पूजयित्वा यथावद्
दत्वा तावद् बलिमपि तथा तर्पयित्वाभिषिच्य ।
कामं यं यं रचयति मनस्याहितं दुर्लभं वा
मन्त्री तावद् भुवनमहितो विन्दते नान्यथा तत् ॥

एवं समुचितं लक्षद्वयं पुरश्चरणं विकल्पबोधकाभावात् । होमश्च तिलाज्येन, "अनुक्ते तु हविर्द्रव्ये तिलाज्यं हविरुच्यते" इति परिभाषणात् ।

अथ पूजाविधिर्लिख्यते ।

प्रथमं मूलमन्त्रेण हस्तौ पादौ प्रक्षाल्याचम्य कुशहस्तः सम्मोहिनीपूजामारभेत । करकच्छपिकां बद्ध्वा निमीलिताक्ष ऊर्द्ध्वमूलमधःशाखमश्वत्थरूपमात्मानं ध्यात्वा यमिति वायुबीजेन संशोष्य रमिति वह्निबीजेन संदह्य लमिति भस्मोक्षिप्य वमित्यमृतवृष्ट्या प्राग्वदेव भूतशुद्धिं कृत्वा देवीरूपमात्मानं विचिन्तयेत् । ऋष्यादिकराङ्गन्यासं कृत्वा भूतशुद्धिः कार्येति प्राञ्चः । ततोऽस्य दक्षिणामन्त्रस्य भैरवऋषिरनुष्टुप्छन्दो दक्षिणाकालिका देवता ह्रीं बीजं हूँ शक्तिरनिरुद्धसरस्वतीकवित्वार्थे विनियोग इति स्मृत्वा ऋष्यादीन् विन्यस्य क्रां हृदयाय नमः क्रीं शिरसे स्वाहा क्रूँ शिखायै वषट् क्रैँ कवचाय हूँ क्रौँ नेत्रत्रयाय वौषट् क्रः अस्त्राय फट् इत्यङ्गुष्ठादितलान्तं विन्यस्य तानेव मन्त्रान् हृदयशिरःशिखाकवचनेत्रकरतलेषु सकृत् त्रिधा पञ्चधा सप्तधा नवधा वा न्यसेत् । ततः आकारादैकारं यावदुक्त्वा हृदयं स्पृशेत् । ओकारादिषकारपर्यन्तं दक्षिणे भुजे । छकारादितकारपर्यन्तं वामभुजे । थकारादियकारपर्यन्तं दक्षिणजंघायां । रेफादिहान्तं वाम जंघायां ( पञ्चसु दशशो अकारात्

लृकारं यावत्, एकादिघकारं यावत्, ङकारात् ढकारं यावत्, णकारात् भकार-पर्यन्तं, मकरादि लान्तं इति पञ्चधा दशशो विभज्यैव कथितम्) वा वर्णान् विभज्य न्यसेदिति निबन्धारः।

ततः सप्तधा मूलमुच्चार्य व्यस्तहस्ताभ्यां सर्वाङ्गं स्पृशेत्। मूलेनार्घं प्रक्षाल्य पीठे पञ्चदशकोणं न्यसेत्। ततो मूलेन पुष्पाद्यैरर्घं संपूर्य तदुपरि हस्तं दत्वा पुष्पं च मूलं च त्रिर्जपेत्। ततः पुष्पमेकं गृहीत्वा नाभौ करकच्छपिकां कृत्वा महामेघेत्यादि कथितरूपां ध्यात्वा तेन पुष्पेण देवीं शिरसि संपूज्य ओं एह्येहि भगवति मद्धस्तपादुकामारुह्य पूजास्थानमागच्छ इति वामनासापुटा-दावाहनमुद्रयावाह्य संस्थापयेत्। ततः पञ्चदशकोणे वामावर्तेन प्रथम त्रिकोणे कालीं कपालिनीं कुल्लां द्वितीये कुरुकुल्लां विरोधिनीं विप्रचित्तां तृतीये उग्रामुग्र-प्रभां दीप्तां चतुर्थे नीलां घनां वलाकां पञ्चमे मात्रां मुद्रां मित्रां च चिन्तयेत्। सर्वा श्यामा मुण्डमालाविभूषणाः दक्षिणे खड्गं वामे तर्जिनीं धारयन्त्यश्चिन्त-नीयाः। तद्बहिः ब्राह्मी नारायणी माहेश्वरी चामुण्डा कौमारी अपराजिता वाराही नारसिंही एताश्चोक्तरूपाश्चिन्तयेत्। मध्येकर्णिकायां पूर्वोक्तरूपां देवीं ध्यायेत्, महाकालं च।

ततोऽर्घपात्रमादाय मूलमन्त्रेणार्घं दद्यात्। ततो मूलेन गन्धादिना पुष्पाञ्जलित्रयेण च पूजयेत्। यथाशक्ति मूलेन नैवेद्यं दद्यात्। ततोऽङ्गपूजनम् तद्यथा। पूर्वलिखितपञ्चदशकोणे प्रथमत्रिकोणे ओं काल्यैनमः। ओं कपा-लिन्यै नमः। ओं कुल्यायै नमः। एवमपरत्रिकोणेषु यथाक्रमं न्यस्तदेवतां पूजयेत् तद्बहिर्मातृगणं न्यासक्रमेण पूजयेत्। ततो देवीशिरसि मूलेन पुष्प-चन्दनादिकं दत्वा सहस्रमष्टोत्तरं शतं वा दशधा वा यथाशक्ति जपेत्। पुनर्देवी-शिरसि पुष्पं दत्वा विसर्जनमुद्रया विसर्जयेदिति संक्षेपः।

अथ काम्यानि

नागयज्ञोपवीतां च चन्द्रार्धकृतशेखराम्।
जटायुक्तां च संचिन्त्य महाकालसमीपगाम्॥
कूर्चं लज्जायुगं बीजयुगं चान्ते तथैव च।
एवं संचिन्त्य देवीं च रक्तपुष्पैः समर्चयेत्॥

कामबाणसमाविद्धा निर्लज्जा विह्वला स्त्रियः ।
स्वं स्वं संत्यज्य भर्त्तारमालिङ्गन्ति सदैव तम् ॥

अन्त्ये दक्षिणे कालिके इत्यस्येति शेषः मन्त्रस्येति कश्चित् चकारादावपि ।

लोहितां शूलहस्तां तामेकशूलधरां पराम् ।
महाकालाग्रसंस्थां च ध्यात्वा पुष्पैः सपीतकैः ॥
अभ्यर्च्यैकैकशश्चाद्ये तथैवान्ते च योजयेत् ।
आकर्षणं भवेदेवं सदा स्थावरजङ्गमे ॥
पातालतलगं चापि किमन्यद् भूतलस्थितम् ।
आकृष्टमेति तत् सर्वं महाकालवचो यथा ॥

एकैकशः कूर्चादिवीजत्रयमिति शेषः । आदौ अन्त्ये दक्षिणेकालिके इत्यस्येति शेषः । मन्त्रस्यैवेति कश्चित् ।

कपिलां द्विभुजां कर्त्रीं कपालं सव्यदक्षिणे ।
ध्यात्वा चैवं हि सर्वस्य शेषे ठद्वयमेव च ॥
एवं प्रजप्य पुष्पेण कृष्णेनात्र प्रपूजयेत् ।
भवेन्मारणमेतेन यमुद्दिश्य कृता क्रिया ॥
उच्चाटयति पिङ्गाक्षी संत्रासयति केकरा ।
विद्रावयति मुक्तास्या प्रोन्मत्तयति घूर्णिता ॥
विक्षोभयति संक्षुब्धा संपातयति सन्नता ।
संकोचयति संरुद्धा विबुद्धा विप्रबोधयेत् ॥
यं यं भावं जनो नेयस्तद्भावस्थां स्मरेदपि ।
अत्र सर्वत्र कर्त्तव्यं भावमात्रस्य चिन्तनम् ॥
उद्घाटनाख्यमेवात्र सर्वत्र सुरतं मतम् ।
स्नातः शुक्लाम्बरधरः कृतनित्यक्रियो दिवा ॥
रात्रौ नग्नः शयानश्च मैथुने च व्यवस्थितः ।
अथवा मुक्तकेशश्च तेन सर्वार्थसिद्धयः ॥
स्तम्भनं मोहनं चैव वशीकरणमेव च ।
नग्नां परस्त्रियं वीक्ष्य यो जपेदयुतं नरः ॥
स भवेत सर्वविद्यानां पारगः सर्वदैव हि ।

तस्य दर्शनमात्रेण वादिनो निःप्रभा मताः ॥
गद्यपद्यमयी वाणी तस्य सर्वविधा भवेत् ।
अथवा मुक्तकेशश्च हविष्यं भक्षयेन्नरः ॥
प्रजपेदयुतं तावदेष प्रतिनिधिर्मतः ।
अष्टोत्तरशतं जप्त्वा मुखमामन्त्र्य यत्नतः ।
मुक्तास्यं यः प्रकुर्वीत धनधान्यसुतान्वितः ॥
सर्वविद्यावतां श्रेष्ठो भवेन्नैवात्र संशयः ।
ऋतुमत्या भगं पश्यन् प्रजपेदयुतं नरः ॥
अनर्थकापि तद्वाणी गद्यपद्यमयी भवेत् ॥
छन्दोबद्धा परं तस्य वाणी वक्त्रात् प्रजायते ।
सुरतेषु च जप्तव्यं महापातकमुक्तये ॥
धनागमाय च तथा परयोषासमागमे ।
यदि योषिन्न संसर्गे तदा रेतः प्रयत्नतः ।
समुत्साय ततो जप्यं सर्वकामार्थसिद्धये ॥
श्मशानालयमागत्य मुक्तकेशो दिगम्बरः ।
जपेदयुतसंख्यं तु सर्वकामार्थसिद्धये ॥
तत्रैव प्रेतमारुह्य यो जपेन्मन्त्रवित्तमः ।
अयुतं मैथुनीभूत्वा विभीः सत्त्वपरायणः ॥
स याति परमां सिद्धिं देवैरपि सुदुर्लभाम् ।
आकर्षणं वशीकारो बन्धनोच्चाटनादिकम् ॥
स्तम्भनं मोहनं चैव त्रासनं हासनं तथा ।
वाग्मित्वं च धनित्वं च बहुपुत्रत्वमेव च ॥
बहुवल्लभतां प्राप्य सर्वप्रियत्वमेव च ।
स याति खेचरत्वं च देवत्वमपि चैव हि ॥
न जरा न च रोगो वा न मृत्युर्न च वा भयम् ।
न वाप्रीतिर्मनुष्यत्वे न च वाक्कायपातनम् ॥
अथवा स भवेन्नित्यं चतुर्विंशतिसिद्धिभाक् ।
स्वदेहरुधिराक्तेन विल्वपत्रेण सहस्रशः ॥
श्मशानेऽभ्यर्च्य देवीं तु वागीशसमतां व्रजेत् ।
रेतोयुक्तेन पत्रेण अभ्यर्च्येह सहस्रशः ॥

श्मशानेऽभ्यर्च्य देवीं तु सर्वसिद्धिं स विन्दति ।
धनवान बलवान् वाग्मी सर्वयोषित्प्रियो भवेत् ॥
सुखी स्यान्नात्र संदेहो महाकालवचो यथा ।
श्मशाने योषितां बीजे मध्येऽभ्यर्च्य सहस्रशः ॥
रक्तचन्दनदिग्धाङ्गीं रक्तपुष्पैरलंकृताम् ।
तावत् पुष्पैरनुप्रोक्ष्य ततो ध्यायेत चण्डिकाम् ॥
ततो गत्वा भवेद् राज्यं यदि सा न पलायते ।
श्मशाने शयने चैव शवालतगतः पुनः ॥
असकृत् प्रजपेन्मन्त्रं सर्वसिद्धिप्रदो भवेत् ।
तर्पयेच्च शवास्ये तु रक्तमांसास्थिभिः त्रिधा ॥
त्रिभिर्मन्त्रमुदीर्यैवं सर्वसिद्धिप्रदो भवेत् ।
तर्पयेच्च पयोभिश्च रक्तधातुयुतैस्त्रिधा ॥
मेषमाहिषरक्तेन नररक्तेन चैव हि ।
मूषमार्जाररक्तेन वाग्मित्वं तस्य जायते ॥
रेतोभिश्च तथा तद्वत् स्वकायिकमलमेव च ।
मैथुने नवयोषाया भगप्रक्षालनेन च ॥
धनित्वं जायते तस्य सर्वसिद्धिः प्रजायते ।
वचसा स भवेज्जीवो धनेन च धनाधिपः ॥
आज्ञया देवराजोऽसौ रूपेणैव मनोभवः ।
बलेन पवनो ह्येष सर्वतत्त्वार्थसाधकः ॥
साधितासाधितं मांसं सास्थि दद्यात् सदा बलिम् ।
मूषमांसं मेषमांसं छागं माहिषमेव च ।
सर्वं सास्थि प्रदातव्यं तथा लोमसमन्वितम् ।
स्वनखं छिन्नमजिनं केशं सम्मार्जनागतम् ॥
निवेदयेत् श्मशाने च सर्वसिद्धिप्रदो भवेत् ।
नारीरजोयुतं कृत्वा पर्णानां शतमुत्तमम् ॥
प्रत्येकं प्रजपेन्मन्त्रं ततस्तद्धोमयेद् बुधः ।
युगानामयुतं तेन दक्षिणा पूजिता भवेत् ॥
सर्वसिद्धिर्भवेत्तस्य वाग्मी धीरश्च जायते ।
न तस्य दुर्लभं किंचित् पृथिव्यां यच्च विद्यते ॥

योनिरूपं च कुण्डं हि कृत्वा वितस्तिमानतः ।
हस्तविस्तारतस्तावत् कृत्वा चापि तथाप्यधः ॥
तत्र कार्या हि मन्त्रेण वह्निस्थापनिका क्रिया ।
महाकालाय देवाय दद्यात् प्रथममाहुतिम् ॥
ध्रुवं मांसेन चाज्येन भक्तेन रुधिरेण च ।
कृष्णपुष्पेण साज्येन सुरक्तेन विशेषतः ॥
आमिषादिभिरप्येवं जुहुयात् श्मशानालये ।
स्नातः शुक्लाम्बरधरः शुचिः प्रयतमानसः ॥
दिवा चैवं प्रकर्त्तव्यं सर्वकामार्थसिद्धये ।
रात्रौ नग्नो मुक्तकेशो मैथुनेषु व्यवस्थितः ॥
द्विजानां चैव सर्वेषां दिवाविधिरिहोदितः ।
शूद्रानां चैव सर्वेषां दिवारात्रौ महाव्रतम् ॥
महाकालं हुनेद् यत्नात् पश्चाद् देवीं प्रयत्नतः ।
त्रिधा विभज्य मन्त्रं वै यत्नात् साधकसत्तमः ॥
मांसं रक्तं तिलं केशं नखं भक्तं च पायसम् ।
आज्यं चेति प्रयत्नेन सर्वकामार्थसिद्धये ॥
एवं कृत्वा विधानेन भजते सिद्धिमुत्तमाम् ।
यद्यन् प्रार्थयते चित्ते तत्तदाप्नोति नित्यशः ॥
देवत्वं दानवत्वं च सिद्धचारणतां तथा ।
सदा स्वर्गमवाप्नोति नित्यमेवमतन्द्रितः ॥

इत्यलं विस्तरः ।

**अथ स्तुतिः ।**

कर्पूरं मध्यमान्त्यस्वरपरिरहितं सेन्दुवामाक्षियुक्तं
बीजं ते मातरेतत् त्रिपुरहरवधू त्रिःकृतं ये पठन्ति ।
तेषां गद्यानि पद्यानि च मुखकुहरादुल्लसन्त्येव वाचः
स्वच्छन्दं ध्वान्तधाराधररुचिरुचिरे सर्वसिद्धिं गतानाम् ॥१॥
ईशानं सेन्दुवामश्रवणपरिगतं बीजमन्यन्महेशि
द्वन्द्वं ते मन्दचेता यदि जपति जनो वारमेकं कदापि ।

जित्वा वाचामधीशं धनदमपि चिरं मोहयत्यम्बुजाक्षी-
वृन्दं चन्द्रार्धचूडे प्रभवति स महाघोरशावावतंसे ॥२॥
ईशं वैश्वानरस्थं शशधरविलसद् वामनेत्रेण युक्तं
बीजं ते द्वन्द्वमन्यद् विगलितचिकुरे कालिके ये जपन्ति।
द्वेष्टारं घ्नन्ति ते च त्रिभुवनमपि ते वश्यभावं नयन्ति
सृक्कद्वन्द्वास्रधाराविनिहितनयने दक्षिणे त्र्यक्षरेति ॥३॥
ऊर्ध्वं वामे कृपाणं करकमलतले छिन्नमुण्डं ततोऽधः
सव्येऽभीतिं वरं च त्रिजगदघहरे दक्षिणे कालिकेति।
जप्त्वैतन्नाम मन्त्रं तव मनुविभवं भावयन्त्येतदर्थं
तेषामष्टौ करस्थाः प्रकटितरदने सिद्धयस्त्र्यम्बकस्य ॥४॥
वर्गाद्यं वह्नियुक्तं विधुरतिललितं तत् त्रयं कूर्चयुग्मं
लज्जाद्वन्द्वं च पश्चात् स्थितमथ तदधष्ठद्वयं योजयित्वा।
मातर्ये ते जपन्ति स्मरहरमहिले भावयन्तः स्वरूपं
ते लक्ष्मीलास्यलीलाकमलदलदृशः कामरूपा भवन्ति ॥५॥
प्रत्येकं वा त्रयं वा द्वयमपि च परं बीजमत्यन्तगुह्यं
त्वन्नाम्ना योजयित्वा सकलमपि सदा भावयन्तो जपन्ति।
तेषां नेत्रारविन्दे विहरति कमला वक्त्रशुभ्रांशुबिम्बे
वाग्देवी देवि मुण्डस्रगतिपरिलुठत्कण्ठि पीनस्तनाढ्ये ॥६॥
गतासूनां बाहुप्रकरकृतकाञ्ची-परिलस-
न्नितम्बां दिग्वस्त्रां त्रिभुवनविधात्रीं त्रिनयनाम्।
श्मशानस्थां तल्पे शवहृदि महाकालसुरत-
प्रसक्तां त्वां ध्यायन् जननि जड़चेता अपि कविः ॥७॥
शिवाभिर्घोराभिः शवनिवहमुण्डास्थिनिवहैः
परं संकीर्णायां प्रकटितचितायां हरवधूम्।
प्रविष्टां संतुष्टामुपरि सुरतेनातियुवतीं
सदा त्वां ध्यायन्ति क्वचिदपि न तेषां परिभवः ॥८॥
वदामः किं वा त्वां जननि वयमुच्चैर्जड़धियो
न धाता नापीशो हरिरपि न ते वेत्ति परमम्।
तथापि त्वद्भक्तिर्मुखरयति चास्माकममिते
तदेतत् क्षन्तव्यं न खलु पशुरोषः समुचितः ॥९॥

समन्तादापीनस्तनजघनधृग् यौवनवती-
रतासक्तो नक्तं यदि जपति भक्तस्तव मनुम् ।
विवासास्त्वां ध्यायन् गलितचिकुरस्तस्य करगाः
समस्ताः सिद्धौघा भुवि चिरतरं जीवति कविः ॥१०॥
समाः सुस्थीभूतो जपति विपरीतां यदि सदा
विचिन्त्य त्वां ध्यायन्नतिशयमहाकालसुरताम् ।
तदा तस्य क्षोणीतलविरममाणस्य विदुषः
कराम्भोजे वश्या पुरहरवधू सिद्धिनिवहाः ॥११॥
प्रसूते संसारं जननि भवती पालयति यत्
समस्तं क्षित्यादि प्रलयसमये संहरति च ।
अतस्त्वां धातापि त्रिभुवनपतिः श्रीपतिरहो
महेशोऽपि प्रायः सकलमपि किं स्तौति भवतीम् ॥१२॥
अनेके सेवन्ते भवदधिकगीर्वाणनिवहा
विमूढास्ते मातर्न हि किमपि जानन्ति परमम् ।
समाराध्यामाद्यां हरिहरविरञ्च्यादिविबुधैः
प्रपन्नोऽस्मि स्वैरं रतिरसमहानन्दनिरताम् ॥१३॥
धरित्री कीलालं शुचिरपि समीरोऽपि गगनं
त्वमेका कल्याणी गिरिशरमणी कालि सकलम् ।
स्तुतिः का ते मातर्निजकरुणया मामगतिकं
प्रसन्ना त्वं भूया भवमनु न भूयान्मम जनुः ॥१४॥
श्मशानस्थः सुस्थो गलितचिकुरो दिक्पटधरः
सहस्रं त्वर्काणां निजगलितवीर्येण कुसुमम् ।
जपँस्त्वत्प्रत्येकं मनुमपि तव ध्याननिरतो
महाकालि स्वैरं स भवति धरित्रीपरिवृढः ॥१५॥
गृहे सम्मार्जन्या परिगलितवीर्यं हि चिकुरं
समूलं मध्याह्ने वितरति चितायां कुजदिने ।
समुच्चार्य प्रेम्णा मनुमपि सकृत् कालि सततं
गजारूढो याति क्षितिपरिवृढः सत्कविवरः ॥१६॥
स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो
पुरो ध्यायन् ध्यायन् जपति परमं वा तव मनुम् ।

स गन्धर्वश्रेणीपतिरिव कवित्वामृतनदी –
नदीनः पर्यन्ते परमपदलीनः प्रभवति ॥१७॥
त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां
महाकालेनोच्चैर्मदनरणलावण्यनिरताम् ।
समासक्तो नक्तं स्वयमपि रतानन्दनिरतो
जनो यो ध्यायेत् त्वां जननि किल स स्यात् स्मरहरः ॥ १८ ॥
सलोमास्थि स्वैरं पललमपि मार्जारमपि वा
परं मौषं मैषं नरमहिषयोश्छागमपि वा ।
बलिं ते पूजायामयि वितरतां साधकवरे
न किं सिद्धिः सर्वा प्रतिपदमपूर्वा प्रभवति ॥ १९ ॥
वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो
दिवा मातर्युष्मच्चरणयुगलध्याननिरतः ।
परं नक्तं नग्नो निधुवनविनोदेन च मनुं
जपेल्लक्षं सम्यक् स्मरहरसमानः क्षितितले ॥ २० ॥
इदं स्तोत्रं मातस्तव मनुसमुद्धारणजप–
स्वरूपाख्यं पादाम्बुजयुगलपूजाविधियुतम् ।
निशार्धं वा पूजासमयमधि वा यस्तु पठति
प्रलापस्तस्यापि प्रसरति कवित्वामृतरसः ॥ २१ ॥
कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलं
वशस्तस्य क्षोणीपतिरपि कुबेरप्रतिनिधिः ।
रिपुः कारागारं कलयति च तत्कालिकलया
चिरं जीवन्मुक्तः प्रभवति सुभक्तः प्रतिजनुः ॥ २२ ॥

इति दक्षिणकालीपटलपरिच्छेदः समाप्तः ॥ ७ ॥

अथ उग्रदुर्गामन्त्रः

तन्त्रचूड़ामणौ देवि चिन्तापरेणास्य विस्मृतं परमं कुलम् ।
सबीजं दोषरहितं कथयस्व ममाग्रतः ॥
वेदविद्ये दुं दुरन्ते सानन्तो गणनायकः ।
रेफस्य पूर्वं च सत्रक् नमोऽन्तो बीजपूर्वकः ॥
वाग्बीजं सृष्टिबीजं वा कामबीजं महेश्वर ।
योजनीयं न सा देवी योजनीया तु भोगदा ॥

वेदविद्ये तारद्वयम् । अनन्त आकारः । गणनायको गकारः । रेफपूर्वो यकारः । स्रक् ऐकारः । एवं ओँ ओँ दुं दुर्गायैनमः इतिमन्त्रः । यद्वा दुमिति बीजस्थाने वाग्बीजाद्यन्यतमं योजनीयमित्यर्थः । सृष्टिबीजं भुवनेशीबीजत्रयं समुदितं देयं तेन पक्षे दशाक्षरत्वमपीति कश्चित् ।

तथा या सा भोगप्रदा विद्या मातर्मे दीयतां कुलम् ।
स्थनभावसमायुक्ता वह्निशक्त्यन्तरस्थिता ॥
नारदोऽस्य मुनिः प्रोक्तो गायत्री छन्द ईरितम् ।
उग्रदुर्गेति विख्याता विद्या महिषमर्दिनी ॥
घोरां दूर्वादलश्यामां महाभीमां चतुर्भुजाम् ।
शङ्खचक्रधनुर्बाणान् धारयन्तीं महोन्मुखीम् ॥
सिंहासनगतां देवीं वित्तैश्वर्यप्रदायिनीम् ।
एवं ध्यात्वा जपेल्लक्षं तद्दशांशं हुनेत्ततः ।
यन्त्रे वसुदलेनुष्टुव्वीते मातृकयान्विते ॥
अष्टार्णदलसंयुक्ते मध्ये बीजं समालिखेत् ।
मध्ये गर्भं तारमध्ये पूजयेत्परमेश्वरीम् ॥

अनुष्टुप् जातवेदोमन्त्रः ।
क्रमोक्तैः मूलमन्त्रेण षडङ्गानि प्रविन्यसेत् ।
नमस्कारं नियुक्तेन पत्रेषु पूजयेत्ततः ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नलिनी पुनः ।
सुप्रभा विजया सर्वसिद्धिदानवशक्तयः ॥
स्वरैर्लघुक्लीवहीनैर्बीजैः सिंहासनं ततः ।
संपूज्य देवीमावाह्य तत्र पूजां समाचरेत् ॥

प्रथमावृत्तिवर्गाद्यै-र्द्वितीया शक्तिभिः पुनः ।
अस्त्रावृत्तिस्तृतीया स्याल्लोकपालैश्चतुर्थिका ॥
परावृत्तिस्तदस्त्राणि संपूर्णः कथितस्तव ।
जया च विजया कीर्त्तिः प्रीतिः पश्चात् प्रभा पुनः ।
श्रद्धा मेधा धृतिः प्रोक्ताः स्वनामाद्यक्षरान्विताः ॥
शङ्खचक्र गदाखड्गपाशाङ्कुशवरान् पुनः ।
इन्द्राद्या लोकपाला वै वज्राद्यायुधदैवतम् ॥
सर्वं रहस्यं कथितं तव स्नेहान्महेश्वर ।
न देया परमा विद्या सर्वत्रविजयप्रदा ॥
वागीशत्वप्रदा देवी महामोक्षप्रदायिनी ।
अष्टसिद्धिप्रदा देवी किमन्यद् बहुजल्पितैः ॥
यामासाद्य हरिः साक्षान्नागरूपधरः प्रभुः ।
यस्मै कस्मै न दातव्या न दातव्या कथं च न ॥
येनेदं दीयते विद्या मदुच्चाटनकारिणी ।
वज्रेण शस्त्रघातेन तस्य जीवं हराम्यहम् ।
षट्शतानि च लक्षाणि मन्त्रा विद्या कुलार्णवे ।
कथितास्तत्र मे नास्ति शङ्का देव महेश्वर ।
काली विद्या स्वप्नमाला षोडशीषु पुनः पुनः ।
शङ्का मे जायते नित्यं यतः सुप्तापि जीविता ॥

इति तन्त्रकौमुद्यां उग्रदुर्गा-पटलपरिच्छेदः ॥ ८ ॥

## अथ धूमावतीपटलः

फेत्कारिणीतन्त्रे　धूमावतीप्रयोगोऽयमधुना लिख्यते मया ।
दान्तावर्घीशविन्द्वन्तौ बीजे धूमावति द्विठम् ॥
धूमावतीमनुः प्रोक्तः शत्रुनिग्रहकारकः ।
षडङ्गं जातिसंयुक्तं कल्पयेत्तेन मन्त्रवित् ॥
पिप्पलादो मुनिश्छन्दो निवृद्देषा तु देवता ।
विवर्णा चञ्चला दुष्टा दीर्घा च मलिनाम्बरा ॥
विमुक्तकुन्तला रुक्षा विधवा विरलद्विजा ।
काकध्वजरथारूढा विलम्बितपयोधरा ॥
सूर्पहस्तातिरूक्षाक्षाधृतहस्ता वरान्विता ।
प्रवृद्धलोमा तु भृशं कुटिला कुटिलेक्षणा ॥
क्षुत्पिपासार्दिता नित्यं भयदा कलहास्पदा ।
एवं विधां समाध्यायेत्ततः कर्म समाचरेत् ॥
तच्चतुर्थेन वर्णेन षष्ठस्वरयुतेन च ।
षड्दीर्घजातियुक्तेन कुर्यादङ्गानि मन्त्रवित् ॥
जपेत् कृष्णचतुर्दश्यां पुरश्चरणसिद्धये ।
उपवासरतो मन्त्री शून्यागारे दिवानिशम् ॥
श्मशाने विपिने वापि जपेल्लक्षं तु वाग्यतः ।
सोष्णीष आर्द्रवासाश्च पुरश्चरणकर्मणि ॥

विधवा विवस्त्रा । विरलद्विजा विरलदन्तेत्यर्थः । तच्चतुर्थेन धकारेण । जातिर्नमः स्वाहेत्यादिफडन्ताः ।

स्वाख्योपर्यस्त्रमालिख्य तस्मिंस्थाप्य शिवं जपेत् ।
अवष्टभ्य शिवं शत्रुनाम्नाथ प्रजपेन्मनून् ॥
सहस्रादूर्ध्वतः शत्रुर्ज्वरेण परिगृह्यते ।
पञ्चगव्येन शान्तिः स्याज्ज्वरस्य पयसापि वा ॥
मन्त्राद्यक्षरमालिख्य शत्रुनाम ततः परम् ।
द्वितीयार्णं मनोः शत्रोर्नामैवं मनुमालिखेत् ॥
वनेऽयुतजपाच्छत्रोर्निश्चितं मरणं भवेत् ।
कृत्वा मन्त्रै रिपोराख्यामरण्ये यामिनीद्वयं ॥

उन्मादो जायते शत्रोर्मनोरयुतजापतः ।
दग्ध्वा काकं श्मशानाग्नौ तद्भस्मादाय मन्त्रितम् ॥
विरोधिनाम्नाष्टाशासु सद्य उच्चाटनं रिपोः ।
श्मशानभस्मना कृत्वा शिवं तस्योपरिन्यसेत् ॥
विरोधिनामसंरुद्धं कृष्णपक्षे समुच्चरेत् ।
महिषीक्षीरधूपं च यद्यच्छत्रु विपत्करम् ॥
महिषीरूपेणागत्य स्वप्ने शत्रून्निपातयेत् ।
प्रह्वः करतलेनासां तद्द्वयोर्ध्वं रिपोर्न्यसेत् ॥
जलस्थःप्रजपेन्मन्त्री हूँकारं नाशयेदरीन् ।

समुच्चरेत् आरभेत । प्रह्वः अवनतः । तद्द्वयोर्ध्वं रिपोर्नासाद्वयोपरीत्यर्थः ।

दद्याद्धूपं साध्यनाम्ना सद्यो विद्वेषयेदरीन् ।
श्मशानभस्मना कृत्वा लिङ्गपुष्पादिनार्चयेत् ॥
भगवन्निति संभाष्य मनसा कर्म चिन्तयन् ।
निम्बकाकच्छदानेकीकृत्य चाष्टशतं हुनेत् ॥
दद्याद्धूपं साध्यनाम्ना सद्यो विद्वेषयेदरीन् ।
चिताकाष्ठानले क्षीरहोमाच्छान्तिः प्रजायते ॥
रजोधूपप्रदानेन गृध्रधूपेन कालिका ।
मारयत्यरिमागत्य शान्तिर्निर्माल्यधूपतः ॥

रजः आर्तवम् पांशुरिति केचित् ।

वराहबालधूपेन हन्याच्छूकररूपिणी ।
अश्वत्थपत्रहोमेन शान्तिर्भवति नान्यथा ॥
शान्तिः सर्वाभिचारस्य पञ्चगव्येन जायते ।
क्षीरेण वापि देवेशि मधुरत्रितयेन वा ॥
काष्ठे क्षीरतरोर्विदर्भ्य विलिखेन्मन्त्रेण नामाक्षरं
जप्त्वालिख्य पदद्वये तु निखनेदुच्चाटनं विद्विषाम् ।
तत्पादद्वयधूलिकीर्णहविषा दद्याद् द्विजेभ्यो बलिं
तज्जप्तं चितिभस्म कीर्णितमरेर्गेहे च तद्वद् भवेत् ॥

द्विजः काकः । तद्वत् श्मशानवत् ।

वायव्ये ............................................

............................................

चूर्णं तस्य तु पल्लवे विनिहितं जप्तं सहस्राधिकं
क्रान्तं शत्रुगृहेषु तच्छिरसि वा तेषां कुतोबाटनम् ॥
ज्येष्ठारामे श्मशाने वा निर्माल्ये पादगोचरे ।
गर्दभावासभूमौ वा श्मशाने वा चतुः पथे ॥
ऊषरे मेहनाद्भूमौ पुष्पितावासमेहयोः ।
आनीय शर्करां मन्त्री दिग्वासा दक्षिणामुखः
श्मशानलोष्टे निःक्षिप्य तत्राग्नौ ... ...
चूर्णं तत्तु जपेल्लक्षं निःक्षिपेत्तत्र वेश्मनि ।
सेनामध्ये च सर्वेषां पश्चादुच्चाटनं भवेत् ॥
गर्ते पिपीलिकानां च पदधूलीयुतान् कणान् ।
सघृतान् सप्तरात्रं तु जुहुयान्मन्त्रविन्निशि ।
भ्रमते काकवत् सर्वां महीं तां मरणादिषु ॥
कृत्वा प्रतिकृतिं शत्रोर्जन्मवृक्षेण मन्त्रवित् ।
कृत्वा प्रतिष्ठां प्राणस्य विद्धां मर्मसु कण्टकैः ।
आयासैर्मर्मण्यावर्त्य वक्ष्यमाणैः प्रवेशयेत् ।
पूर्वोक्तशर्कराभिस्तु जप्त्वा नित्यं प्रतापयेत् ॥
सप्तरात्रेण तस्यापि भवत्युच्चाटनं ध्रुवम् ।

जन्मवृक्षो जन्मनक्षत्रवृक्षः ।

मुखे शल्यद्वये लेख्यौ सारमेयवराहयोः ।
मन्त्रेण गर्भितौ साध्यौ तौ शरावद्वयाक्षिषु ।
धुत्थूररससंयुक्तचिताङ्गारेण मन्त्रिणा ।
व्यत्यस्य वृषणे बद्ध्वा केशपाशेन तं जपेत् ॥
श्मशाने शत्रुमार्गे वा तद्गृहे निखनेन्निशि ।
विद्वेषणं भवेत् सद्यो गौरीशङ्करयोरिव ॥
अश्वत्थत्वचि मन्त्रार्णैः दर्भितं साध्यमालिखेत् ।
शल्यं विषतरोस्तद्वत् जप्त्वा तद्धृदये न्यसेत् ॥
पूर्वोक्तकण्टकैर्विद्धां जपेत् स्पृष्ट्वा शतं शतम् ।
विद्विष्टौ भवतस्तौ तु नाम्नामपि च तत्क्षणात् ।

वाय्वर्णानभितो विलिख्य विलिखेत् कोणेषु मन्त्राक्षरैः
संरुद्धन् परितः प्रभञ्जनगृहं मध्ये च साध्यं पृथक्

अङ्गारैः कनकोद्भवैरपि पदैर्मन्त्रं जपन् ताडयेत्
यायादेष वशे कुजार्कदिवसे भूलोकविद्वेष्यताम् ॥
आपाद्य पूर्वां मूर्त्तिं च शत्रोरालिख्य शोषयेत् ।
व्योषाग्निमण्डलोन्मत्तहिङ्गुसिद्धार्थसूरणैः ॥
पिण्डैर्लवणसंभूतैरुन्मत्तद्रवसंयुतैः ।
पेषयित्वा तेन सम्यक् लिखेन्मन्त्रं मनुं जपेत् ।
बलिमन्त्रे खनेत् कीलमुक्तरूपं तथोपरि ।
वह्निं प्रज्वाल्य तत्काले द्रव्ययुक्तं हुनेज्जपेत् ॥
निःक्षिप्य प्रतिमां तत्र हुनेन्नित्यं जपेन्मनुम् ।
सप्तरात्रं तत्कुण्डे शून्यागारे च वा हुनेत् ॥
त्रिकोणशूलदीप्ताग्रं मेखलापुत्तलान्वितम् ।
तत्रापि निखनेत् कीलं वह्निं प्रज्वाल्य पूर्ववत् ॥
ततः प्रतिकृतिं मन्त्री वह्नेरुपरि लम्बयेत् ।
उक्तद्रव्येण तां लिप्त्वा ऊर्ध्वपादामधोमुखीम् ॥
रक्तद्रवे समाराध्य प्रज्वाल्य विषवृक्षजैः ।
इन्धनैः प्रतिमां तां च समित्पुष्पयुतां हुनेत् ॥
आननादिभिरामृत्योर्वशमेति न संशयः ।

व्योषं त्रिकटु । विषं महौषधं भल्लातकं वा ।

इति धूमावतीपटलपरिच्छेदः ॥ ६ ॥

अथ भद्रकालीमन्त्रः

तथा फेत्कारिणीतन्त्रे—प्रसादबीजमुद्धृत्य कालीतिपदं वदेत् ।
महाकालिपदं चोक्त्वा किलियुग्ममतः परम् ॥
फडन्तोऽग्निप्रियान्तोयं भद्रकालीमहामनुः ।
तेन ह्रौँ कालि महाकालि किलि किलि फट् स्वाहेति मन्त्रः ।
तथा आराध्य प्रजपेन्मन्त्रं नित्यमष्टोत्तरं शतम् ॥
विधुमाला विधातव्या अष्टाधिकशतेन च ।
ध्यातव्येयं महाकाली भद्रकाली भयापहा ॥
क्षुत्क्षामा कोटराक्षी मसिमलिनमुखी रक्तकेशी रुदन्ती
नाहं तृप्ता वदन्ती जगदखिलमिदं ग्रासमेकं करोमि ॥
हस्ताभ्यां धारयन्ती ज्वलदनलशिखासन्निभं पाशमुग्रं
दन्तैर्जम्बूफलाभैः परिहरतु भयं पातु मां भद्रकाली ॥
प्रयोगमत्र कर्त्तव्यं सामान्यपटलोदितम् ।
अशेषकालिकातन्त्रकथितं सर्वसिद्धिषु ॥
इयं देवी महादेवी शत्रुनिग्रहकारिणी ।
यथेष्टचिन्तया देवी सर्वकामार्थसिद्धिदा ॥

अत्र पुरश्चरणादि सर्वं दक्षिणकालीमन्त्रोक्तं तन्त्रे तत्प्रकरण एवाभिहितत्वात् । अष्टौ सहस्राणि वा । नास्त्येव तदिति केचित् ।

इति भद्रकालीमन्त्रः

तथा फेत्कारिणीतन्त्रे अथातः संप्रवक्ष्यामि महाकाली-महामनुम् ।
प्रलयाग्नी सरुधिरावूर्ध्वकेशी समन्वितौ ॥
नादविन्दुसमायुक्तावेवं क्रोधद्वयम् पुनः ।
पशुं गृहाणपदतो वर्मास्त्रानलवल्लभा ॥
चतुर्दशाक्षरी प्रोक्ता महाकाली ध्रुवादिका ।

प्रलयाग्नि फकारः "इन्दिरान्तश्च कालाग्नि" रिति फेत्कारिणीतन्त्रात् । इन्दिरा पकारः "रमोमाक्लेदिनी"ति स्वरसात् । रुधिरं रेफः । ऊर्ध्वकेशी

एकारः। क्रोधः क्रों। पशुमित्यत्र इदमिति क्वचित्पाठः। ध्रुव ओङ्कारः। तेन ओँ फ्रें फ्रें क्रों क्रों पशुं गृहाण हूं फट् स्वाहा इति मन्त्रः।

न्यासशुद्धी न सन्ध्यादिर्नात्र कार्या विचारणा ॥
कृष्णतोयेन संपूर्णे कृष्णकुम्भेऽथ कालिकाम्।
दिक्षु ब्राह्म्यादिदूतीभिर्युक्तां संपूज्य भक्तिमान् ॥
पञ्चवक्त्रां महारौद्रीं प्रतिरक्तत्रिलोचनाम्।
शक्तिशूलधनुर्बाणखेटखड्गवराभयान् ॥
दधानदशभुजैर्देवीं बिभ्राणां भूरिभूषणाम्।
ध्यात्वैवं साधकः साध्यं साधयेन्मनसेप्सितम् ॥
पूर्वादीशानपर्यन्तं दूत्यः कुम्भा ...... .. स्थिताः।
कर्णिकायां ततो देवी महाकाली भयापहा ॥
नामोच्चारणसंबद्धो वह्नौ प्रज्वलिते पुरे।
जुहुयाद् वैरिणा शुद्धो देवीमन्त्रं जपन् तथा ॥
समिधः पिचुमर्दस्य विभीत्रततिकाष्ठिका।
हवींषि वाजिका कञ्चुकण्टज ......... रम्बिका ॥
गृहधूमश्मशानास्थिविभीताङ्गारहोमतः ॥
सप्ताहाद् वैरिणं हन्ति कालिका मन्त्रयोगतः।
उच्चाटमपराह्णे च संध्यायां मारणं तथा ॥
दक्षिणस्यां दिशि स्थित्वा ग्रामादेर्दक्षिणामुखः।

पिचुमर्दो निम्बः। विभीत्रततिरमृतालता। गृहधूमः झोल इतिख्यातः विभीतः वहेड़ि इतिख्यातः। तत्रापि पुरश्चरणादि दक्षिणकालीपटलोक्तमेव तन्त्रे तत्प्रकरण एवाभिधानात्। अष्टौ सहस्राणि वा। एषु मन्त्रेषु नास्त्येव तदिति निबन्धारः।

अथस्तुतिः।

प्रातर्या स्यात् कुमारी कुसुदकलिकया जापमालां जपन्ती
मध्याह्ने प्रौढ़रूपा प्रकशितवदना चारुनेत्रा विशाला ॥
संध्यायां वृद्धरूपा गलितकुचयुगा मुण्डमालां वहन्ती
सा देवी देवदेवी त्रिभुवनजननी चण्डिका पातु युष्मान् ॥१॥

बद्ध्वा खट्वाङ्गकोटौ कपिलमुरुजटामण्डलं पद्मयोनेः
कृत्वा दैत्योत्तमाङ्गैः स्रजमुरुशिरसः शेखरं तार्क्ष्यपक्षैः ।
पूर्णं रक्तैः सुराणां यममहिषमहाशृङ्गमादाय पाणौ
पायाद् वो वन्द्यमानः प्रलयमुदितया भैरवः कालरात्र्या ॥२॥
चर्वन्ती त्वस्थिखण्डं प्रकटकटकटा - शब्दसंघातरौद्रं
कुर्वाणा प्रेतमध्ये ककहकहकहाहास्यमुग्रं कृशाङ्गी ।
नित्यं नृत्ये प्रसक्ता डमरुडिमिडिमाडिण्डिमा स्फारयन्ती
पायान्नश्चण्डिकेयं भभमभमभमाभम्पमाना भ्रमन्ती ॥ ३ ॥
टंटंटंटंटटाट्ट प्रकटरटसटद्घोरघंटां वहन्ती
स्फेंस्फेंस्फेंकारकारा टकटकितहसाद्न्तसंघट्टभीमा ।
लोलं मुण्डाग्रमालाननहनहनहालोलनोनोग्रवाचं
चर्वन्ती चण्डमुण्डं मटमटितिचिरं चर्वयन्ती पुनातु ॥ ४ ॥
वामे कर्णे मृगाङ्कप्रणयपरिणतं दक्षिणे सूर्यबिम्बं
कण्ठे नक्षत्रहारं वरविकटजटाजूटके केतुमाली ।
स्कन्धे कृत्वोरगेन्द्रं ध्वजनिकरयुतं ब्रह्मकंकालभारं
संहारे धारयन्ती मम हरतु भयं भद्रदा भद्रकाली ॥ ५ ॥
तैलाभ्यक्तैकवेणी त्रपुमयविलसत्कर्णिकाक्रान्तकर्णा
लौहेनैकेन कृत्वा चरणनिगडनेनात्मनः पादशोभाम् ।
दिग्वासा रासभेन भ्रमति जगदिदं या जवाकर्णपूरा-
वर्द्धं न्यूर्धप्रवृद्धध्वजविजितभुजा सासि देवि त्वमेव ॥ ६ ॥
संग्रामे हेतिकृत्तैः सरुधिरदशनैः सद्भटानां शिरोभि--
र्मालामाराध्य मूर्ध्नि ध्वजविजितभुजा त्वं श्मशाने प्रविष्टा ।
दृष्टा भूतैः प्रभूतैः पृथुजघनघनाबद्धनागेन्द्रकाञ्ची
शूलासिव्यग्रहस्ता मधुरुधिरमदा ताम्रनेत्रा निशायाम् ॥ ७ ॥
दंष्ट्रारौद्रे मुखेऽस्मिन् तव विशति जगद् देवि सर्वं क्षणार्धात्
संसारस्यान्तकाले नवरुधिररसा संप्लवे धूमधूम्रे ।
काली कापालिनी त्वं शवशयनरता योगिनीयोगमुद्रा
रक्ता ऋज्वी कुमारी मरणभयहरा त्वं शिवा चण्डघंटा ॥ ८ ॥

इति तन्त्रकौमुद्यां कालिकापटलपरिच्छेदः ॥ १० ॥

अथ कुक्कुटमन्त्राः । केत्कारिणीतन्त्रे

नान्तं षष्ठस्वरपरिगतं विन्दुमत् कुक्कुटाख्यां
वीप्स्यैतद्वा पुनरपि पदं वीप्सितं पूर्वकं तत् ।
नान्तं भूतस्वरपरिगतं वेति मन्त्रोऽयमुक्तः
स्यादायुः श्रीविभवकविताभाग्यसंपत्तिहेतुः ॥
प्रोक्तः पञ्चदशार्णोऽयं मन्त्रः कुक्कुटदैवतः ।

नान्तं पकारः । षष्ठस्वर ऊकारः । तेन पूं । कुक्कुटाख्यां कोलि इति पदम् । तद्वीप्स्य द्विरुक्त्वेत्यर्थः । वा इति स्वरूपम् । पूर्वकं पूंकोलि इति द्विरुक्तम् । नान्त पकारः । भूतस्वरः ह्रस्वउकारः । वा इति स्वरूपम । चरमपकारे विन्दुर्नास्त्यनभिधानात् ।

तेन पूं कोलि पूं कोलि वा पूं कोलि पूं कोलि पुवा इति मन्त्रः ।

तथा अनन्तं विन्दुसंयुक्तं पूंकोलि द्वितयं पुनः ।
वा-शक्ती चाथ पूंकोलि युगलं विमलं ततः ।
पुकारं वरुणस्तद्वद्वाकाराद्यं समुद्धरेत् ।
क्रोमं समुद्धरेन्मन्त्रं कुक्कुटस्य मनोरथम् ।

अनन्त आकारः । वेति स्वरूपम् । शक्तिः ह्रीँ । क्रोमं क्रोङ्कारः । तेन आं पूंकोलि पूंकोलि वा ह्रीँ पूंकोलि पु वा क्रों इति मन्त्रः ।

तथा अमुष्य पूर्वमेवार्थमेकलिङ्गे शिवालये ।
देवस्य महतीं पूजां कर्त्तुमासीदुदङ्मुखः ॥
पर्वताग्रे नदीतीरे वृषशून्ये शिवालये ।
पश्चिमद्वारसंयुक्ते कुर्यान्मन्त्रपुरस्क्रियाम् ।
गुरुं प्रणम्य मनसा आसनं परिकल्पयेत् ।
करशुद्धिं देहशुद्धिं तालत्रयमथाचरेत् ।
दिग्बन्धं कारयेत्पश्चात् विना मन्त्रेण तत्परम् ॥
प्राणायामत्रयं पश्चात् प्रणवेन तु कारयेत् ।
मातृकां विन्यसेत्पूर्वं पश्चान्न्यासं समाचरेत् ॥
पक्षिमन्त्रस्य प्रथमं पदं हृदि विनिर्दिशेत् ।
द्वितीयं पदमुच्चार्य शिरसैव तु कारयेत् ॥

वा शिखायां च विन्यस्य भवेद् वमतृतीयकम् ।
तुरीयं पदमुच्चार्य नेत्रे तु विनियोजयेत् ॥
पुवाभ्यां चास्त्रसंयुक्तमङ्गषट्कं विधीयते ।

प्रथमं पूंकोलि । द्वितीयं पूंकोलि । वेति स्वरूपम् । शिखा तृतीयं पूंकोलि । तुरीयपदं पूंकोलि । पूवा इति वर्णाभ्यामस्त्रमित्यर्थः । तेन पूंकोलि इत्यादयोऽङ्गमन्त्राः ।

तथा नमः स्वाहावषट्वौषट् तथा हूँ फट् क्रमान्न्यसेत् ।
पूमादिवान्तवर्णांश्च क्रमशो विन्यसेत्सुधीः ॥
ललाटे विन्दुमध्ये च चक्षुः श्रवणयोरपि ।
नासाविवरयोश्चैव आस्ये कण्ठे तथा हृदि ॥
नाभिदेशे तथा लिङ्गे गुह्यमध्ये च विन्यसेत् ।
समस्तेन च मन्त्रेण मूर्ध्नादिव्यापकं न्यसेत् ॥
एवं विन्यस्तदेहस्तु ध्यायेत् पक्षिशिवात्मकम् ।

पूमादीति आद्याक्षरमारभ्यान्तं यावदित्यर्थः । चक्षुरादौ द्विद्विवर्णन्यासः।

अथ ध्यानम् । वक्त्रं यस्य षडाननो गिरिसुता यस्योदरं कालहा
पृष्ठं यस्य च लास्यकुञ्जरमुखौ पादौ च सव्येतरौ ।
पक्षौ यस्य सुरद्रुमौ मणिमयीं यच्छृङ्खलां वन्धुरा-
माकर्षं वलिनः करोतु स तु नः सर्वानसौ कुक्कुटः ॥
गौरी हस्तारविन्दे त्वनिशमधिवसन् षण्मुखारूढकायः
सर्वालङ्कारदीप्तप्रविततचरणः पक्षविक्षेपदक्षः ।
होमाभो रत्नचञ्चुर्मणिमयविलसद्वृत्तकण्ठस्वरूपः
पायाद्रक्तताम्रचूड़ः सकलजननुतः सर्वसिद्धिप्रदाता ॥

यद्वा सर्वप्रियः सागरमध्यरत्नद्वीपस्य तालाग्रनिवासिकुक्कुटः ।
विद्याभिरामोऽखिलभूषणाढ्यो वशीकरोत्याशु सुसेवितो नरैः ॥
मनसा देवमभ्यर्च्य षोडशैरुपचारकैः ।
विज्ञाप्य बाह्ययोगेन देवं संतोषयेत्ततः ॥
ध्यात्वा कुक्कुटदेवं तं जपेद् भानुसहस्रकम् ।
तावच्छतं तर्पयित्वा पुरश्चर्या कृता भवेत् ॥

रक्षाकरणविद्वेषस्तम्भनोच्चाटनादिकम् ।
कर्माणि कुर्यादिष्टानि मन्त्रेणानेन मन्त्रवित् ॥
आलिख्य मन्त्रेण विदर्भितं यत् साध्याक्षरं तालवनस्य पत्रे ।
प्राणान् प्रतिष्ठाप्य शतं तथाष्टौ जप्त्वा धृतं चेन्मरणं प्रयाति ॥
ताम्बूलं यद्यष्टोत्तरसहस्रं जप्त्वा दत्तं भुक्तौ यस्याः ।
वश्या नित्यं पत्युपदेशाद् दास्यत्यर्थान् प्रार्थितभोगान् ॥
अष्टोत्तरशतं जप्तं हयमारिप्रसूनकम् ।
सप्तरात्रं क्षिपेद्यस्या मूर्ध्नि सास्य वशा भवेत् ॥
भूर्जे साध्यविदर्भितं मनुमिमं संलिख्य कौलालिकी
मृत्स्ना कल्पितपुत्तली हृदि कृतं प्राणान् प्रतिष्ठाप्य च
जप्त्वा सप्तदिनं त्रिसंध्यमथ तामालोड्य तुत्थारसे
लिम्पेद् वश्यमवश्यमेव भविता चान्येषु जन्मस्वपि ॥

कौलालिकी कुलालसम्बद्धिनी । मृत्स्ना प्रशस्तमृत्तिका । तुत्था नीली ।

अष्टोत्तरशतं जप्तं प्रसूनकान्तं कृताञ्जलिः शिरसा ।
धारयति सकललोकप्रियो भवेन्नियतमेव मन्त्रिवरः ॥

कृताञ्जलिः हथाजोड़िया इति ख्यातः ।

तद्वच्छतमखवल्ली लक्ष्मीपुष्पाणि धारयेदेवम् ।
समदाभद्रकविष्णुप्रियाश्च मुसलीं च मन्त्रजापेन ॥
मधुकं दूर्वां देवीं सहां चैव यथाधृतं तथैकैकम् ।
सबलोन्मूलनाय समर्थः का कथा मनुष्येषु ॥
दशनरमनुरुद्रमनुसुराक्षिविश्वत्रिकैकभागेन ।
अञ्जल्यादिक्रमशः संयोज्यं दशकमनिनवश्यकरम् ॥
प्रत्येकं शतमष्टौ जप्त्वा संयोज्य दशकमपि पिष्टवा ।
गुटिकीकृत्य सहस्रं जप्त्वा गुटिकया कृतया च तया ॥
तिलकं कृत्वा नारीनरलोकरञ्जनानुदिनम् ।
कपिलाधृतदीपितया तद्वत्कर्पूरगर्भया वर्त्या ॥
विहितं कज्जलमिव तत् कर्पूरयुतं सहस्रपरिजप्तम् ।
दिनमनु नयनगतं कुर्यादखिलंलोकवश्यमवश्यम् ॥

आत्मानं कुक्कुटं ध्यात्वा स्वकीयगतशक्कया ।
साध्यं शृङ्खलमाकण्ठे बद्धवाकर्ष-मनुं जपेत् ॥
सहस्रमर्धरात्रे तु रात्रित्रयमतन्द्रितः ।
तुरीयकुक्कुटस्यान्ते साध्यानाम च कर्म च ॥
जपेत् संयोज्य तद्वश्याकांक्ष्येव सकलेष्वपि ।
यामारभ्य जपेद् देवं योषितं सा मदालसा ॥
रचिताञ्जलिरायाति सुखमस्यालयं प्रति ।
साध्याख्यानविदर्भितं मनुमिमं ताम्बूलपत्रोदरे
लेखिन्या प्रविलिख्य कर्मसहितं प्राणान् प्रतिष्ठाप्य च ।
जप्त्वाष्टोत्तरमर्कदुग्धजनितालेपे त्रिरावर्त्तितं
तप्तं दीपशिखाग्निना स्वयममुं धन्यो वशी चाश्रयेत् ॥
भूर्जे मन्त्रममुं विलिख्य सकलं साध्याह्वयाढ्यं पुटं
प्राप्तप्राणमथाष्टकोत्तरशतं जप्तं त्रिवारं पुनः ।
क्षौद्रक्षीरगुडेष्विदं पृथगपि प्रक्षिप्य मन्त्रं जप-
न्नाकर्षत्यचिरादभीष्टवनितां नागादिलोकादपि ॥
आलिख्यैव शरावके मनुमिमं तन्नामकर्मान्वितं
रात्रौ रोचनया प्रवीतपवनं जप्त्वा च साष्टं शतम् ।
तस्या नाभिमुखाङ्गजन्मभवनं संतापयन् खादिरे
वह्नौ सा तदनङ्गवेगविवशा योषा समायाति च ॥
नाभिमात्रे जले स्थित्वा साध्यनामविदर्भितम् ।
जपेत् सहस्रं त्रिदिनमिष्टानाकर्षयेद् ध्रुवम् ॥
कपिरोमहिङ्गुदार्वीखङ्गचर्माणि चूर्णयेत् ।
तच्चूर्णंमन्त्रजप्तं चेन्नामकर्मविदर्भितम् ॥
त्रिसहस्रं पुनस्तेन स्निग्धयोरन्तरान्तरा ।
धूपैरतीवविद्विष्टौ स्निग्धावपि विभिद्यतः ॥
तालपत्रे लिखेन्मन्त्रं नामकर्मविदर्भितम् ।
कृतप्राणप्रतिष्ठं च प्रजप्तं त्रिसहस्रकम् ॥
हुनेदन्योन्यविद्विष्टौ भवेतामतिरोगिणौ ।

दार्वी दारुहरिद्रा ।

आलिख्य वै शरावे निशया साध्याक्षरैः पुटितम् ।
मन्त्रं स्थापितपवनं सहस्रजप्तं चतुः पथे निखनेत् ॥

स्तम्भनमेवमवश्यं जगतां नैवात्र संदेहः ।
कृत्वा प्रतिकृतिमथवा श्मशानकाङ्गारके शशावलवसनाम् ।
सम्यगधिष्ठितपवनां हृद्गतनाम्नीं समन्त्रगतललाटाम् ॥
वसनाधिष्ठितपवनां सहस्रजप्तं तदुल्कया रसनाम् ।
दग्ध्वा स्मृत्वा विलिखेत् श्मशानदेशे सपदि वाक्स्तम्भः ॥
आलिख्य चेष्टकाया युगले मन्त्रं स्वनामसंपुटितम् ।
निशाया निशीथकाले सहस्रजप्तं प्रतिष्ठितप्राणम् ॥
बन्धनमतितीक्ष्णतरं स्तम्भनमतितीक्ष्णमम्बुनिःक्षिप्तम् ।
लिखितमन्त्रचितामयकीलकं सहितकर्म समाहितमारुतम् ॥
कृतजपं त्रिसहस्रकसंख्यया पथि खनेदथ याननिवारणम् ।
विहितनिम्बतरौ रिपुनामयुग् मनुमिमं निशाया कृतनामकम् ॥
विविध मंत्रजपादिसुसाधितं पथि खनेत् परसैन्यनिरोधकम् ॥
अङ्गारकं पितृभुवो रिपुनैधनर्क्षे जप्त्वा विनिर्मितमिदं रिपुनाम तस्मिन्
मन्त्रोपमं पुटितमन्त्रसहस्रजप्तं तद्वैरिवेश्मनि विनाशकरं विकीर्णम् ॥
कृत्वा श्मशानस्य चतुष्टयाङ्गनं जप्त्वासकर्माह्वयसंपुटं मनुम् ।
सहस्रजप्तं निखनेद्द्विषां गृहे द्वारे तदुच्चाटनमाशु जायते ॥

अङ्गारमर्धदग्धकाष्ठम् ।

श्मशानजोल्का रिपुनामकर्मसंपृक्तमन्त्रं च सहस्रजप्तम् ।
द्वारे क्षिपेदुल्मुकमस्य शत्रोरुच्चाटयेत सप्तदिनान्तराले ॥
कीलं चिताकाष्ठमयं च नामकर्मान्वितं साष्टसहस्रजप्तम् ।
मन्त्रेण जप्तं निखनेदरातिगेहे तदुच्चाटयति क्षणेन ॥
उन्मत्तरसा लोडितचितामसीकाकपक्षेण ।
कारस्करफलकान्ते मनुं लिखेत् कर्मनामसंपुटितम् ।
प्रस्थाप्य प्राणमस्मिन् द्विषतोऽष्टविषानुलिप्तसमिद्धम ।
तत्रैव सहस्रजप्तं श्मशानदेशे चतुः पथे वापि ।
निखनेदरिभवने वा तन्मस्तके वा रिपोश्च निःक्षिप्तम् ।
देशान्तरमथवासौ यास्यति लोकान्तरं सदा रोगी ॥
मन्त्रं साध्यस्य नाम प्रपुटितमथ चालिख्य ताम्रादिपात्रे
पुत्तल्यंतर्निधायार्पितपवनमथो जप्तमष्टौ सहस्रम् ।

वह्नावुन्मत्तदीप्ते पितृवनजनिते तीक्ष्णतैलेन लिप्तं
हुत्वा छित्वा निशार्धे त्रिदिनपरिमितं मोहयेन्मारयेद्वा ॥

उन्मत्तं धुत्थूरम् । पितृवनं श्मशानम् । तीक्ष्णं भल्लातकम् ।

साध्यर्क्षवृक्षकृतरूपमधिष्ठितैवं जप्तं सहस्रमपि कीलयति श्मशाने ।
अस्त्रेण दारयति साधितमेतदङ्गं यद्यद्रिपोरपि विनश्यति तत्तदङ्गम् ॥

साध्यर्क्षवृक्षः साध्यजन्मनक्षत्रवृक्षः । अधिष्ठितैवं प्रतिष्ठितप्राणम् ।

वैरिप्रस्थरमृत्तिकापदरजः-संयुक्तचक्री-मृदा
कृत्वा पुत्तलिकां च नाम हृदये शीर्षे पदे वा लिखेत् ।
अङ्गारैः पितृभूगतैर्मनुमिमं तन्नामकर्मान्वितं
तस्य न्यस्य हृदीदमात्तपवनं जप्यात्सहस्रद्वयम् ॥
संछिद्यैवमकुञ्चितेन शतधा शस्त्रेण तां पुत्तलीं
याम्याशाभिमुखेन पाणिदशनैर्दीप्तश्मशानानले ॥
तैलं तीक्ष्णतरं विषिच्य जुहुयान्नैधन्यऋक्षेऽथवा
मन्त्री प्रेतपतेः प्रयास्यति पुरं शत्रुस्तदीयो ध्रुवम् ॥

वैरीति वैरिणः । प्रस्थरः शिला । तन्मृत्तिका तत्पदरजश्चेत्यर्थः । चक्री कुलालः । नैधनं सप्तमम् ।

अङ्गारवारे कुलिकोदये रिपोरालिख्य पत्रे प्रतिमां प्रतिष्ठाम् ।
प्राणान् प्रतिष्ठाप्य विषानुलिप्तां श्मशानवह्नौ जुहुयाद् विनश्येत् ॥

कुलिकस्वरूपं "मन्वर्कदिग्वंवृतुवेदपक्षैरर्कान्मुहूर्त्तैः कुलिका भवन्ति" इति ज्योतिः शास्त्रोक्तम् ।

रिपोः प्रतिकृतिं कृत्वा गोमयेन च तद्धृदि ।
तालपत्रेसमालिख्य मनुमाख्याविदर्भितम् ॥
विन्यस्य तत्प्रतिकृते स्थाप्योपरि च राजतम् ।
मृण्मयं वा घटं सम्यग् गोमयेन च भावितम् ॥
तत्रापि निःक्षिपेत् पात्रं लिखिताख्यमनुं बुधः ।
वैरिप्राणान् प्रतिष्ठाप्य तस्मिन् गोमयवारिणि ॥

त्रिसंध्यं तज्जपेत्तस्मिन् छाया यावद् भविष्यति ।
दृष्ट्वा तां गोमयजले रिपुछायां समाहितः ॥
शस्त्रेण छेदयेदङ्गं यद्यद् दद्यादभीषणम् ।
तत्तद् विनश्यति रिपोः सप्ताहान्नात्र संशयः ॥
हृदयोदरकण्ठेषु विच्छिन्ने भविता मृतिः ।
शिरोरोगो भवेत्तस्य व्रणे शस्त्रेण मस्तके ॥
शुण्ठीचित्रकहिङ्गुं च मरीचारोहिपिप्पली ।
गृहधूमं हविस्कन्दं प्रोक्तमेतद् विषं बुधैः ॥

रोही रोइनी कटुकी ख्याता "कटुः कटुम्भराशोका रोहिणी" त्यमरः । वस्तुतो रोही वरुण इति ख्यातः । "रोही रोहितकः प्लीहशत्रु" रिति कोषात् । हविस्कन्दं शूरणः "सिद्धार्थैः शूरणै" रिति धूमावतीपटलेऽभिधानात् ।

अष्टोत्तरं मनुमिमंप्रजपेत्सहस्रं ध्यायेन्महेशमनु कुक्कुटरूपमेनम् ।
शस्यर्धिरस्य भवनं च मनोरथाद्यै रापूर्यते बहुविधैरपि वत्सरेण ॥
भूमौ काञ्चनमृत्तिका पदरजोराजीं किरन्तो मुदा
कूजन्तं चरणेन धान्यनिचयानाकीर्य चञ्च्वादिषु ॥
संचिन्त्योज्वलताम्रचूडमरुणं किंचित् समाकुञ्चित ।
श्रीवं यः प्रजपेदमनुष्य भवनं धान्यादिभिः पूर्यटे ॥
मनुना तण्डुलममुना सहस्रजप्तं तु कुक्कुटो योत्ति ।
सोसौ कुक्कुटमन्नान् स्वकीययुद्धेषु जेष्यति क्षिप्रम् ॥
दृष्ट्वा कमपि सहस्रं यो वै संचिन्त्य कुक्कुटं प्रजपेत् ।
जेष्यति सपदि रणे तान् सुभटैश्चरणायुधैः समायातः ॥
इति जपनिरतानां कुक्कुटाख्यानलक्षः
क्षपणकमुनिबाहक्षिप्रभूताविपक्षः ॥
दुरितनिवहपक्षक्षेपणे सर्वपक्षः
प्रणतस्वजनरक्षाविक्षतानां स्वपक्षः ॥
निखिलमतियुतानामर्थिनां कल्पवृक्षः ।
सुरवरनरनारीरञ्जनाकृष्टिदक्षः ॥

भैरवतन्त्रे— प्रणवं पूर्वमालिख्य मन्त्रोद्धारं समाचरेत् ।
बटुकायपदं चोक्त्वा आपदुद्धरणाय च ॥

ततः कुरुयुगं दद्याद् वटुकायपदं वदेत् ।
देवीं प्रणवमुच्चार्य मन्त्रोद्धारविधिः स्मृतः ॥
सर्वरोगप्रशमनं सर्वदुःखनिवारणम् ।
सर्वरक्षाकरं पुंसां सर्वापद्विनिवारकम् ॥

तथा मायान्ते तारमुच्चार्य नमो भगवतेपदम् ।
अघोरेभ्योऽथ घोरेभ्यो रुद्रेभ्यस्तु नमोऽस्तुते ॥
स्वाहान्तोऽयं महामन्त्रो महाभैरवसंज्ञकः ।
मोहस्तम्भनमारणं वधिरता कुष्ठाकृतिः कुब्जता
विद्वेषीकरणं वपुर्विकलता ग्रामाद्बहिर्दुःस्थिता ।
गेहोद्भञ्जनमारणादि भवति प्रायः परं वैरिणा-
मुड्डीशे हितकमणेहितकृते कि किं न साध्यं भवेत् ॥

उक्तं च उड्डीशं यो न जानाति स क्रुद्धः किं करिष्यति ।

लक्षत्रयं जपः । ततो विल्वपत्रादिना दशांशं हुनेत् ।

इति कुक्कुटादिपटलः ॥११॥

अथ परिमलमन्त्रः

अथातः संप्रवक्ष्यामि मन्त्रं परिमलात्मकम् ।
येन विज्ञातमात्रेण नासाध्यं भुवनत्रये ॥
रुद्रजाया महायोगिन्यतो गौरिपदं वदेत् ।
भुवनभयंकरीति वर्मास्त्रं[1] चोद्धरेन्मनुम् ॥

रुद्रजाया ह्रीँ । तेन "ह्रीँ महायोगिनि गौरि भुवनभयंकरि हुँ फट्" इति मन्त्रः ।

तथा षड्दीर्घयुक्तबीजेन मन्त्रार्धेनाक्षयोगिना ।
हृदयं च ततोऽर्थेन वर्मान्तेन शिरःक्रमात् ।
शिखाकवचनेत्रास्त्रमेवं न्यासक्रमन्ततः ।

एवमर्धार्धक्रमेण ।

तथा अङ्गिराश्च ऋषिर्देवी गायत्री छन्द ईरितम् ।
सिंहवक्त्रा च भूतानां भयंकरिण्यतः परम् ॥
महाकृत्या देवता चेत्युक्त्वा ध्यानमथाचरेत् ।
सिंहासनां हृष्टमुखीं लम्बमानपयोधराम् ॥
दंष्ट्राकरालवदनां त्रिनेत्रां सर्वतोज्ज्वलाम् ।
कृष्णकञ्चुकसंवीतां विधूमाग्निसमप्रभाम् ॥
त्रिशूलचक्रचकषखड्गाङ्ककरपङ्कजाम् ।
लेलिहानमहाजिह्वां विद्युत्प्रेक्षणभीषणाम् ॥
ध्यात्वा कृत्यां विधानेन पूजयेन्मन्त्रवित्तमः ।
ध्यात्वा कृत्यां समर्चेत रक्तपुष्पैस्तु वश्यके ॥
कृष्णां मारककृत्येषु मांसरक्तासवैस्तथा ।
कृत्यां च मदनां सर्वकन्यामुच्छादिनीं तथा ॥
भीषणां श्रीमतीं चैव प्रतिष्ठां च ततःपरम् ।
विद्यामभ्यर्चयेदष्टपत्रेषु क्रमतः सुधीः ॥
पूर्वे तु शाङ्करीनाम्नीं शुक्लवर्णां वराननाम् ।
द्विभुजां सौम्यवदनां पाशाङ्कुशधरां शिवाम् ॥
दक्षिणे भीषणां नाम ललज्जिह्वामधोमुखीम् ।
कृष्णवर्णां रक्तकेशीं रक्तमाल्यानुलेपनाम् ॥

---

[1] वर्मेति-"ह्रस्वोकाराढ्य चन्द्रानुस्वारयुक्तं हुँ इति" इति टिप्पणी "क" मातृकाया ।

चतुर्भुजां सिंहासनां ज्वलद्भुजकपालिनीम् ।
शूलखड्गकर्तृहस्तां सर्वाभरणभूषिताम् ॥
पश्चिमे वारुणीं नाम स्वर्णवर्णां हसन्मुखीम् ।
सुवर्णमालिकां शुभ्रदंष्ट्रामभयदां शिवाम् ॥
उत्तरे भीषिकां नाम चतुर्वर्णभयंकरीम् ।
पूजयित्वा जपेन्मन्त्रं नित्यमष्टोत्तरं शतम् ॥
अथास्य विनियोगस्तु कर्त्तव्यो मन्त्रिणा सदा ।
कालं विदित्वा प्रतिमां मधूच्छिष्टेन कारयेत् ।
द्वादशाङ्गुलिकां शत्रोर्नखलोमसमन्विताम् ।
हृदयं नामधेयं च फट्कारे सर्वमर्मके ॥
ततः प्राणान् प्रतिष्ठाप्य मरीचैर्लेपयेत्ततः ।
मृतब्राह्मणचाण्डालकेशाभ्यां पादयोः पृथक् ॥
रज्वाकाराक्षरमये तोरणे स्थाप्यधोमुखीम् ।
तस्याधो मेखलायुक्तं त्रिकोणं वह्निकुण्डकम् ॥
तत्र शावं विधायाग्निं परिस्तीर्य शवैस्तृणैः ।
विभीतकपरिध्या च कल्पयेद्यस्य मारणम् ॥
जुहुयान्निम्बतैलाक्तैः काकोलूककपक्षकैः ।
दारयैनं शोषयैनं मारयेत्यभिधाय च ॥
अष्टोत्तरशतेनैव चानया जुहुयाद् बुधः ।
होमान्ते विधिवत् कृत्यामाराध्याग्नेश्च सन्निधौ ॥
यो मे कण्ठग्रहोऽरातिर्दूरस्थो वान्तिकेऽपि च ।
पिब तूर्णमसृक् तस्य हुत्वेत्युक्त्वा निवेदयेत् ॥
संरक्ष्याग्निं विधानेन नवरात्रं समाचरेत् ।
मृतस्तिष्ठेति हुत्वैवं भवेदस्य रिपोर्मृतिः ॥

शावं शवकाष्ठभवम् । शावमिति पाठे श्मशानाग्निमित्यर्थः ।

अर्कक्षीरेण मरिचं पिष्ट्वा तत्रैव लेपयेत् ॥
फट्कारं हृदये कृत्वा शिरं निर्मलकूपके ।
क्षिपेत्कृष्णचतुर्दश्यां जपेन्मन्त्रं सहस्रशः ॥
सद्योऽवगाहनं कृत्वा कुर्यात् यस्यात्मरक्षणम् ।
मन्त्रं जप्त्वा विधानेन भेदयेत् सिंहमुद्रया ॥

षण्मासान्म्रियते मृत्युः संध्ययोरुभयोरपि ।
वात्यासमुद्धतं पर्णं शुष्कं वै भीतकं ततः ॥
गृहीत्वा च लिखेन्मन्त्री कृष्णसर्पस्य शोणितैः ॥
नामधेयं रिपोरन्ते वायुबीजं प्रयोजयेत् ॥
खनेत्तस्यापि गेहे तु काकवद् भ्रमते ध्रुवम् ।
वातोद्गतैः शुष्कपर्णैः काष्ठैरशनिपातितैः ॥
उष्ट्रास्थिना वचाङ्गारैः शत्रोरुच्चाटनं भवेत् ।
दूर्वागुडूचीगव्येन सर्पिषा तिलतण्डुलैः ॥
अग्नौ समिद्भिः पालाशैः शान्ति कुर्याद् विचक्षणः ।
लक्ष्मी बिल्वदलैः पत्रैर्नन्द्यया रक्तैः श्रिये तथा ॥
राजपुष्पैरपामार्गैरङ्गारैश्च सुभद्रकैः ।
मधुरत्रयसंसिक्तैरेभिः कुर्वीत वश्यकम् ॥

अङ्गारः जवापुष्पम् । सुभद्रं पारिभद्रम् ।

उक्तं तन्त्रे…… …… वाधुनस्यापि कथ्यते ॥
शान्ति कृत्वा विधानेन जपेत् परिमलं त्विदम् ।
महाव्याधिप्रशमनं नित्यमष्टोत्तरं शतम् ॥
जपेदेकाग्रचित्तस्तु लोकवश्यकरं परम् ।
मनसा चिन्तयेत् कृत्यां गजारूढां वियन्त्रणाम् ॥
तस्य वश्या भवेत् क्षिप्रमश्वारूढा तथा भवेत् ।
चौरव्याघ्रमृगादीनां सलिलादिभयापहम् ॥
सकृच्छ्रवणमात्रेण सर्वपापप्रणाशनम् ।
सप्तभिर्मन्त्रितं तोयं पीत्वा नित्यं समाहितः ॥
मेधावी च भवेद् वाग्मी तावज्जप्ताभिषेकतः ।
सप्तभिर्मन्त्रितं कृत्वा विषमप्यमृतं भवेत् ॥
मासं पक्षं द्विपक्षं वा षण्मासं वत्सरं तथा ।
एवं यः कुरुते मर्त्यः स पुण्यां गतिमाप्नुयात् ॥
अथ वक्ष्ये विशेषेण महाशान्तिविधिक्रमम् ।
सर्वसिद्धिकरं पुण्यं सर्वपापविनाशनम् ॥

सर्वमुद्रापहरणं[1] सर्वारिष्टविनाशनम् ।
अकालमृत्युशमनं सदा विजयवर्द्धनम् ॥
अमुष्य[2] पावनं पुष्टिलक्ष्मीसौभाग्यतुष्टिकृत् ।
पुत्रदं कीर्त्तिदं चैतदलक्ष्मीमलनाशनम् ॥
योगिनीमूलवेतालाः प्रेतकूष्माण्डपन्नगाः ।
तत्र स्थाने न तिष्ठन्ति डाकिन्याद्या विशेषतः ॥
कृत्यामभ्यर्चयेद् वत्स यथाविधिपुरस्सरम् ।
षोडशारं लिखेत्पद्मं योनियुक्तं सविन्दुकम्[3] ॥
तन्मध्येऽष्टदलं लिख्य यकारादीन्[4] लिखेत् क्रमात् ।
तन्मध्ये रसकोणं[5] तु लिखेन्मूलमनुं[6] स्मरन् ॥
चन्द्रबिम्बं लिखेन्मध्ये तस्योर्ध्वे प्रेतमालिखेत् ।
तस्य मध्ये न्यसेत् कुम्भं वस्त्रस्रग्दामभूषितम् ॥
कुम्भमध्ये न्यसेत् कृत्यां सर्वलक्षणसंयुताम् ।
असकृच्च यथान्यायं पायसं तु निवेदयेत् ॥
परितोस्य घटान्यस्या असिताङ्गादिभैरवान्[7] ।
गन्धपुष्पादिनाभ्यर्च्य तद्बाह्ये दिक्षुपालकान् ।
लोकेशानर्चयेद् देवीं तदग्रे होममारभेत् ॥
जुहुयादाज्यपामार्गावक्षतं तिलसर्षपौ ।
दूर्वाप्लक्षखदिराश्वत्थं प्रत्येकं तु शताष्टकम् ॥

---

१ मुद्राशब्दः प्रयोगपरः । तथा च सर्वप्रयोगस्य अपहरणं नाशनमिति टिप्पणी "क" मातृकायाम् । २ अमुष्य साधकस्येति टिप्पणी "क" मातृकायाम् । ३ योनिः एकारः विन्दुयुक्तः अर्धचन्द्रयुक्तः तथा च एँ इति बीजं लिखेत् । केचित् योनिपदं योन्याकारः त्रिकोणपरं विन्दुयुक्तं सविन्दुत्रिकोणमालिखेदिति वदन्ति इति टिप्पणी "क" मातृकायाम । ४ अष्टसु दलेषु यं रं लं वं शं षं सं हं इति लिखेत् इति टिप्पणी "क" मातृकायाम् । ५ षट्कोणमित्यर्थः इति टिप्पणी कमातृकायाम् । ६ मूलं ह्रीं महायोगिनि गौरि भुवनभयंकरि हूँ फट इति टिप्पणी "क" मातृकायाम् । असिताङ्ग भैरव—रुरुभैरव-चण्ड भैरव-क्रोध भैरव-उन्मत्तभैरव कापालि भैरव-भीषण भैरव-संसार भैरव इत्यष्टौ भैरवान् अष्टसु कलशेषु पृथक्-पृथक् पूजयेत् पञ्चोपचारादिना । विभवानुसारेण पूजनं सर्वत्र कर्त्तव्यमिति टिप्पणी "क" मातृकायाम् ।

कुण्डे वा स्थण्डिले वापि होमकर्म समाचरेत् ।
तस्य दक्षिणपार्श्वे तु लक्ष्मीं ध्यायेद् यथाविधि ॥
कुम्भमध्ये न्यसेद् देवीं दक्षिणे तत्प्रियं स्मरेत् ।
वामपार्श्वे यजेद् देवीं हृल्लेखां परमेश्वरीम् ॥
तस्यैव वामपार्श्वे तु पूजयेद् गणनायकम् ।
अयुतं मूलमन्त्रं तु जपन् मृत्युविनाशनम् ॥
नियुतं भ्रूणहत्यां तु जपेत् परिमलं बुधः ।
महाव्याधिप्रशमन तावज्जप्ताभिषेकतः ॥
एवं यः कुरुते मर्त्यः पुण्यां गतिमवाप्नुयात् ।
येन ज्ञातं परिमलं यस्य वक्त्रगतं सदा ॥
तस्यासाध्यं न विद्येत व्याधिभ्योऽपि न भीर्भवेत् ।
महाशान्तिकरं पुंसां दुःखदारिद्र्यनाशकृत ॥

॥ इति तन्त्रकौमुद्यां परिमल–परिच्छेदः ॥ १२ ॥

अथ ज्वालामुखीमन्त्रः ॥

फेत्कारिणीतन्त्रे नमो भगवतीत्युक्त्वा ज्वालामालिन्यतः परम ।
गृध्रगणपरिवृते द्विठान्तादिभिरीरितः ॥
ओं नमो हृदयं प्रोक्तं भगवतीति शिरःस्मृतम ।
ज्वालामालिनि च शिखा गृध्रगणपरिवृते ततः ॥
वर्मस्वाहास्त्रमित्येतज्जातियुक्तं न्यसेत्तनौ ।
अभुक्त्वा नियुतं चैतत् जयमन्त्रं जपेज्जयी ॥
रुद्राङ्गनाग्निजायाभ्यां रुद्धज्वालामुखीत्यपि ।
मन्त्रान्तरं समाख्यातं ज्वालामुख्या अनन्तरम् ॥
दीपतैलाक्तदेहोर्द्ध्वरात्रे गुरुदिनादितः ।
जपेदष्टसहस्रं तु त्रयोविंशतिवासरान् ॥
प्रत्यहं साधनं युद्धं ददातीति न संशयः ।
नारायणीये कथितमगस्त्यैर्नवधा पुनः ॥
सुसिद्धिमिच्छता गोप्यो नामापि न समीरयेत ।
पुत्रस्य नृपतेश्चापि धार्मिकस्य विशेषतः ॥
नवदुर्गाविधानेन दर्शयेत कार्यगौरवात् ।
नृपोऽपि सम्यगाचारो मन्त्रज्ञो विविधैर्धनैः ॥
निवेद्य विधिवत् पश्चात् मन्त्रवर्णेन निर्दहेत् ।
स्मृतिमात्रेण वै मन्त्री रिपून सर्वान विनाशयेत् ॥
प्रदद्याद् दक्षिणास्तस्य सहस्रं शतमेव वा ।
गवां सुवर्णनिष्कानां भूमिं वा शस्यशालिनीम् ॥
सर्वशान्तिमवाप्नोति सर्वरक्षाकृतिर्भवत् ।

निष्कमलङ्कारः ।

॥ इति तन्त्रकौमुद्यां ज्वालामुखी-पटलः ॥ १३ ॥

अथ वगलामुखीमन्त्रः ।। रुद्रजामले । भैरवतन्त्रे

प्रणवं पूर्वमुच्चार्य स्थिरमायामथोच्चरेत् ।
संबोधनपदं चोक्त्वा ततः श्रीवगलामुखी ॥
ततः सर्वदुष्टानां ततो वाचं मुखं पदम् ।
स्तम्भयेति पदं चोक्त्वा कीलयेति पदद्वयम् ॥
बुद्धिंनाशयपदं स्थिरमायां पुनर्लिखेत् ।
लिखेच्च पुनरोङ्कारस्वाहेति पदमुच्चरेत् ॥
षड्त्रिंशदक्षरा विद्या देवानामपि दुर्लभा ।

स्थिरेति विन्दुचतुर्थ-स्वरयुतं लकारस्थहकारमित्यर्थः ।

त्रैलोक्यस्तम्भिनी विद्या विज्ञेया वगलामुखी ।
ह्लीँ बीजं च द्विठंशक्तिमूर्धादिषु च विन्यसेत् ॥
युग्मवामे तु सप्तत्तु दशार्णैश्च मनूद्भवैः ।
ओँ स्थिरमाया च हृदयं मूर्ध्नि श्रीवगलामुखि ॥
शिखायां सर्वदुष्टानां वाचं मुखं स्तम्भयेति ।
कवचे कीलकद्वन्द्वं नेत्रे बुद्धिं विनाशय ॥
ह्लीं ओँ स्वाहेति चास्त्रे च षडङ्गविधिरीरितः ।

एवं ओँ ह्लीँ हृदयायनमः श्रीवगलामुखि शिरसे स्वाहा इत्यादयो मन्त्राः ।

तथा मूर्ध्नि भाले दृशोः श्रुत्योर्गण्डयोर्नासयोः पुनः ।
ओष्ठयोर्मुखगर्ते च दक्षिणांसे च कूर्परे ॥
तथैव मणिवन्धे च तथैवाङ्गुलिमूलके ।
दक्षगलमूले दक्षकुचे वामहस्ते तथा हृदि ॥
नाभौ कट्यां गुह्यदेशे वामांसे कूर्परे तथा ।
मणिवन्धेऽङ्गुलीमूले विन्यसेत् सुसमाहितः ॥
वामोरुमूले जानौ च गुल्फे चाङ्गुलिमूलके ।
दक्षोरुमूले तज्जानौ तद्गुल्फेऽङ्गुलिमूलके ॥
मूलविद्याक्षरैर्विद्वान् क्रमेण न्यासमाचरेत् ।

चक्षुरादि चतुष्के द्विद्विवर्णन्यासः । तथैव समावेशात् ॥

एवं न्यासविधिं कृत्वा ततो ध्यानं समाचरेत् ॥
गंभीरां च मदोन्मत्तां स्वर्णकान्तिसभीमप्रभाम् ।
चतुर्भुजां त्रिनयनां कल्पानलसमप्रभाम् ॥

मुद्गरं दक्षिणे पाशं वामे जिह्वां च बज्रकम् ।
पीताम्बरधरां देवीं दृढपीनपयोधराम् ।
हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ॥
पीतभूषणभूषां च स्वर्णसिंहासनस्थिताम् ।
सर्वपीतोपहारेण पीताम्बरधरां यजेत् ॥
जपमाला च देवेशि हरिद्राग्रन्थिसम्भवा ।
पीतासनसमारूढः पीतध्यानपरायणः ॥
पीतपुष्पार्चनं नित्यमयुतं जपमाचरेत् ।
दशांशेन कृतो होमः पीतद्रव्यैः सुशोभनैः ॥
संज्ञामुच्चारयेत् साध्यं स्तम्भनं चाद्भुतं भवेत् ।
गतिस्तम्भकरी विद्या शत्रुस्तम्भकरी भवेत् ॥
मधुरार्द्रतिलाज्येन वश्यलाभानि साधयेत् ।
तथाकर्षणकर्माणि लोध्रत्रिमधुरान्वितैः ।
निम्ब पत्रा (णि) रितैलाक्तं विद्वेषणकरं परम् ॥
हरितालं हरिद्रां च लवणेन च संयुताम् ।
स्तम्भने सिद्धिर्देवेशि प्रज्ञा चैव गतिर्मतिः ॥
लाजान् त्रिमधुसंयुक्तान् सर्वरोगोपशान्तये ।
लक्षमेकं जपेन्मन्त्रं ब्रह्मचारी दृढव्रतः ॥
पर्वताग्रे महारण्ये सिद्धे शैवालये गृहे ।
संगमे च महानद्याः देशिकः साधयेत् स्वयम् ॥
श्वेतब्रह्मतरोर्मूले पादुकां चैव रञ्जयेत् ।
अलक्तकेन रागेण रंजिता नवमुद्रया ॥
षट्त्रिंशदक्षरा विद्या लक्षमानेन मन्त्रवित् ।
शतयोजनमात्रं तु मनश्चिन्तितमानयेत् ॥
रसं मनः शिला तालं माक्षिकेन समन्वितम् ।
जपेन्मन्त्रं लक्षमात्रं सर्वाङ्गे लेपनं कृतम् ॥
अदृश्यकारणं देवि त्रिलोके च महाद्भुतम् ।

रसः पारदम् । तालं हरितालम् । माक्षिकं मधु ।

एकवर्णगवां चैव धारोष्णं क्षीरमाहरेत् ।
शर्करामधुसंयुक्तं त्रिशतैर्मन्त्रितं प्रिये ॥

पीत्वा च हरते देवि विषं स्थावरजङ्गमम् ।

तथा दारिद्र्यमोचनं देवि लक्षमानं जपेन्नरः ।
दशांशेन युतो होम एभिर्द्रव्यैः कृतः खलु ॥
लक्ष्मीयुक्तो भवेद् देवि दारिद्र्यं च विनाशयेत् । इत्यलं विस्तरः ।

पूजनं शृणु देवेशि साधके सिद्धिदायकम् ।
सौवर्णं राजतं ताम्रं पित्तलं भूर्जपत्रकम् ॥
कर्पूरागुरुकस्तूरीश्रीखण्डैः कुसुमेन वा ।
लिखेत्तत्र प्रयत्नेन लेखिन्या हैमया पुनः ॥
मध्ये योनिं समालिख्य तद्बाह्ये तु षडस्रकम् ।
तद्बाह्ये षोडशदलं चतुर्द्वारविभूषितम् ॥
पूर्वद्वारे गणेशं च दक्षिणे वटुकं तथा ।
पश्चिमे योगिनी पूज्या क्षेत्रपालं तथोत्तरे ॥
ईशानेऽपि च सोमां तु वज्रपीठं प्रपूजयेत् ।
बगलां पूर्वपत्रे च स्तम्भिन्याद्यास्ततः पराः ॥
स्तम्भिनी मोहिनी वश्या सुवली चरणी तथा ।
दुर्धरा कल्पिता खारी कल्पनाकारदर्शिनी ॥
भ्रामिणी मन्दगमना भोगास्या चैव भोगिनी ।
भोगाः षोडशपत्रेषु गन्धपुष्पाक्षतैर्यजेत् ॥
षोडशस्वरसंयुक्ताः संप्रदायकुलागमे ।
एतन्मध्येऽष्टपीठेषु कल्पयेदष्टपत्रकम् ॥
ब्रह्माण्याद्याश्च पूर्वादौ भैरवाष्टकसंयुताः ।
स्थिरमायादिकाः सर्वाः परिपूज्याः कुलोद्भवे ॥
यादिहान्ताः षडङ्गेषु सप्तधातुवलीवृकाः ।
योनिमध्ये मूलविद्यां त्रिभिरंजलिभिर्यजेत् ॥
पुष्पधूपादिनैवेद्यगन्धताम्बूलदीपकैः ।
नीराज्य विधिना पश्चाज्जपसंख्यां निवेदयेत् ॥
बलित्रयं ततो देवि पूजनादिमहोत्सवैः ।
एकं तु कथितं देवि गुरोराज्ञां च पालयेत् ॥

तन्त्रान्तरे वह्निह्रीनेन्द्रयुङ्मायाबगलामुखिसर्वयुक् ।
दुष्टानां वाचमित्युक्त्वा मुखं स्तम्भय कीर्त्तयेत् ॥
जिह्वां कीलय बुद्धिं तु विनाशय पदं वदेत् ।
पुनर्बीजं तु तत्तारं वह्निजायावधिर्भवेत् ॥
तारादिका चतुस्त्रिंशदक्षरा बगलामुखी ॥

ओँ ह्लीँ बगलामुखि सर्वदुष्टानां वाचं मुखं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ओँ स्वाहा इति मन्त्रः ।

तत्र बगलामुखीमन्त्रस्य नारदऋषिपँक्तिश्छन्दः श्रीबगलामुखी देवता ह्लीँ बीजं स्वाहाशक्तिः समस्तशत्रोर्मुखस्तम्भनार्थं सद्ध्यर्थे विनियोगः ॥

अत्र स्थिरमायासंज्ञकेन बीजेन षडङ्गन्यासकरन्यासौ कृत्वा प्राणायामत्रयं कुर्यात् ।

अथ ध्यानम् ।

मध्ये सुधाब्धिमणिमण्डपमध्यवेद्यां
सिंहासनोपरिगतां परिपीतवर्णाम् ।
पीताम्बराभरणमाल्यविभूषिताङ्गीं
देवीं नमामि धृतमुग्दरवैरिजिह्वाम् ॥
जिह्वाग्रमादाय करेण देवीं वामेन शत्रून् परिपीड़यन्तीम् ।
गदाभिघातेन च दक्षिणेन पीताम्बराढ्यां द्विभुजां नमामि ॥
त्रिशूलधारिणीमम्बां सर्वसौभाग्यदायिनीम् ।
सर्वश्रृङ्गारवेशाढ्यां मातर्ध्यात्वा प्रपूजयेत ॥

अथ स्तोत्रम् । चलत्कनककुण्डलोल्लसितचारुगण्डस्थलां
लसतकनकचम्पकद्युतिमदिन्दुबिम्बाननाम् ।
गदाहतविपक्षकां चलितलोलजिह्वाञ्चलां
स्मरामि बगलामुखीं विमुखसन्मनस्तम्भिनीम् ॥ १
पीयूषोदधिमध्यचारुविलसद्रक्तोत्पले मण्डपे
यः सिंहासनमौलिपातितरिपुं प्रेतासनाध्यासिनीम् ।
स्वर्णाभां करपीडितारिरसनां भ्राम्यद्गदाविभ्रमा-
दित्थं ध्यायति यान्ति तस्य सहसा सद्योऽथ सर्वापदः ॥ २
देवि त्वच्चरणाम्बुजार्चनकृते यः पीतपुष्पाञ्जलिं
मुद्रां वामकरे निधाय च पुनः मन्त्री मनोज्ञाक्षराम् ।

पीतध्यानपरोपकुम्भकबलाद्बीजं स्मरंत् पार्थिवं
तस्यामित्रमुखस्य वाचि हृदये स्तम्भो भवेत्तत्क्षणात् ॥ ३
वादी मूकति रङ्कति क्षितिपतिर्वैश्वानरः शीतति
क्रोधी शाम्यति दुर्जनः सुजनति क्षिप्रानुगः खञ्जति ।
गर्वी खर्वति सर्वविच्च जड़ति त्वद्यन्त्रणायन्त्रितः
श्रीनित्ये वगलामुखि प्रतिदिनं कल्याणि तुभ्यं नमः ॥ ४
मन्त्रस्तावदलं विपक्षदलने स्तोत्रं पवित्रं च ते
मन्त्रं वादिनियन्त्रणं त्रिजगतां चैत्रं न चित्रं न ते ।
मातः श्री वगलेति नाम ललितं यस्यास्ति जन्तोर्मुखे
त्वन्नामस्मरणेन संसदि मुखस्तम्भो भवेद् वादिनाम ॥ ५
दुष्टस्तम्भनमुग्रविघ्नशमनं दारिद्र्यविद्रावणं
भूभृद्भीशमनं चयन्मृगदृशां चेतः समाकर्षणम् ।
सौभाग्यैकनिकेतनं समदृशोः कारुण्यपूर्णेक्षणं
मृत्योर्मारणमाविरस्तु पुरतो मातस्त्वदीयं वपुः ॥ ६
मातर्भञ्जय मद्विपक्षवदनं जिह्वां चलां कीलय
ब्राह्मीं मुद्रय मुद्रयाशुधिषणामुग्रां गतिं स्तम्भय ।
शत्रूँश्चूर्णय चूर्णयाशु गदया गौराङ्गि पीताम्बरे
विघ्नौघं वगले हर प्रणमतां कारुण्यपूर्णेक्षणे ॥ ७
मातर्भैरवि भद्रकालि विजये वाराहि विश्वाश्रये
श्रीनित्ये शमये महेशि वगले कामेशि वामे रमे ।
मातङ्गि त्रिपुरे परात्परतरे स्वर्गापवर्गप्रदे
दासोऽहं शरणागतः करुणया विश्वेश्वरि त्राहि माम् ॥ ८
संरम्भे चौरसंघे प्रहरणसमये बन्धने वारिमध्ये
विद्यावादे विवादे प्रकुपति नृपतौ दिव्यकाले निशायाम् ।
वश्ये वा स्तम्भने वा रिपुवधसमये निर्जने वा रणे वा
गच्छँस्तिष्ठन्नकालं यदि पठति शिवं प्राप्नुयादाशु धीरः ॥ ९
त्वं विद्या परमा त्रिलोकजननी विघ्नौघसंछेदिनी
योषाकर्षणकारिणी जनमनःसंमोहसंदायिनी ।
स्तम्भोत्सारणकारिणी पशुमनः संमोहसंदायिनी
जिह्वाकीलनभैरवी विजयते ब्रह्मादिमन्त्रो यथा ॥ १०

विद्यां लक्ष्मीं सर्वसौभाग्यमायुः पुत्रैः पौत्रैः सर्वसाम्राज्यसिद्धिम् ।
मानं श्रेयो वश्यमारोग्यसौख्यं प्राप्तं तत्तत् भूतलेऽस्मिन् नरेण ॥११
तत्कृतं जपसन्नाहं गदितं परमेश्वरि ।
दुष्टानां स्तम्भनार्थाय तं गृहाण नमोऽस्तु ते ॥ १२

अथ यन्त्रम् । ओँकारयोः संमुखयोरूर्द्ध्वाधः शिरसोर्लिखेत् ।
साध्यनाम च मध्याङ्के तद्बाह्ये चाक्षरद्वयम् ॥
बीजं द्वितीयवर्गस्य द्वितीयं विन्दुभूषितम् ।
चतुर्दशस्वरोपेतं संलिखेत् पृथिवीगतम ॥
ठकारेण समावेष्ट्य चतुष्कोणं पुटाद्बहिः ।
तत्कोणरेखासंयुक्तैः शूलैर्वज्राष्टकं लिखेत् ॥
त्रिशूलमध्यरेखायां पृथग् बीजानि पार्श्वयोः ।
अष्टस्वपि च कोणेषु तदेवैकैकमालिखेत् ।
पृथिव्यन्तरितं बाह्यं मातृकापरिमण्डितम् ॥
आवेष्ट्य मध्यपत्रांश्च तद्बाह्ये स्थिरमायया ।
निरुद्धाङ्कुशबीजेन नादसंलिखितांघ्रिणा ।
लिखेत् पूर्वोक्तमार्गेण ठकारे वगलामुखीम् ॥

ठकारं ठकाराक्षरम् । चाक्षरमिति क्वचित्पाठः । द्वितीयवर्गद्वितीयं छकारः । पृथिवी लकारः ।

॥ इति वगलामुखीपटल परिच्छेदः ॥ १४ ॥

अथ वाराहीतन्त्रे मन्त्राः ।

तत्र कपिलार्घीशसंयुक्तं नादबिन्दुविभूषितम् ।
फडन्तं त्र्यक्षरं ज्ञेयं ध्रुवाद्यं चतुरक्षरम् ॥
ध्रुवान्ते भुवनेशानी पञ्चार्णं सर्वकामदम् ।

कपिला हकारः । ध्रुवः ओँकारः । तेन ओँ ह्रीँ हूँ फट् इति मन्त्रः ।

ऋषिः स्यान्नारदश्छन्दस्त्रिष्टुप् शम्भुश्च देवता ।
विनियोगः सर्वकामे गुणलक्षं जपेन्मनुम् ॥
एकांशेन च विन्यासं होमं त्र्यंशेन भावयेत् ।
तर्पणं बलिदानं च पूजनं ह्रासतः क्रमात् ।
अष्टकोणं यन्त्रराजं तद्बहिश्चाष्टपत्रकम् ॥
तद्बहिः षोडशदलं मध्ये शक्तिं ततो लिखेत् ।
कर्णिकायां ततो मायां कवचं प्रतिपत्रके ॥
मण्डलेन पुटं कुर्याद् धराकोणे जयं लिखेत् ।
श्रीबीजेन पुटं कुर्यात् संपूर्णं यन्त्रमुत्तमम् ॥
गृहीत्वा रक्तकुसुमं योनिमुद्रान्तरस्थितम् ।
ध्यायेच्छशिमुखीं देवीं सर्वभोगबलप्रदाम् ॥

प्रत्यालीढ़पदार्पितेत्यादिनीलसरस्वतीमन्त्रे विस्तरः ।

विचिन्त्य सोहमित्युक्त्वा स्वशिखायां ततो न्यसेत् ॥
सान्तपञ्चकदीर्घेण संयुतन्यासमाचरेत् ।
पूजयेत् पञ्चवर्णेन वाममार्गेण साधकः ॥
राजलक्ष्मीमवाप्नोति कर्त्तव्यो नात्र संशयः ।

सान्तं हकारः । दीर्घपञ्चकमाकारादिदीर्घपञ्चकम् । एवं पञ्चाङ्गत्वमुक्तम् ।

तथा वाराही च तथा ङेन्तं मायादिव्यद्वयावधिः ।

माया भुवनेशीबीजम्

ऋषिर्नारायणः प्रोक्तस्त्रिष्टुपछन्दश्च देवता ॥
वाराही कथिता चात्र सर्वार्थे विनियोजयेत् ।
त्रिकोणं च क्रमाल्लिख्य अष्टपत्रमनन्तरम् ।
धरणीसदनं पश्चात् सवज्रं द्वारयुक् क्रमात् ॥
ध्यायेत्तप्तसुवर्णाभां नानालङ्कारशोभिताम् ।
पाशाङ्कुशौ दक्षिणेन स्वस्तिकं वरमेव च ॥

दधतीं रत्नमुकुटां त्रैलोक्यतिमिरापहाम्
वर्णलक्षं जपेन्मन्त्रं तद्दशांशेन होमयेत्
घृताक्तेन वरारोहे ततः सिद्धो भवेन्मनुः ।
रविग्रहे कण्ठतोये जपेदयुतमेव तम्
जड़ोऽपि वावदूकः स्याद्वत्सरान्नात्र संशयः ।

तन्त्रान्तरे त्रितत्त्वतारयोर्मध्ये वाराहीत्यपरा भवेत ।

तत्त्वबोधे इन्द्रबीजं समुच्चार्य षष्ठस्वरसमन्वितम् ॥
वाराहि शक्रबीजं च पञ्चमस्वरसंयुतम् ॥
उन्मत्तभैरविपदं चरणाभ्यां नमो वदेत ।
वाराह्या इति विख्यातो दुर्लभः शत्रुमर्दने ॥

तथा कामाख्यायास्तु ह्रीमोंह्रीं त्रैपुरं मन्त्रमुद्धरेत ।

तथा नारसिंहं हुताशस्थं शुद्धं तुर्याढ्यमुद्धरेत् ।
हूं हूं काराढ्यमाख्यातं त्रिबीजं वैष्णवीमतः ॥
तुर्यमन्त्रान्तमथवा वाग्भवं प्रणवं ततः ।
भवेन्नति भगवति वैष्णवीति पदं वदेत् ॥
सुभगेऽग्निवधूर्मन्त्रास्त्रयो लक्ष्म्याः समीरिताः ।

नारसिंहं क्षकारः । तुर्यमीकारः ।

तन्त्रे

तारो वियदिन्दुरेफमनुस्वरयुतं भवेत ।
भुवनेशीति संप्रोक्तो भवान्यास्त्र्यक्षरो मनुः ॥
मायावियदिन्दुरेफमनुस्वरयुतं भवेत ।
स्वरमस्य परित्यज्य सर्गयोगात् परो भवेत् ॥
गुणाक्षरो मनुरसौ कौमार्याः कामदो मणिः ।

वाराही तन्त्रे गुणमाद्यं वह्निसंस्थं चतुर्थस्वरसंयुतम् ॥
इन्दुबिन्दुकलाकान्तं नकुलीशोऽग्निविष्टरः ॥
वामादिबीजसंयुक्तं पूर्वबीजेन त्र्यक्षरम ।

गुणः व्यञ्जनम । आद्यं ककारः । नकुलीशो हकारः । अग्निविष्टरो रेफारूढ़ः ।
पूर्वबीजं पञ्चाक्षरोक्तं हूँ ।

ऋषिः स्यान्नारदश्छन्दोऽनुष्टुप् शम्भुश्च देवता ।
सर्वार्थे योजयेन्मन्त्री विनियोगश्च पूर्ववत् ॥

बाणलक्षं जपेन्मन्त्रं तदर्धं न्यासमाचरेत् ।
दशांशेन भवेद्धोमं षडंशेनापि तर्पणम् ॥
त्र्यंशेन च बलिं दद्यात् सहस्रांशेन पूजनम् ।
षडङ्गन्यासं बीजेन सर्वत्रापि निवेशयेत् ॥
पद्मं वसुदलोपेतं गुणत्रितयवेष्टितम् ।
कलापत्रं धराबिम्बं सचतुर्द्वारमेव च ॥
त्रिकोणमध्यं विलिखेत् यन्त्रं पूजाविधौ क्रमात् ।
आसनं सिंहमन्त्रेण मूर्त्तिं मूलेन कल्पयेत् ॥
पत्रान्तरस्थं पुष्पं च योनिगर्भान्तरस्थितम् ।
पञ्चपुष्पसमायुक्तं त्रिगन्धैर्विलोडितम् ।
त्रिपत्रदूर्वया सार्धमष्टाक्षततिलैर्युतम् ॥
रक्तश्वेतपीतकृष्णपाण्डरं पञ्चपुष्पकम् ।
भृङ्गपत्रं च श्रीपत्रं दाडिमं पत्रमेव च ॥
पत्रत्रयं समुद्दिष्टं त्रिगन्धं कुष्ठचन्दनम् ।
कुशीतेन समं देयं त्रिगन्धं परिकीर्त्तितम् ॥
द्वीपं त्रिकोणविपुलं स्फुरद्रत्नमनोहरम् ।
कूजत्कोकिलनादाढ्यं मन्दमारुतसेवितम् ॥
ध्यात्वा सुधाब्धिमध्ये तु तस्मिन्माणिक्यमण्डपे ।
रत्नसिंहासने न्यस्तत्रिकोणोज्ज्वलकर्णिके ॥
पद्मे संचिन्तयेद् देवीं साक्षात् त्रैलोक्यसुन्दरीम् ।
उद्यत्सूर्यसहस्रकान्तिनिवहप्रख्यैश्चतुर्भिर्भुजै-
र्नीलेन्दीवरमुग्रशूलमपराभीतिं वरं बिभ्रतीम् ।
सिंहस्योपरि पद्मविष्टरगतामर्धेन्दुनालंकृतां
मुक्ताहारविभूषितां त्रिनयनां देवीं भजे वैष्णवीम् ॥
दत्वासनादि मूलेन अङ्गपूजां समाचरेत् ।
रक्तपुष्पाञ्जलिं दद्यात् पद्ममध्ये समर्चयेत् ॥
प्रकल्पयेद् योनिकुण्डं कुर्याद्धोमं विधानवित् ॥
तथा　आदिबीजं भवेन्मध्यं मध्यमन्ते निवेशयेत् ।
मध्यादिभावयोगेन चण्डिका शीघ्रसिद्धिदा ॥
आद्यं बीजं मध्यशक्तिरस्य संप्रोच्यते क्रमात् ।
अथ चण्डीमनुं वक्ष्ये मङ्गला मङ्गलामयी ॥

वान्तं वह्निसमारूढं चतुर्थस्वरभूषितम् ।
अनुस्वारेण संपन्नं मायाबीजेन संपुटम् ॥

ह्रीँ श्रीँ ह्रीँ इति मन्त्रः ।

ऋषिः स्याद् दक्षिणामूर्त्तिरनुष्टुब्देवता शिवः ।
ऋतुलक्षं जपेन्मन्त्रं तदर्धं न्यासमाचरेत् ॥
तदर्धेण भवेद्धोमं तदर्धेन च तर्पणम् ।
तदर्धेन च बलिं दद्यात् सहस्रार्धेन पूजयेत् ॥
षट्कोणे विलिखेत् पद्मं कमलं त्रिगुणैर्युतम् ।
वसुद्वारं धरागेहं बीजाढ्यं यन्त्रमीरितम् ॥

वसुद्वारमष्टद्वारं त्रिद्वारं वा वज्रद्वारमिति क्वचित्पाठः ।

सुधासागरमध्यस्थं महद्द्वीपं सुशोभनम् ।
सभृङ्गकुसुमोपेतकल्पवृक्षोपशोभितम् ॥
सपताकध्वजोपेतं शुभ्रचामरराजितम् ।
तन्मध्ये स्वर्णपर्यङ्कं नानारत्नसमन्वितम् ॥
वारिपूर्णैः स्वर्णकुम्भैः सर्वतः सुसमावृतम् ।
चिन्तयेत् परमां देवीं पूर्णस्वर्णघटोपरि ॥
पञ्चसिंहासनगतां तप्तजाम्बूनदप्रभाम् ।
अतसीपुष्पसंकाशां बालार्ककिरणारुणाम् ॥
वराभयधरां देवीं चन्द्रार्धकृतशेखराम् ।
स्मितप्रसन्नवदनां बन्धूकाधरपल्लवाम् ॥
एवं ध्यात्वा न्यसेन्मध्ये देवीमन्तः प्रपूजयेत् ॥

अथ महामायामन्त्रः ।

यामले— वाग्भवं प्रथमं बीजं कामबीजं द्वितीयकम् ।
तृतीयं शक्तिबीजाख्यं पुनर्वाग्भवमुच्यते ॥
लज्जाबीजं ततः पश्चात् पद्माबीजमतः परम् ।
वर्मचाग्निप्रियान्तोऽत्र महामायामनुर्भवेत् ॥
ऋषिर्ब्रह्मा समुद्दिष्टो गायत्रीछन्द ईरितम् ।
देवतास्य महामाया सर्वतन्त्रेषु गोपिता ॥

ध्यायेद् दिग्वसनां प्रहास्यवदनां कोट्यर्कतेजः प्रभां
पद्मस्थां वरदानपङ्कजधरां सव्ये शुभाभीष्टदाम् ।
आद्यां मुक्तिमभीप्सुभिः परिवृतां कण्ठे च मुण्डस्रजां
स्निग्धामुल्लसितस्तनीं परशिवां शम्भोर्हरेर्मध्यगाम् ॥

तथा मायाबीजं समुद्धृत्य महामायापदं ततः ।
ङेन्तमग्निप्रियान्तोऽयं महामायामहामनुः ॥
सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर -
त्तारानायकशेखरां स्मितमुखीं आपीनवक्षोरुहाम् ।
पाणिभ्यां मणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थसव्यचरणां ध्यायेत् परामम्बिकाम ॥
तत्त्वलक्षं जपेन्मन्त्रं दशांशं मधुराप्लुतैः ।
जुहुयात् पायसैर्वह्नौ कमलैरथवा हुनेत् ॥
पूर्वोक्ते पूजयेत् पीठे पूजां पूर्ववदाचरेन ।

तन्त्रान्तरे हान्तान्तपूर्वो मान्तश्च नान्तो णान्तस्तथैव च ।
कैकादशः कादिषष्ठः खान्तो विष्णुपुरस्सरः ॥
एभिरष्टाक्षरैर्मन्त्रं शोणपद्मसमं स्मरेत् ।
ओङ्कारं पूर्वतः कृत्वा जप्यः स्यान्नारदो मुनिः ।
छन्दोऽनुष्टुब्देवता च महामायैव वैष्णवी ॥

हान्तः सकारः सोऽन्ते यस्य तादृशः षकारः । तत्पूर्वस्तदादिवर्णः शकारः । मान्तः यकारः । नान्तः पकारः । णान्तः तकारः । कैकादशः टकारः । कादिषष्ठः चकारः । खान्तः ककारः । एवं वर्गाद्यक्षराणि लभ्यन्ते । वैपरीत्येनोद्धारः । तेन "अकचटतपयश" इति मन्त्रः । प्रणवादिर्जप्य इत्यर्थः ।

ओँकारश्चास्य बीजं च पकारः शक्तिरुच्यते ।
अष्टलक्षं जपेन्मन्त्रं प्रथमं चैव साधकः ॥
पुरश्चरेद् विशेषेण नानानैवेद्यवन्दनैः ।
तत्रेक्षुसागरान्तः स्थं स्वर्णद्वीपं च चिन्तयेत् ।
तन्मध्ये रत्नपर्यङ्कं रत्नमण्डपसंस्थितम् ॥
आकाशगङ्गातोयान्तैः सदैवासिञ्चितं शुभम् ।
तत्पर्यङ्के रक्तपद्मं प्रशस्तं सर्वदा शिवम् ॥

चिन्तयेत् स्वर्णमालाङ्कं सप्तपातालनालकम् ।
आब्रह्मभुवनस्पर्शि स्वर्णवर्णं च कर्णिकम् ॥
तत्रस्थितां महामायां ध्यायेदेकाग्रमानसः ।
शोणपद्मप्रतीकाशां मुक्तमूर्धजलम्बिनीम् ॥
चलत्काञ्चनसम्बद्धकुण्डलोज्ज्वलशालिनीम् ।
सुवर्णरत्नसम्बद्धकिरीटवरधारिणीम् ॥
शुक्लकृष्णारुणैर्नेत्रैस्त्रिभिश्चारुविभूषिताम् ।
संध्याचन्द्रसमप्रख्यकपोलां लोललोचनाम् ॥
विपक्वदाड़िमीबीजदन्तां वक्त्रगुणोज्ज्वलाम् ।
बन्धूकदन्तवसनां शिरीषप्रभनासिकाम् ॥
कम्बुग्रीवां विशालाक्षीं सूर्यकोटिसमप्रभाम् ।
चतुर्भुजां विवसनां पीनोन्नतपयोधराम् ॥
दक्षिणोर्ध्वेन निस्त्रिंशं परेण सिद्धसूत्रकम् ।
बिभ्रतीं वामहस्ताभ्यामभीतिवरधारिणीम् ॥
निम्ननाभि क्रमायत्तक्षीणमध्यां मनोहराम् ।
आलसं नागनासोरुं गुप्तगुल्फां सुपार्ष्णिकाम् ॥
बद्धपर्यङ्कसङ्कल्पनिविड़ासनराजिताम् ।
गात्रेण रत्नस्तम्भं च सम्यगालम्ब्य संस्थिताम् ॥
किमिच्छसीति वचनं व्याहरन्तीं मुहुर्मुहुः ।
पञ्चाननं पुरस्थं च निरीक्षन्तीं सुवाहनम् ॥
मुक्तावलीस्वर्णरत्नहारकङ्कणकादिभिः ।
सर्वैरलंकारगणैरुज्ज्वलां सस्मिताननाम् ॥
सूर्यकोटिप्रतीकाशां सर्वलक्षणसंयुताम् ।
ईदृशीमम्बिकां ध्यात्वा सैवाहमिति चिन्तयन् ॥
अङ्गन्यासकरन्यासौ ततः कुर्यात् क्रमेण तु ।
एभिर्मन्त्रै स्वरैः संघैः आमीमूमैः क्रमान्वितैः ॥
औमश्चैतैः सप्रणवैः रक्तवर्णैर्मनोहरैः ।
अङ्गुष्ठादिकनिष्ठान्तमस्त्रसंवेष्टनं फटा ॥
प्रान्तेन कुर्याद् विन्यासं ततः करतलद्वये ।
हृच्छिरः शिखाकवचनेत्रेषु क्रमशो न्यसेत् ॥

ततस्तु मूलमन्त्रस्य चक्रे पृष्ठे तथोदरे ।
बाह्वोर्गुह्ये पादयोश्च जंघयोर्जघने तथा ॥
विन्यसेदक्षराण्यष्टौ ओंकारं च तथा स्मरन् ।

स्वरैः संघैः स्वरसमूहैरित्यर्थः । स्वरानाह आमीमिति अक्लीवषड्दीर्घैरित्यर्थः । सप्रणवैरिति तेन ओं आं हृदयाय नमः इत्यादयो मन्त्रा इत्यर्थः । प्रान्तेन अस्त्रमन्त्रेण । चक्रे मूलाधारे । वक्त्रे इति क्वचित्पाठः ।

पञ्चरूपां तु कामाख्यां पूजयेत्परमेश्वरीम् ।
सङ्कल्पकोटिलक्षाणि मम लोके च मानरः ॥
स्थित्वा देवीप्रसादेन परनिर्वाणमाप्नुयात् ।
इह लोके वाञ्छितार्थं सुखं प्राप्य यशोऽपि च ॥
रिपून् हत्वा महातेजा मातङ्गानिव केसरी ।
चिरायुः पुत्रपौत्रैश्च विभवैश्च समन्वितः ॥
सर्वान् कामानवाप्यैव द्विजराजसमो भवेत् ।
इति संक्षेपः।

इति तन्त्रकौमुद्यां महामायादि-पटलपरिच्छेदः ॥ १५ ॥

अथोच्छिष्टगणेशमन्त्राः ।

तन्त्रे प्रणवं पूर्वमुच्चार्य शम्भुबीजं ततः परम् ।
हरिस्थितप्रभारूढं दक्षनेत्रे प्रकल्पयेत् ॥
दक्षनेत्रान्वितः शूरश्चतुर्थो वर्ण ईरितः ।
वृषघ्नहलिनौ कान्तिपुष्टिभ्यां सहितौ परौ ॥
त्रिस्वरेणान्वितं देवनाथबीजसमन्वितम् ।
एकाराढ्यं ततो दुर्गां समुद्धृत्याष्टकं भवेत् ॥
वैश्वानरकलत्रं च दशार्णो मनुरीरितः ।
केचिद्गणेशबीजाद्यं मनुमेनं प्रचक्षते ॥

प्रणव ओंकारः । शम्भुबीजं हकारः । हरिः सकारः । प्रभा तकारः । तृतीयस्वरः । तेन हस्ति इति स्वरूपम् । शूरः पकारः । वृषघ्नः शकारः हली चकारः । कान्तिराकारः । पुष्टिरिकारः । तेन पिशाचि इति स्वरूपम् । तृतीयस्वर इकारः । देवनाथबीजं लकारः । दुर्गा कवर्गद्वितीयम् । एतेन "ओँ हस्तिपिशाचिलिखे स्वाहा" इति मन्त्रः । केचिदिति गणेशबीजं गं तेन प्रणवं त्यक्त्वा तद्देयमित्यर्थः । तदनन्तरं बीजमपीति न युक्तं पूर्वमेवदानापातात् दशाक्षरत्वविरोधाच्च । "हस्तिपिशाचि लिखे चाग्निवनिता गं तदादित" इतितत्त्वबोधे सुव्यक्तमेतत् ।

तथा न तिथिर्न च नक्षत्रं नोपवासो विधीयते ।
यथेष्टचेष्टया मन्त्रः सर्वकामफलप्रदः ॥
सर्वावस्थागतं कल्पमुच्छिष्टं मन्त्रनायकम् ।
न सिद्धादिर्निरूप्योऽत्र लक्षमेकं जपेद् बुधः ॥
अथ ध्यानं प्रकुर्वीत यथोक्तं गुरुपादकैः ।
रक्तमूर्त्तिं गणेशानं रक्ताभरणभूषितम् ।
रक्तवस्त्रं त्रिनेत्रं च रक्तपद्मासनस्थितम् ॥
चतुर्भुजं महाकायं द्विदन्तं सस्मिताननम् ।
वामे मोदकपात्रं च मुखे लम्बेन लम्बितम् ॥
दन्तं च तदधो हस्ते धारयन्तं च दक्षिणे ।
पाशाङ्कुशौ च हस्ताभ्यां जटामण्डलवेष्टितम् ॥

ललाटे चन्द्ररेखाढ्यं सर्वालङ्कारभूषितम् ।
सदा मत्तं सदोच्छिष्टमनाचान्तस्तु पूजयेत् ॥
कृष्णां चतुर्थीमारभ्य यावच्छुक्लचतुर्थिकाम् ।
सहस्रं हि जपेन्नित्यं योषिन्नियमपूर्वकम् ॥
स्नापयेन्मधुना नित्यं नैवेद्यं गुडपायसम् ।
भुक्त्वोच्छिष्टो जपेन्नित्यं गणेशोऽहं सदाप्रियः ॥
श्वेतार्केणाकृतिं कृत्वा रक्तचन्दनकेन वा ।
अङ्गुष्ठमात्रं प्रतिष्ठाप्य द्विजाग्निगुरुसन्निधौ ॥
जप्त्वा षोडशसाहस्रं सिद्धो मन्त्रो भवेद् ध्रुवम् ।

एवं चैतत् पुरश्चरणं लक्षजपाङ्गं विकल्पबोधकाभावात् । न च विनिगमकाभावः । सिद्धो भवेदिति फलसम्बन्धस्य प्रधानताबोधकत्वात् किं चान्यथापि समुच्चयस्यावश्यकत्वात् ।

योषिदिति योषिदुपगमनियमपुरस्सरमित्यर्थः न तु त्यागनियमोऽपदार्थत्वात् । अनौचित्याच्च । अनाचान्त इत्यादि सन्दंशात् । वस्तुतो योषिदुपभोगाभाव एतदर्थः । ब्रह्मचर्यंव्रत इत्याद्यग्रे षडक्षरसंवादात् । मुखेनेति लम्बितास्यमित्यर्थः ।

तथा
राज्यप्रदं गणेशानं दुःखदारिद्र्यनाशनम् ।
वह्निं संधुक्ष्य कुण्डे च सहस्रं जुहुयाद्धविः ॥
तिलं पललमाज्यं च विशिषो व्यावृतोऽभयः ।
शमीसमिद्भिर्होतव्यं बृहतीपुष्पमिश्रितम् ॥
इति ध्यात्वा गणेशानं दृढचित्तोऽभयस्तथा ।
सैक्षवेण घृतेनैव भूते वै विजने वने ॥
यस्य नाम्ना जुहोतीदं मन्त्री स ध्यानपूर्वकम् ।
स वश्यो जायते नित्यं सहस्रेणाष्टकेन च ।
किङ्करो भूमिपालोऽपि सर्वजनपदसेवितः ।
चक्रे विधानं यश्चैवं भूतिस्तस्य करे स्थिता ।
हयदन्तिसमाकीर्णं द्वारं सामन्तवेष्टितम् ॥
जायते लक्षतो नित्यं बलिदानाज्जपेन च ।
तत्र सिद्धिः सहस्रेण सिद्धार्थकगुडेन च ।
बृहतीपुष्पेन साज्येन तिलोच्छिष्टामिषेण च ।

अनावान्तो जपेन्नित्यं बलिं दद्यात् तथा परम् ।
जप्त्वोच्छिष्टः शरावे तु बुधो दद्याद् बलित्रयम् ।
एवं विधेन षण्मासात् सर्वकामफलप्रदः ।
अन्योन्यं पञ्चगव्येन सिद्धयोगे घटे सुधीः ।
बल्मीकमृद्भिः प्रतिमां कुलालचक्रमृत्कृताम् ।
राज्यदं लाभदं कल्पं गुडैः सौभाग्यदं नृणाम् ।
लवणेन पुरःक्षोभि निम्बेनारिनिसूदनम् ।
प्रतिमाविधानमेवं हि होमं कुर्यात्ततः परम् ।
मधुलाजाक्ततेनैव ऐणेन पललेन वा ।
बृहतीपुष्पसाज्येन वशमेतच्चराचरम् ॥
तस्मै मोदकपात्रं च दद्याद् विप्राय दक्षिणाम् ।
साधयेत्सर्वकर्माणि स्वयमाह गणेश्वरः ॥

व्यावृत्तो विवृतास्यः । बृहती कण्टकारिका । सैन्धवमैन्धवयुक्तम् । पूते पवित्रे । विजने जनशून्ये । भूते वैरिजने इतिपाठे भूते शत्रौचेत्यर्थः । उच्छिष्टं मधु । आमिषं मांसम् । अन्योन्यमिति परस्परं पञ्चभिर्गव्यैः । सिद्धो योगः सम्बन्धो यत्र तादृश इत्यर्थः । ऐणेन हरिणसम्बन्धिता पललेन मांसेनत्यर्थः ।

तथा उच्छिष्टस्तु जपेद्रात्रौ शय्यायां संस्थितोऽपि वा ।
भ्रूमध्ये रक्तपद्मस्थं ध्यायेद् देवं गजाननम् ॥
दक्षे पाशाङ्कुशौ वामे गुडमुष्टिकसंयुतम् ।
ध्यानेन मोहनं रम्यं देवगन्धर्वमानुषान् ॥
मोहयेद्राजिकापुष्पैस्तत्कण्टकसमन्वितैः ।
निग्रहो लौहतैलेन समिधेन हुतेन च ॥
उच्चाटयेत्तथा शीघ्रं दूर्वाबीजहुतेन च ।
एवं बहुविधं कर्म स्वयमाह गणेश्वरः ॥
राजद्वारे तथा वाटे सभायां गोत्रसंसदि ।
विवाहे व्यवहारे च संग्रामे शत्रुसङ्कटे ॥
शय्यायां विपिने वापि द्यूतेऽरिव्यसने तथा ।
ग्रामदाहे चौरविद्धे सिंहव्याघ्रादिसंकटे ॥
स्मरणाद् देवदेवस्य सर्वं वैरिद्रुतं भवेत् ।
तत्सर्वं नश्यति क्षिप्रं सूर्येणैव तमो यथा ॥

सदोच्छिष्टो गणेशानो यक्षराजो महाबलः ।
आराधितः सोपहारैः सम्यगिष्टफलप्रदः ॥
एवं कृत्वा व्यवस्थां तु तद्धनेश्वरतां गतः ।
नन्देन गोकुले जप्तो नन्दः सुखमुपागमत् ॥
भृगुकेन स्वराज्यार्थं विभीषणेन धर्मिणा ।
इन्द्रेण च स्वराज्यार्थं सच तेनेन्द्रतां गतः ॥
इमं मन्त्रं समादाय त्रैलोक्यं विचरन् मणिम् ।
पैशाचिकोऽयं विघ्नेशः कलौ शीघ्रफलप्रदः ।
अपामार्गसमिद्धोमे सौभाग्यं लभते ध्रुवम् ॥
अष्टोत्तरशतं मन्त्री अभिवन्द्याभिमन्त्रितम् ।
वानरास्थिसमुद्भूतं कीलकं मन्त्रमन्त्रितम ॥
निखनेन्मन्दिरे यस्य भवेदुच्चाटनं परम् ।
अथ वीथ्यां लिखेद् यस्य क्रयविक्रयवाधकृत् ।
निखनेच्छौण्डिकागारे तन्मद्यं विकृतं भवेत् ।
वेश्यागृहे तु निखनेद् ग्राहकं लभते न सा ॥
कन्यागृहे तु निखनेन्न विवाहो भवेद् ध्रुवम् ।
मानुषास्थिसमुद्भूतं कीलकं मन्त्रमन्त्रितम् ॥
निखनेन्मन्दिरे यस्य मरणं तस्य निश्चितम् ।
उद्धृतेषु भवेत् स्वास्थ्यमिति सर्वस्य सम्मतम् ॥
यस्य नाम्ना जपेन्मन्त्रं सहस्रं स वशो भवेत् ।
सहस्रपञ्चजापेन लोभयेत्तु वरां स्त्रियम् ॥
सहस्रषट्कहोमेन राजा सद्यो वशो भवेत् ।
लक्षजापेन राजैव द्विलक्षं राजपत्नयः ॥
दशलक्षेण तद्राष्ट्रं वशं च स्याच्चराचरम् ।
अणिमादि-महासिद्धिः कोटिजापान्न संशयः ॥
खेचरत्वं भवेन्नित्यं सर्वज्ञत्वं च जायते ।
मन्त्रं लिखित्वा शिरसि कण्ठे वा ध्रियते यदि ॥
सौभाग्यं सर्वरक्षा च भवेत्तस्य सुनिश्चितम् ।
उच्छिष्टमन्त्रराजस्य प्रभावो वर्णितो मया ॥

न शक्यते मया वक्तुं कल्पकोटिशतैरपि।
किमन्यैर्बहुभिर्मन्त्रैरङ्गोपाङ्गैः सुविस्तरैः॥
विघ्नं वशीकरोत्येव बीजं तु कुलनायकम्।
सारभूतमिमं मन्त्रं न देयं यस्य कस्यचित्॥
गुह्यं सर्वागमे देयं हितबुद्ध्या प्रकाशितम्।
उच्छिष्टस्याशुचिर्भूत्वा जपपूजनमाचरेत्॥
अनुच्छिष्टो न सिद्ध्येत तस्मादेवं समाचरेत्।

केषाञ्चिन्मते पूजा नास्ति मनसा जपेत्। केषांचिन्मते कराङ्गन्यासौ न स्तः। गणेशोऽहमिति पूर्वोक्तमूर्त्तिं चिन्तयेत्।

गर्गमते विजने वने रक्तचन्दनानुलिप्तस्ताम्बूलोच्छिष्टमुखो जपेत्। केषांचिन्मते सर्वालङ्कारभूषितः सर्वावस्थासु जपेत्।

भृगुमते फलमश्नन् जपेत्। विभीषणमते मांसनैवेद्यं दत्त्वा तदेव खादन् जपेत्। योषिन्नियमवानानाचान्तो जपेत्।

विशेषेण बलिं दद्यात् संध्यासु च विशेषतः।

अथ पूजापद्धतिः। पैशाचिकमन्त्रस्य निवृतागायत्रीछन्दः सुग्रीवाद्या ऋषयः उच्छिष्टगणेशो देवता सर्वकामार्थे विनियोगः। ततः सप्रणवं कराङ्गन्यासौ कुर्यात्। नासाग्रं पश्यन् ध्यायन् जपेत्। ततोऽष्टदलकमलं लिखित्वा मूलेनार्घपात्रं संपूर्य दशधा जप्त्वा तेनोदकेनात्मानं पूजोपकरणं चाभ्युक्ष्य पुष्पं गृहीत्वा करकच्छपिकां बद्ध्वा लोहितपद्मोपरि पद्मासीनं रक्तवसनं सर्वालङ्कारभूषितं त्रिनेत्रं चतुर्भुजं दक्षोर्द्ध्वहस्तेनाङ्कुशं तदधोहस्तेन पाशं वामोर्द्ध्वहस्तेन मोदकपात्रं तदधोहस्तेन दन्तं धारयन्तं लम्बास्यं द्विदन्तं सहास्यं जटाजूटधारिणं चन्द्रशेखरं गजमुखं ध्यात्वा करस्थपुष्पेण शिरसि संपूज्य वामनासापुटेन बाह्याष्टदलकमलमध्ये स्थापयेत्। अर्घादिकं कृत्वा त्रिः पूजयेत्। ततः ओँ वक्रतुण्डायस्वाहा एकदन्त—लम्बोदर—विकट—विघ्न—अविघ्न धूम्र—गजवक्त्र-विनायक-गणपति-अन्तरिक्ष-हस्तिमुखान् परितः ततो देवं त्रिः संपूज्य नैवेद्यमुपनीय दत्त्वा "उच्छिष्टगणेशाय महाकालाय बलिर्नमः फट्स्वाहा ओँ क्रोँ क्रोँ ह्रीँ क्रँ क्रँ क्रँ गं फट् स्वाहा" अनेन समोहितसिद्ध्यर्थं विशेषतो बलिं दद्यात्। पुष्पमेकं दक्षिणदिशि क्षिप्त्वा क्षमस्वेति विसर्जयेदिति।

॥ इति तन्त्रकौमुद्यामुच्छिष्टगणेशपटलः॥

तथा

शक्तिस्तारं हस्तिमुखं प्रलम्बोदरशब्दवत् ।
ङेन्तमुच्छिष्टशब्दाढ्यं महात्मानं तथा वदेत् ॥
अङ्कुशदीर्घरक्ताढ्यं पार्श्वं विन्दुयुतं वदेत् ।
शक्तिङेन्तमथोच्छिष्टं स्वाहाष्टविंशदर्णवान् ॥

तेन "ह्रीँ ओँ हस्तिमुखाय प्रलम्बोदरायोच्छिष्टमहात्मने क्रोँ प्रां ह्रीँ उच्छिष्टायस्वाहा" इतिमन्त्रः ।

"ओँ हस्तिमुखाय लम्बोदरायोच्छिष्टमहात्मने आँ क्रोँ क्रोँ श्रीँ खेँ खेँ उच्छिष्टाय स्वाहा" इति मन्त्र एकोनत्रिंशदक्षर इति केचित् ।

अथवक्रतुण्ड मन्त्राः ।

वक्रतुण्डाय कवचं दीर्घमेष षडक्षरः ।
वक्रतुण्डाय हूँ इति मन्त्रः ॥

तथा

वक्रतुण्डायमायान्ते नमश्चाष्टाक्षरो भवेत् ।
वक्रतुण्डाय ह्रीँ नमः इति मन्त्रः ॥

तथा शुक्रसंवादे—

मन्त्राणां युगभेदेन शक्तिभेदः प्रजायते ।
वक्ष्यामि सततं गुह्यं कलौ सिद्धिकरं नृणाम् ॥
वैनायकं महामन्त्रं यथा व्यासान्मया श्रुतम् ।
शुद्धासने समासीनं सुरासुरनमस्कृतम् ॥
सर्वे शुक्रं समासाद्य मुनीनां मुनयो गुरुम् ।
ऊचुः प्राञ्जलयो भूत्वा नमस्यन्तः सुरर्षभम् ॥
भगवन् कलिदोषेण हीनसत्त्वाः प्रविह्वलाः ।
दयाबहिःकृतास्सर्वे तपः श्रद्धा विवर्जिताः ॥
यथा मोहादिषु पराः स्वाध्यायस्य श्रुतस्य च ।
न च वेदाग्निहोत्रस्य तथोपायं वदस्व मे ॥
एवमुक्तो मुनिवरः शुक्रो वेदविदांवरः ।
चिन्तयामास युक्तात्मा प्रत्युपायं तपस्विनाम् ॥
एवं चिन्तयतस्तस्य महर्षेर्भावितात्मनः ।
प्रादुर्बभूव मनसि मन्त्रराजः षडक्षरः ॥
तप्तचामीकरप्रख्यो वक्रतुण्डाय हूमिति ।
चिन्त्यमानस्य मन्त्रस्य जपतश्च षडक्षरम् ॥

षडङ्गानि क्रमेणैव प्रादुरासन् मुनीश्वराः ।
मन्त्रस्याक्षरषट्केण सलवेन षडङ्गकम् ॥
हृदये वै नमस्कारं स्वाहाकारं च मूर्धनि ।
वषडक्षरं शिखायां तु हूंकारं कवचे न्यसेत् ॥
वौषट्कारं च नेत्राभ्यां फडस्त्रायेति वै ततः ।
लब्ध्वा मम महामन्त्री षडङ्गाङ्गषडक्षरम् ॥
सहस्रकृत्वः संचिन्त्य जजाप भृगुनन्दनः ।
जपान्ते सततः पश्चात् रक्तवस्त्रं चतुर्भुजम् ॥
लम्बोदरं त्रिनयनं पाशाङ्कुशधरं विभुम् ।
वरदाभयहस्तं तं चलत्कर्णसचामरम् ॥
स तुष्टाव परं स्तुत्या भृगुजो गिरिजात्मजम् ।
तं दृष्ट्वा वरदं देवं व्योमस्थं श्यामरूपिणम् ॥
तं क्रीडमाणं गगने गणेशं तुष्टाव मन्त्रेण षडक्षरेण ।
स संस्तुतो देववरस्य सूनुः शुभं भृगोर्वाचमुवाच हृष्टः ॥
तुष्टोऽस्मि ते शुक्र षडक्षरस्य जपेन मां पश्य गणाधिनाथम् ।
जानीहि मां भार्गव वक्रतुण्डं षडक्षरात्मानमनाथबन्धुम् ॥
ब्रवीमि ते मन्त्रवरं सकल्पं साङ्गं सपौरश्चरणंससिद्धम् ।
ऋषिं च देवं च षडक्षरस्य छन्दश्च शक्तिं च शृणु त्वमेव ॥
ऋषिस्त्वमेवास्य विधेयभावं मां विद्धि देवं विधिना गणेशम् ।
अनुष्टुभं शान्तिकपौष्टिकाद्यैराथर्वणं मन्त्रमिमं पठन्ति ॥

त्वमेव शुक्र इत्यर्थः । एवं चास्य मन्त्रस्य भार्गवऋषिरनुष्टुप्छन्दो वक्रतुण्डो देवताऽभीष्टार्थे विनियोगः ।

तथा
रायस्पोषस्य दातायं निधिदो रत्नधातुमान् ।
रक्षोघ्नो वने गहने मन्त्रराजः षडक्षरः ॥
फडन्तेन चतुर्थीषु पक्षयोरुभयोरपि ।
अपूपानां शतं जुह्वन् वत्सराल्लभते धनम् ॥
इत्याख्यातं महामन्त्रं गुरोर्लब्ध्वा समाहितः ।
ब्रह्मचर्यरतः शान्तः सत्यवाग् गुरुपूजकः ॥
ब्रह्मचर्यरतः शान्तो हविरश्नन् समाग्रतः ।
जपन् द्वादशसाहस्रं तत्पुरश्चरणं भवेत् ॥

अङ्गारकदिने प्रातः चतुर्थ्यां वा समाहितः ।
अमितां शाश्वतीं लक्ष्मीं लभते नात्र संशयः ॥
अभ्यर्च्य गन्धपुष्पाद्यैर्हविषा पायसेन च ॥
भोजयेन्मन्त्रसिद्ध्यर्थं मन्त्रदेवप्रदं गुरुम् ॥

अथाग्निकुण्डं चतुरस्ररूपं समन्ततो वा सुसमं स मन्त्री ।
शिवालये वाथ गृहे स्वकीये कुण्डं विदध्याच्छुचिमत्प्रदेशे ॥
कृत्वा समिद्धाग्निमथाददीत हरेदनूचान गृहादथो वा ।
अङ्गानि विन्यस्य यथाप्रदेशं प्राणांस्त्रिधायम्य तथारभेत ॥
ततोऽग्निमादाय यथाक्रमं तु दर्भैः परिस्तीर्य विधानयुक्तः ।
तत्राग्निमध्ये भुजगोपवीतं लम्बोदरं भास्वरमेकदन्तम् ॥
पद्मासनारूढमयुग्मनेत्रं चतुर्भुजं हारकिरीटयुक्तम् ।
केयूरिणं हेमनिभाम्बराढ्यमावाहयेन्मां मनसा विचिन्त्य ॥
तमर्घ्यगन्धादिभिरर्चयित्वारभेत वह्निं परिषिच्य पश्चात् ।
ओंकारपूर्वेण षडक्षरेण स्वाहाकृदन्तेन समाहितेन ॥
आज्याहुतीनां जुहुयात्सहस्रमष्टोत्तरं सिद्धिरियं मयोक्ता ।

समन्ततो वा सुसमं मण्डलाकारमित्यर्थः । त्रिधायम्येति प्राणायामत्रयं कृत्वेत्यर्थः । स्वाहेति स्वाहाकृत् स्वाहाकार इत्यर्थः । हृदितिपाठे स्वाहानमश्चेत्यर्थः ।

नित्यं हि मद्ध्यानपरो ममाग्रे जपेत् सहस्रं त्रिशतं शतं वा ।
अष्टोत्तरं मन्त्रविदप्रमत्तो लभेत लक्ष्मीमचिरेण बह्वीम् ॥
चित्तप्रसादो मनसश्च तुष्टिरुदारता स्वप्नपराङ्मुखत्वम् ।
स्वप्ने तु यानाद्यवलम्भनं तु सिद्धस्य चिह्नानि भवन्ति सद्यः ॥
ब्रवीमि मद्भक्तिपराय शुद्धमहानिधिप्राप्तिकराभ्युपायम् ।
सिद्धोदनेन त्रिशतं त्रिमासं मन्त्रेण योऽग्नौ जुहुयान्ममाग्रे ॥
स भाजनं सर्वमहानिधीनां भवेद्यथा रेणुरयो यथान्यः ।
यो वा ममाग्रे पृथुकैर्गुडाक्तैः सनारिकेरैश्च मरीचयुक्तैः ।
अग्नौ सहस्रं जुहुयात् स मन्त्री वरं लभेताक्षयमद्भुतं च ॥
इदमतीव रहस्यमथाद्भुतं शृणु वदामि महानिधिवर्धनम् ।
अभिनवैः सितशालिमयैः शुभैर्मरिचसैन्धवजीरकमिश्रितैः ।
बहुगुणैः सुरभीघृतसंप्लुतैः सुरसवद्भिरपूपसहस्रकैः ।

मम दिने जुहुयान्मम सन्निधौ स लभतेऽसुचिरेण महानिधिम् ।
सम्राड्वशीकर्त्तुमभीप्सते यः स तस्य नामाक्षरसंपुटेन ॥
मन्त्रेण मन्त्री शुभमादधीत वह्नावपामार्गसमित्प्रसूनम् ।
फलैः सुपक्वैः पनसप्रसूतैराम्रोद्भवैर्वा कदलीफलैर्वा ॥
कृत्वा सहस्रं मम सन्निधौ तु नारीं नरं वा वशमानयेत् सः ।
कन्याभिकांक्षी मनसा विचिन्त्य यां कन्यकां मन्त्रवरेण लाजैः ।
अग्नौ सहस्रं जुहुयान्ममाग्रे तामेव कन्यां लभतेऽचिरेण ॥
आज्याहुतीनां जुहुयात्सहस्रं क्षीराहुतीनां च सहस्रमेव ।
दूर्वाहुतीनां जुहुयाच्च लक्षं मृत्युं जयत्यत्र न संशयोऽस्ति ॥
मधुत्रयाभ्यक्तसमित्सहस्रं पानीयमग्नौ जुहुयाज्जयार्थी ।
विजित्य मासेन रिपूनशेषान् स मोदते चात्तरिपुर्यथेन्द्रः ॥
विभीतकानां जुहुयात्सहस्रमष्टोत्तरं लोहितमिश्रितानाम् ।
अग्नौ निशायां प्रवरे श्मशाने स नाशयेच्छत्रुकुलं समग्रम् ॥
भूमौ तु शत्रुप्रतिमां विलिख्य प्रज्वाल्य वह्निं तदुरः प्रदेशे ।
सिद्धार्थवर्यैर्जुहुयात् सहस्रं स मारयेत् सप्तदिनैश्च शत्रून् ॥
क्रुद्धं गणेशं घनकालवर्णमरिं गृहीत्वा निजपुष्करेण ।
क्षिपेत्तमग्नौ वराबामुखे स्थे ध्यायन्ममात्मानमनन्यभावः ॥
जपेत्सहस्रं त्रिदिनेन शत्रूनुच्चाटयेत् स्फीतमपि स्वदेशात् ॥
सर्वाभिचारप्रशमार्थमेव ब्रवीमि ते शुक्र महाभिषेकम् ।
समुद्रगां प्राप्य नदीं सुपुण्यां तोयं गृहीत्वाञ्जलिनाभिमन्त्र्य ॥
सहस्रकृत्वो निजमूर्ध्नि सिञ्चन् हरेत् स मन्त्री सकलानघौघान् ॥
अश्वत्थमालम्ब्य शनैश्चरस्य दिने सहस्रत्रितयं जपेद् यः ।
ध्यायेत् स मां तत्र वनस्पतिस्थं सर्वग्रहान् व्याधियुतान् निहन्ति ॥
यो वृष्टिकामो नियतस्त्रिरात्रं मामर्चयित्वा शुभगन्धपुष्पैः ।
सुवेतसीनां समिधां सहस्रमग्नौ क्षिपेदाशु लभेत वृष्टिम् ॥
धान्याभिकांक्षी जुहुयाच्च धान्यैरन्नाभिकांक्षी जुहुयात् सदन्नैः ।
वस्त्राभिकांक्षी कमलोत्पलाद्यैः क्षत्राभिकांक्षी लवणैर्गुडाक्तैः ॥
अतः परं भार्गव ते ब्रवीमि वन्ध्याचिकित्सां जगतो हिताय ।
मामर्चयित्वा पृथुकैरपूपैः फलोत्तमैः पायसमोदकाद्यैः ॥
मन्त्री हरिद्रामथ सैन्धवं च वचां च निष्कार्धतदर्धभागम् ।

कृत्वा च मन्त्रेण निपिष्य चूर्णं मूत्रे गवां वै प्रसृतिप्रमाणे ॥
निःक्षिप्य चूर्णं किल तत्र विद्वान् सहस्रकृत्वोऽञ्जलिनाभिमन्त्र्य ।
स्नातामृतुस्नानदिने विशुद्धां शुक्लाम्बरां मत्पुरतो निधाय ॥
तत्पाययित्वात्यचिरेण वन्ध्या सुतं प्रसूते चिरजीविनं सा ।
एवं पिबेद् या नियमेन वन्ध्या प्रागेव वर्षाल्लभते च गर्भम् ॥
उपोष्य सोमग्रहणे च विद्वान् सूर्यग्रहेऽभ्यर्च्य तथाभिमन्त्र्य ।
पलं गृहीत्वा कपिलाघृतस्य चूर्णं वचायाश्च तदर्धभागम् ॥
सहस्रकृत्वोऽप्यभिमन्त्र्य मन्त्री मत्सन्निधौ तच्च पिबेदशेषम् ।
अवाप्य मेधां महतीं क्रमेण गद्यं च पद्यं रुचिरं ब्रवीति ॥
जानाति शास्त्रं किल दृष्टिमात्राल्लभेत वाचस्पतितुल्यमेधाम् ।
अतः परं किं बहुना विविच्य ब्रवीमि मत्प्रीतिकराद्युपायम् ॥
पद्मासनं स्वस्तिकमम्बुजं च स्वकासनं देहगतं विविच्य ।
तत्कर्णिकायां स्फटिकप्रकाशं विचिन्तयेन्मन्त्रवरस्वरूपम् ॥
षडक्षरं बद्धशिखासनाङ्गं ध्यायेद् दलेष्वष्टसु चाष्टशक्तीः ।

पद्मासनं स्वस्तिकं बध्वेति शेषः । स्वकासनं देवतासनम् ॥

अणिमा महिमा चैव लघिमा गरिमा तथा ।
प्राकाम्यमीशिता चैव वशिता प्राप्तिरेव च ॥
पूर्वादिक्रमतश्चैव अष्टशक्तीः प्रपूजयेत् ।
रतिरव्याहता कामा लम्बा पिष्टा वरप्रदा ॥
बुभुक्षा जीर्णिकेत्यादौ गणनाथस्य शक्तयः ।
बटुको वामनश्चैव हाटकश्च महोदरः ॥
भद्रो मालीवरो राम इत्येते शक्तिचारकाः ।
एवं स्वनाभौ हृदये गले वा आस्ये भ्रुवोरन्तरयोर्ललाटे ।
समस्तदेहेष्वथवा शिखाग्रे विचिन्तयेन्मां सवनत्रयेऽपि ॥
एवं हि सर्वान् विनिहत्य दोषान् मासेन निर्वाणमुपैति नूनम् ।
इमं च ते मन्त्रवरं हितार्थं ब्रवीमि संतुष्टिकरं द्वितीयम्
षडक्षरं गुह्यतरं नमोन्तं वन्द्यं कलौ सिद्धिकरं नराणाम् ॥
एतेन मां मङ्गलको महर्षिः सन्तोषयन् सागरतीरभूमौ

तस्मादृषिं मङ्गलकं तमेव षडक्षरस्यास्य समामनन्ति ।
अङ्गानि पञ्चैव न नेत्रमत्र सर्वं च पूर्वेण समानमन्यत् ॥
एतावुभौ मन्त्रवरौ सुगुह्यौ मम प्रियौ वेदरहस्यभूतौ
साङ्गौ सकल्पौ समरूपदेशौ कार्त्स्न्येन यो वेद स वेद वेदान् ॥

षडक्षरस्येति तन्मूलकत्वेनोक्तमष्टाक्षरस्येत्येवं क्वचित्पाठः । अन्यदिति षडक्षरस्यैव ध्यानादिकमस्यापि मन्त्रस्येत्यर्थः ।

इदं च ते गुह्यतमं ब्रवीमि गोचर्ममात्रामुपलिप्य भूमिम्
विकीर्य धान्यप्रकराणि तत्र संस्थाप्य नव्यञ्जनपूर्णपात्रम् ॥
तस्योपरिष्टात् कपिलाघृतेन पूर्णं प्रतिष्ठाप्य नवं शरावम् ।
आरोपयेत्तत्र शरावमध्ये मन्त्रद्वयेनान्यतमेन दीपम् ॥
आवाह्य गन्धादिभिरर्घ्यपुष्पैः सुसंयतो मन्त्रिवरो यथावत् ।
स्नातां कुमारीमथवा कुमारमभ्यर्च्य दीपस्य पुरो निधाय ॥
ध्यात्वा जपन् मन्त्रवरं स मन्त्री मां तत्र दीपे द्विजवर्यरूपम् ।
पश्येत् कुमारी यदि वा कुमारो भव्यं च भूतं यदि वा विनष्टम् ।
मनोगतं वा सकलं ब्रवीति मन्त्रप्रभावेन न संशयोऽस्ति ।
एवं क्रमप्राप्तमतीवगुह्यं विद्याद्वयं तत्कथितं मुनीन्द्रैः ।
एतच्च यो वेत्ति गुरूपदेशाद् गणेशसायुज्यमुपैति सद्यः ॥

॥ इति तन्त्रकौमुद्यामुच्छिष्टगणेशादिपटलपरिच्छेदः ॥ १६ ॥

अथ मञ्जुघोषमन्त्रः

मेरुपृष्ठे सुखासीनं देवदेवं जगद्गुरुम् ।
शङ्करं परिपप्रच्छ पार्वती परमेश्वरम् ॥
पार्वत्युवाच । भगवन् सर्वधर्मज्ञ सर्वशास्त्रागमादिषु ।
वाञ्छितार्थप्रदो लोके मञ्जुघोषं ब्रवीषि मे ॥
शङ्कर उवाच । शृणु देवि महामन्त्रं साधकानां सुखावहम् ।
यज्ज्ञात्वा जडधीः प्रायो वाचस्पतिसमो भवेत् ॥
अङ्गन्यासकरन्यासबहिर्न्याससमन्वितात् ।
जपात् सिद्धिप्रदं मन्त्रं विनाहोमार्चनादिभिः ॥
जपेद् वा जापयेद् वापि साधको विधिपूर्वकम् ।
सर्वज्ञत्वमवाप्नोति सत्यं सत्यं हि पार्वति ॥
कार्त्तिकेयमुखं यावत् तावल्लक्षं जपेन्मनुम् ।
सर्वशास्त्रेषु सोऽत्युच्चैर्वाचस्पतिसमो भवेत् ॥
बृहदारुण्यको नाम ऋषिश्छन्दो विराट् स्मृतम् ।
देवता मञ्जुघोषाख्या भुक्तिदा चैव मुक्तिदा ॥
जपेत् सिद्धिप्रदं सद्यो वैष्णवं सात्त्विकात्मकम् ।
शैवसिद्धिप्रदं सद्यस्तामसं समुदाहृतम् ।
मन्त्रोद्धारमाह विष्ण्वग्निपाशीशशियुक्च धीश्च
षड्वर्णमन्त्रो जगतां प्रदिष्टः ।
सर्वज्ञता सदसि वाक्पटुतां प्रसूते
वेदान्तवेदनिरतश्च वसुप्रदं स्यात् ॥

विष्णुः अकारः । अग्नी रेफः । पाशी वकारः । शशी सकारः । तेनयुक्तश्चकारः । धीरिति स्वरूपम् । तेन "अरवचसधीः" इति मन्त्रः ।

आशु मन्त्रं जपेन्मन्त्री स्वमन्त्रं यदि साधकः ।
बलिनैवेद्यभुक् साक्षाद् बृहस्पतिरिवापरः ।
मासत्रयेण यः कुर्यात्पुरश्चर्यात्रयं नरः ।
तस्यापि वदनाद् वाणी निःसरेद् रसवर्षिणी ॥
गोमुण्डे गिरिपृष्ठे च यत्नेनापि च गोमये ।
यन्त्रे मन्त्रं लिखित्वादौ पश्चान्मन्त्रं लिखेत्पुनः ॥

ध्यानमन्त्रं विधायादौ भावयित्वा चिरं सुधीः ।
निर्जनस्थानमासाद्य जपेन्मन्त्रमधोमुखः ॥
पौर्णमासीं समारभ्य कुन्दस्य कुसुमैः शतैः ।
अष्टाधिकैश्च संपूज्य जपेन्मन्त्रं चतुः पथे ॥
त्रिमुण्डारोहणं कृत्वा निशीथे मुक्तकुन्तलः ।
षण्मासमात्रं जपति यदि मन्त्री विधानवित् ॥
बृहस्पतिसमो वक्ता नात्र कार्या विचारणा ।
कुक्कुरस्य च मुण्डैकं मुण्डं क्रोष्टुवृषस्य च ॥
त्रिमुण्डमेतद् विख्यातं साधकानां सुखावहम् ।
आसनं चैव गोमुण्डे वामे कुक्कुरमुण्डकम् ।
दक्षिणे च शिवामुण्डं कृत्वा पूजां समाचरेत ॥
अर्धचन्द्राकृतिः पश्चात् वामे चन्द्राकृति स्फुटम् ।
तत्र मन्त्रं लिखेत् पूजा कुन्दस्य कुसुमेन च ॥
सव्येन पाणिकमलेन जपादिपूजा शृङ्गारशीलनविधिः खलु दक्षिणेन ।
राकासुधाकरमरीचितुषारहारगौरं चतुष्पथतटे वृषमस्तकस्थम् ॥
संचिन्त्य कुक्कुरशिवाशिरसाधिरूढ़ः कुन्देन साधकतमो जयति प्रकामम् ।
गोचर्मरक्तरचितं रसकोणमात्रं चक्रं तपोपि नवकुंकुमरोचनाभिः ॥
निर्माय सव्यविधिना विजने श्मशाने संपूजयेद् वनभवैश्च नवैः पलाशैः
संपूर्णमण्डलतुषारमरीचिमध्यबालं विलम्बिचिकुरं वरखड्गहस्तम् ॥
उद्दामकङ्कणवहं वरपुष्पकाढ्यं नग्नं यजेत् क्षतजपद्मदलायताक्षम् ।
अरिष्टगेहे निशितैलमेवमादाय यत्नात्करपल्लवेन ।
तेनाञ्जितं काञ्चनपुष्पमेव निवेद्य तस्मै रजति प्रकामम् ।
अशोकशाखोटतरोश्च मूले विलिप्य पादौ वदनामृतेन ।
त्रिमुण्डमात्र स्थित एव रात्रौ जपेद् यथाशक्ति च पौर्णमास्याम् ॥
लकुचविटपिमूले मुडमात्रैकरूढ़ो हिमकरकरगौरं चिन्तयित्वा निशीथे ।
यदि जपति जड़ात्मा लक्षमेनं त्रिपदं भवति जगति साक्षात् गीःपतिर्नात्र चित्रम् ॥
भुक्त्वान्नमेव कदलीतरुपुष्पजालैः
मुण्डत्रये विरचितासनसन्निविष्टः ।
राकाविधूदयमुपेत्य करोजित पूजां
यः सोपि सूर्य इव वाक्पतिरीश्वरः स्यात् ॥

जिह्वां विसृज्य निजपाणिसरोरुहाभ्यां वाणप्रसूनशतकैः परिपूज्य गोष्ठे।
यो वै जपेदनुदिनं रसलक्षमात्रमीशं जयेत् किमुत वाक्पतिमेकवक्त्रम् ॥

वाण पोतागेँठी ।

स्थित्वा निशीथसमये रजकस्य काष्ठे खङ्गान्वितो यजति कल्यपि पौर्णमास्याम् ।
संपूर्णमासमथवा तरसापि तस्य वक्त्राद् विनिस्सरति गीरमृतायमाना ॥
यो दन्तधावनकृतैश्च करञ्जकाष्ठैस्तस्यापि गीःपतिवचो नियतं सुलभ्यम् ॥

तिलतैलेन मतिमान् कुन्दकैरवपुष्पकैः ।
यत्नतो जुहुयान्मन्त्री सर्वसिद्धिमुपालभेत् ॥

मञ्जिष्ठतोयसुरसासितभानुपुष्पैः स्वीयाङ्गशोणितयुतः सम कुष्ठकैश्च ।
कृत्वा ललाटफलके तिलकं जपस्थो विद्यावबोधविषयेन च गीःपतिः स्यात् ॥

तोय राव इति ख्यातम् । सितभानुः श्वेतार्कः । कुष्ठं कूढ़ इति प्रसिद्धम् ।

मन्त्रान्तमाह— शृणु देवि महामन्त्रं सप्तार्णमषडर्णकम् ।
सकृदुच्चारणादेव मूको भवति पण्डितः ॥
रविर्बिन्दुसमायुक्तो जान्तो वान्तोऽग्निशान्तियुक् ।
क्षकारः पृथिवी चाग्निर्बिन्दुः शान्तिश्च उद्धृतः ।
सप्तवर्णो मनुः प्रोक्तो मन्त्रिणां कविताकरः ।
यस्य संकीर्तनान्मन्त्री वाचस्पतिरिवापरः ।
शिशुतरवरकान्तिक्लान्तनीलाम्बुदाभं
विकचसरसिजाभ्यां पुस्तकं कर्पकं च ।
स्मितसुविशदवक्त्रं पञ्चचूडं त्रिनेत्रं
कुमतिदहनदक्षं मञ्जुघोषं नमामि ॥
षड्दीर्घभाजा युक्तेन कुर्यादङ्गानि साधकः ।

रविः मकारः । जान्तो झकारः । वान्तो लकारः । शान्तिरीकारः । पृथिवी लकारः ।
एवं "मंझलरींक्षलरीं" इति मन्त्रः । "मंझरक्षररीं" इति षड्वर्ण इति निबन्धारः ।

एवं ध्यात्वा जपेद्देवि वर्णलक्षं समाहितः ।
तद्दशांशं प्रजुहुयात् सर्षपैर्लोणमिश्रितैः ॥

ऋषिः कण्वो विराट् छन्दो देवता बटुकःस्मृतः ।
मातृकोक्ते यजेद् देवं वागीशं देवमन्वहम् ॥
आदावङ्गानि संपूज्य पश्चाच्छक्तीरिमा यजेत् ।
योगा सत्या च विमला ज्ञाना बुद्धिः स्मृतिः पुनः ।
मेधा प्रज्ञा च पत्रेषु मुद्रापुस्तकधारिणीः ॥
लोकपाला बहिः पूज्यास्तेषामस्त्राणि तद्बहिः ।
पीत्वा तन्मन्त्रित तोयं सहस्रं प्रत्यहं जपेत् ।
महाकविर्भवेन्मन्त्री मासेन तु न संशयः ॥
आचरेत् कुत्सिताचारं भक्षयेद् वामबाहुना ।
प्रदीपोच्छिष्टतैलेन विलिपेद्गात्रमन्वहम् ॥
परिधानं सदा कुर्यात् केवलं रात्रिवाससा ।
निशि निशि बलिमस्मै भुक्तमन्नं प्रदद्या-
द्धृदयमनुगलान्ते मन्त्रजापं वितन्वन् ।
भवति नृपतिपूज्यो योषितां प्रीतिपात्रं
भवति खलु कवीनामग्रणीः पण्डितश्च ॥
शक्रत्स्थाने सदा कुर्यात् पूजनं जपनं हि तत् ।
काव्यार्थी कुरुते काव्यं धनार्थी प्राप्नुयाद्धनम् ।
कवितामाहरेत् पुंसामामर्दनविजृम्भिनीम्
सर्ववेदागमादीनां व्याख्याता जायतेऽचिरात् ।
मनोरस्य समो नास्ति ज्ञानैश्वर्यप्रदो परः ॥
तत्त्वबोधे··· श्रद्धया जायते सिद्धिरिहलोके परत्र च ।
श्रद्धाहीने न देवेशि सिद्धिर्जन्मशतैर्भवेत् ।
एतासामपि विद्यानां जपहोमे च तर्पणे ।
स्वेच्छाविरचितं वर्त्म तत्त्वबोधान्निबोध मे ॥
तत्त्वबोधस्य हृदये यद् यत् संप्रतिपद्यते ।
तत्तद् देव विजानीयाद् देवताया श्चिकीर्षितम् ॥
॥ इति भैरवीतन्त्रे मञ्जुघोष—पटलः ॥

अथ पिशाचिनीमन्त्राः ।

कहयुग्मं कालिके च गृह्ययुग्मं तथैव च ।
पिण्डं पिशाचिस्वाहेति नृपार्णः कथितो मनुः ॥

ध्यायेत पिशाचिवदनां चलशूलहस्तां
श्यामां सुदीर्घां युवतीं त्रिनेत्राम् ।
क्रुद्धां विवर्णां तनुवृत्तमध्यां
गुञ्जाफलैः कल्पितहारयष्टिम् ॥
एकविंशद्दिनं यावदुदयास्तमयं जपेत् ।
नित्याहारं स्वमाहारं पिण्डं हर्म्योपरि क्षिपेत् ॥
त्रिसप्ताहेन तुष्टा च शय्यां गत्वा पिशाचिनी ।
पञ्चविंशतिदेवानां कथां च कथयिष्यति
त्रिंशद्दिनैश्च देवेशि जम्बूद्वीपकथां नयेत् ।
द्वित्रिंशता पुनः कर्णे मर्त्यवार्त्ताकथां नयेत ।
त्रित्रिंशता तथा गौरि त्रैलोक्यं श्रावयेद्ध्रुवम् ।
त्रिस्वादबलिदानेन सर्वं वदति तत्क्षणात् ॥
सभायां यदि संघाते द्यूते च रिपुसंसदि ।
सर्वं कथयति क्षिप्रं नूनं तुष्टा पिशाचिनी ॥
केनापि नैव दृश्या सा साधकस्तां प्रपश्यति ।
इति कर्णपिशाच्यास्तु मया कल्पः प्रकाशितः ॥
न क्वापि च त्वया देवि प्रकाश्या सर्वदुर्लभा ॥
इति पिशाचिनीपटलः

इति तन्त्रकौमुद्यां श्रीदेवनाथकृतायां मञ्जुघोषादिपटलपरिच्छेदः ॥१७॥

अथ फेत्कारिणीतन्त्रे भूतिनीमन्त्राः ।

आद्या विभूषिणी[1] देवी परा कुण्डलधारिणी[2] ।
हारिणी[3] सिंहिनी[4] चैव हंसिनी[5] च ततो नटी[6] ॥
चेटी[7] कामेश्वरी[8] चैव प्रोक्ता देवी रतिप्रिया[9] ।

१क्रोधास्त्रद्वयमायान्ते भूतिनी ज्ञस्त्रिकूर्चतः ।
तारलज्जाद्वयादस्त्रद्वयान्ते च विभूषिणी ॥
क्रोधद्वयान्ते मन्त्रोऽयं विभूषिण्या उदीरितः ।

क्रोधो हूँ । हूँ क्रोध इति तन्त्रे परिभाषणात् । कूर्चोऽपि स एव । क्रोमिति कश्चित् ।

कर्त्रीं चैव करे परे नरशिरस्तुङ्गाकृतिर्भीषणा ।
दन्तान्तर्गतमांसशोणितरसा संसक्तभूतव्रजा ॥
कालश्यामलबालशालविटपव्यालम्बिपृष्ठक्षमा ।
यस्याः केशकुलाखिलमहीशैलास्तु सा रक्षतु ॥
एकवृक्षतटं गत्वा यामिन्यां प्रवसन् त्र्यहम् ।
जपेदष्टसहस्रं तु ध्यायन्नव्यग्रमानसः ॥
जपान्ते यजनं नाम्ना पुरधूपं निवेदयेत् ।
प्रजपेदर्धरात्रे तु समायाति विभूषिणी ॥
चन्दनोदकमिश्रेण दत्तोर्घस्तुष्यति ध्रुवम् ।
माता वा भगिनी भार्या हृष्टा भवति कामिता ॥
करामलंकृतं कृत्वा माता भूत्वा जगत्त्रयम् ।
शताष्टपरिवारस्य ददात्यञ्जनभूषणम् ।
भगिनी चेन्महाभोगान् सहस्रं भोजनादपि ॥
ददाति स्त्रियमानीय दिव्यं रसरसायनम् ।
भार्या चेत् पृष्ठमारोप्य स्वर्गं नयति यच्छति ॥
दीनाराणां सहस्रं तु रसं चैव रसायनम् ।
सर्वा श्रीः पूरयत्येव सदा देवी विभूषिणी ॥१॥

२ ध्रुवमायास्त्रयुगलात् प्रोक्ता कुण्डलधारिणी ।
त्रिकूर्चं ज्ञः समाख्यातो मनुः कुण्डलधारिणी ॥
कर्णे कुण्डलधारिणी शशिमुखी लीलावती सस्मिता

शैलश्रोणिविलम्बिकाञ्चिविततव्यामुग्धलोकत्रया ।।
मुक्ताहारविहारिणी च विलसत्प्रोत्तुङ्गकुम्भस्तनी ।
पायात् कुण्डलधारिणी त्रिजगतामानन्दसंदोहभूः ।।
श्मशाने प्रजपेद्रात्रावयुतं कुण्डलधारिणी ।
आयाति रुधिरेणार्घो देयस्तुष्टा वदत्यपि ॥
किं कर्त्तव्यं मया वत्स मातेति भव साधकः ।
पञ्चाशतं दिनाराणि त्रैलोक्यमपि दास्यति ।।२।।

३ क्रोधद्वयास्त्रयुगतः सिन्दूरहारिणीपदम् ।
कूर्चत्रयाद्वसंप्रोक्तः सिन्दूरहारिणीमनुः ।।
स्वर्णालंकृतिहारिणी चलदलव्यालोलशाखाम्बरा
सोत्कण्ठीकृतगात्रकल्पशुभगा शुभ्रांशुचन्द्रस्मिता ।।
अन्तः संततकान्तिदन्तमलिनत्रैलोक्यशोभाशता
पायादुन्नतबाहु युग्म लतिका सिन्दूरहारिण्यसौ ।।
शून्यदेवालयं गत्वा जपेदष्टसहस्रकम् ।
शीघ्रमायात्यागता सा भार्या भवति कामिता ।।
पञ्चविंशतिदीनारान् वस्त्रालंकारभूषणम् ।
ददाति द्वादशदिनं देवी सिन्दूरहारिणी ।।३।।

४ लज्जाद्वयास्त्रयुगलं सिंहिनीति पदं ततः ।
क्रोधबीजत्रयाद्यन्तः कीर्तितः सिंहिनीमनुः ।।
शैलाग्रद्रुमदुर्गदन्तवदरीदुर्गान्तदैत्यस्थिता
केशायास्थिसमस्तविष्णुचरणप्रभ्रष्टसंत्रासिनी ।
या दन्तावलदन्तधारणरणत्प्रक्षुब्धसिद्धाङ्गना
सेयं पातु समस्तमस्तककुलव्याकलितमालाकुला ।।
गत्वैकलिङ्गं यामिन्यां प्रजपेदयुतं मनुम् ।
ततो हृष्टातिवरदा सिंहिन्यायाति पूजिता ।।
किं करोमि वदत्येवं भार्या भवति कामिता ।
दीनारं वस्त्रयुगलं दद्याद्रसरसायनम् ।।४।।
५ तारत्रिकूर्चास्त्रयुगाद्धंसिनी भूतिनी ततः ।
त्रिकूर्चितान्त्यः कथितो हंसिनी मन्त्ररुत्तमः ।।

शुभ्राशुभ्रसरोजतुल्यनयना मुग्धासवेनान्विता
प्रारब्धानिविमुग्धमाधुरवधूसंसेविता सादरम् ॥
किं चित्त ङ्गविलोलपाङ्गवलितव्यामुग्धमीलन्मुखी
मुक्तामुक्तविलोलहारललिता श्रीहंसिनी पातु वः ॥
वज्रपाणिगृहं गत्वा प्रतिमां शोभनां लिखेत ।
हयमारेण संपूज्य जपेदयुतसंख्यकम् ॥
यावदर्धनिशां देवी हंसिन्यायाति निश्चितम् ।
चन्दनार्घप्रदानेन हृष्टा वदति साधकम् ॥
किं मया ते प्रकर्त्तव्यं किङ्किणी तव साधक ।
वस्त्रालङ्कारभोज्याद्यं व्ययार्थं संप्रयच्छति ॥
तदशेषव्ययाभावान्न ददाति प्रकुप्यति ॥५॥

६ तारक्रोधास्त्रयुगतो नटीति पदमुच्चरेत् ।
कूर्चत्रयान्ते ज्ञोन्तोयं कथितो नर्तकीमनुः ॥
फुल्लेन्दीवरसुन्दरादरमुखीमुत्त ङ्गकुम्भस्तनीं
खेलन्खञ्जनयुग्ममञ्जु नयनामानन्ददायिस्मिताम् ।
क्षीराम्भोनिधिकूलव न्दिवनितामानीय वैलासिनीं
क्षीणश्रावणशालिनीमलिकुलव्याहारवाक्चातुरीम ॥
नीचगारांगमं गत्वा सप्ताहं जपपूजने ।
कृत्वा प्रशस्तमने रूपं चन्दनेन जपेदपि ॥
का भोगप्रदा श्रीः सा भार्या भवति नर्त्तकी ।
सुवर्णपलमेकं तु व्ययार्थं त्यक्त्य गच्छति ॥
दिने दिने नटी देवी स्थायिनी भवति ध्रुवम् ॥६॥

७ तारात् कूर्चयुगं चास्त्रयुगं चेटीं ततः परम् ।
डेन्तं क्रोधद्वयं चोक्त्वा चेटीमन्त्रोत्तमोत्तमः ॥
ओँ हूँ हूँ फट् फट् चेट्यै क्रों क्रों इति मन्त्रः 'क' मातृकायाम् ।
गच्छन्ती मितभाषिणी शशिमुखी भ्रष्टोत्तरीयाधरा
बिभ्रन्ती कलशं सरोजममलं स्वर्णान्तसीमन्तिनी ॥
श्रीखण्डादिविलेपनामलवपुः सौरभ्यसंभाविता
किंचिद्धर्मसमाहिता पिकरवा पायादियं चेटिका ॥

कुत्रापि भीषणस्थाने नामोच्चारणमात्रतः ।
ध्रुवं चेटी समागत्य चेटीकर्म करोत्यपि ॥
अथवा स्वगृहद्वारे ऽप्यहं रात्रौ जपं चरेत् ।
आगत्य नियतं देवी चेटी-कर्म करोति च ॥७॥

८ तारकूर्चास्त्रयुक्कामेश्वरी भूतिन्यतः परम् ।
क्थोन्तं क्रोधत्रयं कामेश्वरीमन्त्र उदाहृतः ॥
कामस्कन्धसमागता मधुरता वासन्तपुष्पान्विता
गायन्ती मधुराधरस्मितमुखी वीणावती चञ्चला
रक्ताम्भोजविलोचना मधुमदैर्युक्ता समन्तादियं
पायात् पुष्पधनुर्धरा मधुमुखी कामेश्वरी भूतिनी ॥
मातृस्थानं समागत्य कृत्वा मांसस्य भक्षणम् ।
मांसादिना बलिं दत्वा सहस्रं वत्सरं जपेत् ॥
जपान्नियतमायाति रुधिरार्घं निवेदयेत् ।
कामेश्वरी भवेत्तुष्टा भार्या भवति कामिता ॥
सर्वांशाः पूरयत्येव राज्यं यच्छति निश्चितम् ॥८॥

९ तारं लज्जा च कूर्चास्त्रद्वयमुक्ता रतिप्रिया ।
क्रोधद्वयास्त्रयुक्कामेश्वरीमन्त्रोक्तवत् क्रिया ॥
हेमप्राकारमध्ये सुरविटपितटे हेमपीठाधिरूढा
यक्षीमालाविसर्पत्परिमलकुसुमोद्भासिधम्मिल्लभारा ।
पीनोत्तुङ्गस्तनाढ्या कुवलयनयना रक्तवर्णा कराभ्यां
भ्राम्यद्रक्तोत्पलाभा सकलसुरनुता दिव्यभूषाङ्गरागा ॥९॥

१० क्रोधद्वयास्त्रयुगतो देवीतिपदमुच्चरेत् ।
ङेन्तं क्रोधत्रयं गुह्यं देवीमन्त्रमनुत्तमम् ॥
दिव्यकामुकहेमाभा कुमारी दिव्यरूपिणी ।
सर्वालङ्कारसंयुक्ता भार्या भवति साधिता ॥
रात्रौ देवगृहं गत्वा तत्र शय्यां प्रकल्पयेत् ।
सितवस्त्रं चन्दनं च जातीपुष्पं प्रदापयेत् ।
धूपं तु गुग्गुलं दत्वाष्टसहस्रं जपेन्मनुम् ।
जपान्ते नित्यमायाति चुम्बनालिङ्गनादिभिः ॥
कामिता जायते भार्या सत्यं देवी कुमारिका ।

दद्यात्यष्टौ दिनाराणि दिव्यं वस्त्रयुगं ततः ।
कालिकं भोजनं दिव्यं परिवारस्य दास्यति ॥
अन्यद्वैश्रवणगृहाद् द्रव्यमानीयच्छति ।
सहस्रमेतानि जपेज्जपान्ते सिद्धयति ध्रुवम् ॥
मुहुर्मुहुर्जपेन्मन्त्रमित्याह क्रोधभूपतिः ।
क्रोधाधिपं व्योमरक्तं वज्रपाणिं सुरान्तकम् ।
कलिकल्पतरुं नत्वा भूतिनीसिद्धिरर्थतः ॥

इत्यलं विस्तरः ।

इति भूतिन्यादिपटलपरिच्छेदः ॥ १८ ॥

अथ षट्कर्मलक्षणम् ।

तत्र फेत्कारिणीतन्त्रे । शान्तिकादीनि कर्माणि यद्वारतिथियोगतः ।
प्रारब्धव्यानि विधिना तच्च संप्रोच्यतेऽधुना ॥
शान्ति-वश्य-स्तम्भनानि द्वेषणोच्चाटने ततः ।
मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः ॥
पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ।
बुधेज्यवारसंयुक्ता शान्तिकर्मणि पूजिता ॥
कार्ष्णी चतुर्दशी तद्वदष्टमी मन्दतारका ।
उच्चाटने तिथिः शस्ता प्रदोषेषु विशेषतः ॥
चतुर्दश्यष्टमी कृष्णा अमावास्या तथैव च ।
मन्दारार्कदिनोपेता शस्ता मारणकर्मणि ॥
बुधचन्द्रदिनोपेता पञ्चमी दशमी तथा ।
पौर्णमासी च विज्ञेया तिथिःस्तम्भनकर्मणि ॥
शुभं शुभोदये कुर्यादशुभान्यशुभोदये ।
रौद्रकर्माणि रक्तार्के मृत्युयोगे च मारणम् ॥

कार्ष्णी कृष्णपक्षसम्बन्धिनी । इज्यो गुरुः । मन्दःशनिः । आरः कुजः ।

तथा निबन्धे सूर्योदयं समारभ्य घटिकादशशः क्रमात् ।
ऋतवः स्युर्वसन्ताद्या अहोरात्रे दिने दिने ॥
वसन्तग्रीष्मवर्षाख्य शरद्धेमन्तशैशिराः ।
हेमन्तः शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि ॥

शिशिरः स्तम्भनेज्ञेयो विद्वेषे ग्रीष्म ईरितः ।
प्रावृडुच्चाटने ज्ञेया शरन्मारणकर्मणि ॥

फेत्कारिणीतन्त्रे संलिखेत् स्तम्भनं कुम्भे हर्यक्षे वृश्चिकोदये ।
द्वेषोच्चाटनादिकं नक्रकुलीराजकुलोदये ॥
यमकन्याधनुर्मीने वश्यशान्तिकपौष्टिकम् ।
मारणं चाष्टमे राशौ रिपूच्छेदादिनिग्रहम् ॥

हर्यक्षः सिंहः । नक्रो मकरः । कुलीरः कर्कटः । अजो मेषः । यमो मिथुनम् ।

तथा वश्यं पूर्वेह्नि मध्याह्ने विद्वेषोच्चाटने लिखेत् ।
शान्तिपुष्टी अहन्यस्ते सन्ध्याकाले तु मारणम् ॥
अर्धरात्रे लिखेत् स्तम्भमाकृष्टिं प्राग्दिनोदयात् ।
यदन्यच्छोभनं कार्यं तत्प्रत्यूषे लिखेद्बुधः ॥
इन्द्रे स्तम्भनमुच्चाटमग्नौ सर्वाभिचारकम् ।
यमे रक्षसि विद्वेषं शान्तिं वरुणसोमयोः ।
कुलोत्सादं मरुद्भागे यक्षे कलहनिग्रहौ ॥
कुर्वीत नोदितं कर्म यच्छुभं ब्रह्मणः पदे ॥
वश्याकृष्ट्यवनं भूर्ज्जे लिखेदुच्चाटनं ध्वजे ।
गर्दभत्वचि विद्वेषं स्तम्भनं गजचर्मणि ॥
प्रेतचीरे समालेख्यं ज्वरतापादिसाधनम् ।
विवादसैन्यस्तम्भादिशिलायामपि मोहनम् ॥
वश्यं कुङ्कुमकर्पूररोचनाभिर्हरिद्रया ।
यावेन स्तम्भनाकृष्टिं लिखेच्चानामिकासृजा ॥
विद्वेषं फेरुरक्तेन काकरक्तेन मारणम् ।
मोहनं विषरक्तेन उच्चाटं चोष्ट्रजासृजा ॥

यावोऽलक्तकम् । अनामिकासृजा अनामाङ्गुलीरुधिरेण । फेरुः शृगालः ।

तथा वश्यादौ लेखिनी दूर्वाकर्षणे शिखिपिच्छजा ।
विद्वेषोच्चाटने काकपक्षेणापि च मारणम् ॥
वश्ये चाकर्षणे स्तम्भे रक्तवर्णं विचिन्तयेत् ।
निर्विषीकरणे शान्तौ पुष्टौ चाप्यायनेशितम् ॥

पीतं स्तम्भनकार्येषु धूम्रमुच्चाटने स्मरेत् ।
उन्मादे शक्रगोचापाभं कृष्णं मारणकर्मणि ॥
सात्त्विकं मोक्षकामानां राजसं राज्यमिच्छताम् ।
तामसं शत्रुनाशार्थं सर्वव्याधिनिवारणम् ॥
सर्वोपद्रवशान्त्यर्थं तामसं तु विचिन्तयेत् ।
मन्त्रान्ते योजनं नाम्नः पल्लवः स तु कथ्यते ॥
मारणे विषसंहारे ग्रहभूतविनिग्रहे ।
उच्चाटने च विद्वेषे पल्लवस्तु प्रशस्यते ।
मन्त्रान्ते नामसंस्थानं योग इत्यभिधीयते ॥
शान्तिके पौष्टिके वश्ये प्रायश्चिते विशोधने ।
मोहने दीपने योगं प्रयुञ्जन्ति मनीषिणः ।
स्तम्भनोच्चाटनोद्भेदोविद्वेषेषु स चोच्यते ।
नाम्न आद्यन्तमध्येषु मन्त्रः स्याद्‌बोध इष्यते ।
मन्त्रस्या भिमुख्यकरणे सर्वव्याधिनिवारणे ।
ज्वरगृहविषाद्यार्त्तिशान्तिके बोध उच्यते ।
सम्मोहने स एवाथ मन्त्रनामाक्षराणि च ।
एकैकान्तरितं यत्तु ग्रथनं तत् प्रकीर्तयेत् ॥
तच्छान्तिके विधातव्यं नामाद्यन्ते यथा मनुः ।
तत्संपुटं भवेत्तत्तु कीलने परिभाषितम् ।
स्तम्भमृत्युञ्जये-दिव्ये रक्षादिव्ये च संपुटः ।
मन्त्राक्षराभ्यामेकैकं साध्यनामाक्षरं क्रमात् ।
ग्रथ्यते स विदर्भस्तु वश्याकर्षणपौष्टिके ॥
एवं योगक्रमः प्रोक्तः कर्मकाले मनीषिभिः ।
मारणोच्चाटनद्वेषे संकीर्णङ्गपदं यजेत् ॥
फट्कारं छेदने हूँ फट् विघ्नग्रहनिपातने ।
पुष्टौ चाप्यायने वौषट् बोधने महिलाहृतौ ॥
अग्निकार्ये जपेत् स्वाहा नमः सर्वत्र चार्चने ।
शान्तिपुष्टिवशद्वेषाकृष्ट्युच्चाटनमारणे ॥
स्वधास्वाहावषट् हूँ च वौषट् फट् योजयेत् क्रमात् ।
वश्याकर्षणसंतापज्वरे स्वाहा प्रयोजयेत् ॥

क्रोधोपशमने शान्तौ प्रीतौ योऽयं नमो बुधैः ।
वौषट् सम्मोहनोद्दी पपुष्टिमृत्युञ्जयेषु च ॥
हूँकारं प्रीतिन्नाशे च छेदने मारणे तथा ।
उच्चाटने च विद्वेषे वषट् चान्धकृतौ वषट् ॥
दण्डोद्दीपनकार्ये लाभालाभे वषट् स्मृतम् ।
चतुरस्रार्धचन्द्रं च त्रिकोणं च षडस्रकम् ।
वर्त्तुलं च पृथिव्यादिमण्डलाकृतयः क्रमात् ।
पीतं श्वेतं तथा रक्तं कृष्णं धूम्रामिति क्रमात ॥
नाभौ स्मरेन्मण्डलं तु वायोस्तद्वीजसंयुतम ।
त्रिकोणं पिङ्गलं वह्निमण्डलं हृदि चिन्तयेत् ॥
चतुरस्रं स्तम्भनं कण्ठे पृथिवीमण्डलं स्मरेत् ।
अर्धचन्द्रं ललाटे च श्वेतपद्मद्वयाङ्कितम् ॥
स्वस्वबीजयुतेष्वेषु चैतन्यं परिचिन्तयेत् ।
कात्यायनाभिचारे च दक्षिणाप्लवगा मही ।
वसनं लोहितं प्रोक्तमुष्णीषं लोहितं स्मृतम् ॥
निबन्धे— शीतांशुसलिलक्षोणीव्योमवायुहविर्भुजाम् ।
वर्णाः स्युर्मन्त्रबीजानि षट्कर्मसु यथाक्रमम् ॥
तत्तद्भूतोदये सम्यक् तत्तन्मण्डलसंयुतम् ।
तत्तत्कर्म विधातव्यं मन्त्रिणा निशितात्मना ॥
रतिर्वाणीरमाज्येष्ठादुर्गाकाली यथाक्रमात ।
षट्कर्म देवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत् ॥
ईशचन्द्रेन्द्रनिर्ऋतिवाय्वग्नीनां दिशो मताः ।
दण्डाकारागतिर्भूमेः पुटयोरुभयोरधः ॥
तोयस्य पावकस्योर्ध्वगतिस्तिर्यङ्नभस्वतः ।
गतिर्व्योम्नो भवेन्मध्ये भूतानामुदयः स्मृतः ॥
पद्मासनं स्वस्तिकं च विकटं कुक्कुटं तथा ।
वक्रं भद्रकमित्याहुरासनानि मनीषिणः ॥
षण्मुद्राः क्रमशो ज्ञेया पद्मपाशगदा ह्वयाः ।
मुशलाशनिखड्गाख्याः शान्तिकादिषु कर्मसु ॥

तन्त्रे रुद्राक्षमालया जप्तो मन्त्रः सर्वफलप्रदः ।
पद्माक्षैर्वा जपेन्मन्त्रं सर्वकामसमृद्धये ॥
अष्टोत्तरशतैर्माला सर्वकर्मसु पूजिता ।
मध्यमाङ्गुष्ठकाभ्यां तु जपेदाकर्षणेऽन्वहम् ॥
अङ्गुष्ठतर्जनीभ्यां तु विद्वेषोच्चाटयोर्जपेत् ।
जपेज्जेष्ठकनिष्ठाभ्यां शत्रुमारणकर्मणि ॥
अङ्गुष्ठानामिकाभ्यां तु जपेदुत्तमकर्मसु ।
अङ्गुष्ठेन जपेदित्थमन्येष्वङ्गुलिभिः सह ॥
अङ्गुष्ठेन विना जप्यं कृतं तदफलं भवेत् ।
जपेत् पूर्वमुखो वश्ये दक्षिणं चाभिचारिके ॥
पश्चिमे धनदं विद्यादुत्तरे शान्तिकं भवेत् ।
चतुरस्रं भवेत् कुण्डं सर्वेषां सर्वसिद्धिकृत् ।

अक्षमालाविशेषो जपविशेषः कुण्डादिविशेषश्च मन्त्रकौमुद्यां विस्तरः ।

तन्त्रे अथ द्रव्याणि वक्ष्यामि तत्तत्कर्मानुरूपतः ।
शान्तिके तु पयः सर्पिस्तिलक्षीरद्रुमैधिकाः ॥
अमृताख्या लताचैव पायसं तत्र कीर्त्तितम् ।
पौष्टिके विल्वपत्रैश्च जातीपुष्पैर्नृपो भवेत् ॥
कन्यार्थी जुहुयाल्लाजैः श्रीकामः कमलैस्तथा ।
दध्ना च श्रियमाप्नोति अन्नैरन्नघृतप्लुतैः ॥
क्षीरेण सर्पिषा वापि कमलैर्मधुराप्लुतैः ।
समृद्ध्यै जुहुयान्मन्त्री महानैर्धन्यशान्तये ॥
लक्षहोमाल्लभेच्छान्तिं घृतैर्विलुलितैर्निधिम् ।
आकर्षणे तु लवणं प्रियङ्गुं विल्वकं फलम् ।
जातीपलाशकुसुमैःसैकैकं चैकमेव वा ॥
राजीलवणजैर्वश्यं वश्यं वा पौष्टिकोदितैः ।
वश्यार्थी जातिकुसुमैराकृष्टौ करवीरजैः ॥
कार्पासनिम्बैस्तक्राक्तैर्नवकेशैस्तथापिवा ।
एकीकृत्य हुनेन्मन्त्री शत्रुमारणकांक्षया ॥

जुहुयात् सार्षपैस्तैलैरथवा शत्रुमारणे ।
रोहीबीजैस्तिलोपेतैरुच्चाटे जुहुयान्नरः ॥
तुषकण्टकसंयुक्तैर्बीजैः कार्पासिकैरपि ।
सर्षपैस्तिलसंमिश्रैर्हुनेत् सर्वाभिचारके ॥
काकोलूकच्छदैः क्रूरैः कारस्करविभीतकैः ॥
मरीचैः सर्षपैः सिद्धैरर्कक्षीरैः कटुत्रयैः ।
कटुतैलैः स्नुहीक्षीरैः कुर्यान्मारणकर्मणि ॥
आयुःकामो घृततिलै दूर्वाभिश्चाम्रपल्लवैः ।
पयोक्तैराम्रपत्रैश्च ज्वरं सद्यो विनाशयेत् ॥
गुडुची मृत्युजयने तथा शान्तौ गजाह्वयोः ।
गौरैस्तु सर्षपैर्हुत्वा सद्यो रोगं हरेज्ज्वरी ॥
वृष्टिकामो वेतसीभिः समिद्भिः पत्रकैस्तथा ।
हुत्वा पुष्टिमवाप्नोति पुत्रञ्जीवैश्च पुत्रकम् ॥
घृतगुग्गुलुहोमेन वाक्पतित्वं प्रजायते ।
मल्लिकाजातिकुसुमैर्नागपुन्नागसम्भवैः ।
पुष्पैः सरस्वतीसिद्धिस्तथा सर्वार्थसाधनम् ॥
पयसा लवणैर्वापि हुनेद् वृष्टिनिवारणम् ।
रक्तपुष्पैरपामार्गैरङ्कोलैश्च सुभद्रकैः ॥
एभिर्मधुरसंयुक्तैर्मन्त्री कुर्यात्तु वश्यकम् ।
वातोद्धूतैः शुष्कपत्रैः काष्ठैरशनिपातितैः ।
उष्ट्रास्थिना वचाङ्गारैः शत्रोरुच्चाटनं भवेत् ॥
दूर्वागुडूचीगव्येनसर्पिषा तिलतण्डुलैः ।
अन्नैः समिद्भिः पालाशैः शान्तिं कुर्याद् विचक्षणः ॥



न ध्यातो नार्चितो मन्त्रो न सिद्धोऽपि प्रसीदति ।
नाजप्तः सिद्धिदा प्रोचुर्नाहुतः फलदो भवेत् ॥
पूजा ध्यानं जपं होमं तथा कर्म - चतुष्टयम् ।
प्रत्यहं साधकः कुर्यात् स्वयं चेत् सिद्धिमिच्छति ॥
निहन्तव्यो मया शत्रुर्नान्यथा तु स्थितिर्भवेत् ।
इत्याकुलमनास्तद्वत् कुर्यात् ब्राह्मणवर्जितम् ॥
कर्मणा प्रबलेनैव प्रतिबन्धे विरोधिना ।
यदि सिद्धिं न लभते द्विस्त्रिर्वा पुनराचरेत् ॥
दैवेनोपहतोऽत्यन्तमैहिकानि न कारयेत् ।
नापराधोऽस्त्यत्र किंचित् प्राप्नुयादुपहास्यताम् ॥

इत्यलं विस्तरः ।

इति षट्कर्मपटलपरिच्छेदः ॥ १९ ॥

अथ दीक्षा ।

तन्त्रेषु दीक्षातो ह्यनवाप्तश्च प्राप्तश्चादत्तदक्षिणः ।
तावुभौ व्यर्थकर्माणौ साङ्गाच्छ्रौतात् फलं यतः ॥
यदृच्छया श्रुतं मन्त्रं छद्मनाथ बलेन वा ।
पत्रेक्षितं च गाथावत् प्रजप्तमपि निःफलम् ॥

तथा किं होमैः किं जपैश्चैव किं मन्त्रन्यासविस्तरैः ।
रहस्यानां हि मन्त्राणां यदि न स्यात् पुरस्क्रिया ।
पुरस्क्रिया हि मन्त्रस्य प्रधानं बीजमुच्यते ।
बीजहीनो यथा देही सर्वकर्मसु न क्षमः ॥
पुरश्चरणहीनो हि तथा मन्त्रः प्रकीर्त्तितः ।

इत्यादि मन्त्रकौमुद्यां विस्तरः ।

अथ संक्षेपेण दीक्षाविधिर्लिख्यते ।

तत्र कलशस्थापनाभावपक्षे शुभदिने कृतनित्यक्रियो गुरुर्देयमन्त्रदेवं संपूज्य शङ्खपूरणं कुर्यात् । यथा फडिति शङ्खं प्रक्षाल्य नम इति तत्र हृल्लेखाबीजं संलिख्य मूलेन जलं दत्वा नम इत्यष्टगन्धं च दद्यात् । तत्र जले अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः अमृता-मानदा-पूषा-तुष्टि-पुष्टि-रति-धृति-शशिनी-चन्द्रिका-कान्ति-ज्योत्स्ना-श्री-प्रीत्यङ्गदा-पूर्णा-पूर्णामृता इहागच्छत इह तिष्ठतेत्यावाह्य ओं अमृतादिभ्यो नमः इति संपूज्य तेनैव क्रमेण आं ह्रीं क्रों अमुष्य प्राणा इह प्राणा अमुष्य जीव इह स्थितः । अमुष्य सर्वेन्द्रियाणि अमुष्य वाङ्मनोनयनश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति मन्त्रेण प्राणप्रतिष्ठां कुर्यात् । यद्वा स्वरभवा अमृतादिसोमकला इतिक्रमेण एकदैवावाहनादिकं कुर्यात् । क्रमेण पूजादिकं कृत्वा सर्वासां पश्चात् प्राणप्रतिष्ठेति केचित् । एवं द्वादशसूर्यकलाः यथा कंभं तपिनी खंबं तापिनी गंफं धूम्रा घंपं मरीचिः ङंनं ज्वालिनी चंधं रुचि छंदं सुषुम्ना जंथं भोगदा झंतं विश्वा ञंणं बोधिनी टंढं धारिणी ठंडं क्षमा एता प्रत्येकमेकदा वा पूर्ववत् । तथा दशवह्निकलाः यथा यं धूम्रार्चिः रं उष्णा लं ज्वलिनी वं ज्वालिनी शं विस्फुलिङ्गिनी षं सुश्री सं सुरूपा हं कपिला लं हव्यवहा क्षं कव्यवहा एता प्रत्येकं एकदा वा पूर्ववत् । ततः प्रत्येकमेकदा वा

अकारभव - सृष्ट्यादि - दशकलाः समावाह्य हंसः शुचिषद्वसुरन्तरिक्षसमिद्धो-
तावेदिषदतिथिर्धरो न सत् नृषद्वरसदृतसव्योमसदब्जा गोजाऋतजा
अदजा ऋतं बृहदितिमन्त्रं पठित्वा पूजाप्रतिष्ठे कुर्यात् ।
ताश्चः कं सृष्टि खं ऋद्धि गं स्मृति घं मेधा ङं कान्ति चं
लक्ष्मी छं द्युति जं स्थिरा झं स्थिति ञं सिद्धयः । ततः उकार-
भव-जयादिदशकलाः प्रत्येकमेकदा वा समावाह्य ओँ प्रे तद्विष्णुस्तवते वीर्येण
मृगोनभीमः कुचरोगिरिष्ठाः । यस्योरुषु त्रिविक्रमणेष्वधिक्षियन्ति भुवनानि
विश्वा इति जप्त्वा पूजाप्रतिष्ठे कुर्यात् । तास्तु टं जया ठं पालिनी डं शान्ति
ढं ऐश्वरी णं रति तं कामिका थं वरदा दं नादिनी धं प्रीति नं दीर्घाः । ततः
पूर्ववत् प्रत्येकमेकदा वा मकारभवतीक्ष्णादिदशकलाः समावाह्य त्र्यम्बकं
यजामह इति मन्त्रं जप्त्वा पूजाप्रतिष्ठे कुर्यात् । ताश्च पं तीक्ष्णा फं रौद्री बं
भया भं निद्रा मं तन्त्री यं क्षुत् रं क्रोधिनी लं क्रिया वं उत्कारी शं मृत्यवः ।
ततः पूर्ववत् प्रत्येकमेकदा वा विन्दुभवाः पीतादिपञ्चकलाः समावाह्य ओँ
तत्सवितुरिति मन्त्रं जप्त्वा पूजाप्रतिष्ठे कुर्यात् । ताश्च षं पीता सं श्वेता हं
अरुणा लं असिता क्षंः अनन्ताः ततः प्रत्येकमेकदा वा नादजा निवृत्यादिषो-
डशकलाः प्रागुक्ताः समावाह्य ओँ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि संशतु
आसिञ्चतु प्रजापति र्धाता गर्भं दधातु ते २ इति जप्त्वा पूजाप्रतिष्ठे कुर्यात्
ततः प्रतिलोमेन मूलमन्त्रं जप्त्वा चतुर्नवतिदेवतात्मके शङ्खजले यथावन्मूलम-
न्त्रदेवतां पूजयेत् ।

कलशस्थापनपक्षे सर्वतोभद्रमण्डलं विलिख्य संपूज्य शालिधान्यतण्डुल-
चूर्णानि तत्र विन्यस्याधारशक्तिमारभ्य पीठमन्त्रान्तं संपूज्य हेमादिघटितं
कुम्भमस्त्रमन्त्रप्रक्षालितं त्रिगुणं तु वेष्टितं गन्धादिपूजितं नवरत्नोदरं दूर्वाक्षता-
न्वितं ओंकारमुच्चरन् तत्र संस्थाप्य तीर्थोदकादिना विलोमां मातृकां मूलमन्त्रं
च जप्त्वा प्रपूजयेत् । ततः शङ्खं संस्कृत्य तज्जलं कुम्भे निःक्षिप्य तन्मुखे
पञ्चपल्लवान् विक्षिप्य तत्र सफलाक्षतं शरावं विन्यस्य क्षौमयुग्मेन येन
केनचिन्नववस्त्रयुगेन वा संवेष्टय तत्र देवतां समावाह्य उपचारैः प्रपूजयेत् ।

ततः स्नातं शिष्यं स्वसन्निधिमानीय दिव्यदृष्ट्या तं निरीक्ष्य तच्चैत-
न्यं स्वहृदयाम्बुजमानयेत् । ततः शिष्यशरीरे निवृत्तिं पादतलाज्जानुपर्यन्तं

विन्यस्य जानोर्नाभिपर्यन्तं प्रतिष्ठां नाभेः कण्ठावधि विद्यां कण्ठाल्ललाटपर्यन्तं शान्तिं ललाटान्मस्तकावधि शान्त्यतीतां विन्यस्य व्युत्क्रमेण वेधयेत्। आत्मस्थितं तच्चैतन्यं पुनः शिष्ये नियोजयेत्। ततः शिष्यशिरसि दूर्वाक्षतं दत्वा मातृकां मूलमंत्रं च व्युत्क्रमेण मनसा जपन्नभिषिञ्चेत्। ततः शिष्ये भूतशुद्धिमातृकान्यासादिकं विधाय आत्मनो देवतां शिष्यसंक्रान्तां विचिन्त्य गन्धपुष्पाद्यैः पूजयेत्। ततः प्रथमं शिष्यहस्ते जलं दत्वा एषोऽमुकमन्त्र आवयोः समानफलदोऽस्तु इति वदेत्। शिष्योऽपि अस्त्विति प्रतिवचनं दद्यात्। देवतागुरुमन्त्राणामैक्यं संभाव्य दण्डवत् प्रणमेत्। गुरुं च गन्धादिभिः पूजयेत्। गुरुश्च मन्त्रस्य ऋषिछन्दोदैवतानि शिष्यं श्रावयित्वा दक्षिणकर्णे त्रिशो मन्त्रं कथयेत्। शिष्योऽपि दक्षिणां यथाशक्ति गोभूहिरण्यादि दद्यात्। अनन्तरमष्टवारं गृहीतमन्त्रं जप्त्वा ब्राह्मणेभ्यो भोजनादिकं दत्वा निरामिषं दिनत्रयं तिष्ठेत्। एतदशक्तावुपदेशमात्रं कारयेदिति संक्षेपः।

अथ मन्त्रसंस्कारः। तत्र साधकः शुभदिने स्वर्णादिपात्रे सुवर्णलेखिन्या चन्दनादिना मातृकामन्त्रं विलिख्य ततो मूलमन्त्राक्षराणि बहिःकृत्याभिमतमन्त्रं लिखेदिति जननम्। तदवशिष्टमातृकाक्षरपुटितं मूलमन्त्रं जपेदिति समाचारः। तथा मूलमन्त्रस्य प्रत्येकं वर्णान् प्रणवान्तरितान् कृत्वा जपेदिति जीवनम्। तथा पात्रे मन्त्रवर्णान् विलिख्य चन्दनाम्भसा प्रत्येकं "यं" इति मन्त्रेण ताडयेदिति ताडनम्। तथा पात्रे मन्त्रं विलिख्य मन्त्राक्षरसमसंख्यकरवीरपुष्पेन "रं" इतिबीजेन हन्यादिति रोधनम्। तथा दीक्षोक्तक्रमेण कलशं संस्थाप्य मन्त्राक्षरसमसंख्याश्वत्थपल्लवैर्युगपदेव मन्त्रमभिषिञ्चेदित्यभिषेचनम्। तथा मूलाधारे तेजस्त्रयात्मकं मूलमन्त्रं संचिन्त्य हृत्पद्मस्थिते मन्त्रे "ओँ ह्रौँ" इति ज्योतिर्मन्त्रेण कायिकवाचिकमानसपापरूपमानवमायिककार्मणरूपं यौनं वा मलत्रयं निर्दहेदिति विमलीकरणम्। अत्र योनिमुद्राबन्धनवदपानवायुमूर्द्ध्वमाकृष्य तदुत्थितैस्तेजोभिस्तद्दहनमिति समाचारः। तथा पात्रे मन्त्रं विलिख्य कुशोदकेन ज्योतिर्मन्त्रजप्तेन प्रत्यक्षरं तेनैव मन्त्रेण प्रोक्षणमाप्यायनम् मूलमन्त्रेणेति केचित्। तथा मूलमन्त्रेण पुरश्चरोक्तक्रमेण देवं तर्पयेदिति तर्पणम्। तथा तारमायाश्रीबीजान्यादौ दत्वा मन्त्रं यथाशक्ति जपेदिति दीपनम्। तथा जप्यमानमन्त्रस्याप्रकाशनं गोपनमिति संक्षेपः।

अथेदानीं छिन्नादिदोषशुद्धयर्थं योनिमुद्राबन्धनं योगमभ्यसेत। तद्यथा। पूरकादिना पुनः पुनरभ्यासेन विशुद्धनाडीगणः साधकः आसनस्थो दक्षपादपार्ष्णिं गुदमार्गे वामपादपार्ष्णिं लिङ्गमूले संस्थाप्य विषयेभ्य इन्द्रियाणि निवर्त्य ऋजुकायशिरोग्रीवः काकचञ्चुपुटानुकारिणा मुखेन वायुमाकृष्य तेनोदरमापूर्य कर्णावङ्गुष्ठाभ्यां नेत्रे तर्जनीभ्यां नासारन्ध्रे मध्यमाभ्यां मुखमवशिष्टाभिरङ्गुलीभिरनतिदृढमवरुध्य मूलाधारचक्रे मनः स्थापयेत्। ततो यथाश्वः पुरीषमुत्सृज्य गुदमार्गं पुनः पुनः संकोचयति तथा गुदं पुनः पुनः संकोचयेत्। अङ्कलग्नपाणिःपुनः पुनः हूँकृतेनापानवायुमूर्ध्वं कुर्यात्। एवं द्व्यङ्गुलोत्सेधविस्तारचतुरङ्गुलवृत्तावेष्टितगुदध्वजान्तरालस्थकन्दस्थानावस्थितयोरिडापिङ्गलयोर्मध्येऽवस्थितायाः सुषुम्नाख्यनाड्या मुखमभ्यासक्रमेणोन्मीलयति। ततो वायुस्तत्र प्रविश्याजग्रन्थिं भित्वाऽजपङ्कजमूर्ध्वमुखं करोति। तस्मिन्नन्तः प्रविष्टे प्रथमं वीणाध्वनिवत् ततो वंशीरववत ततो घण्टानादवत ततो मेघध्वनिवत महानादो जायते। तेन प्रसुप्तभुजगाकाराशङ्खावर्त्ताक्रमेण सुषुम्नामुखमावेष्ट्यावेष्ट्यावस्थिता कुण्डलिनी विबुध्यते। कन्दावस्थितत्रिकोणयोन्यन्तरे भ्रमन्तं रक्तवर्णं कामं शिवस्वरूपं ध्यात्वा तदुपरि दीपशिखाकारां चित्कलां संचिन्त्य हंसस्वरूपमात्मानं कुण्डलिन्या एकीभूतं विचिन्त्य चित्कलया संयोज्य सुषुम्नान्तरस्थचित्रनाड्या हंससहितामूर्ध्वंनयेत्। सा च कन्दलिङ्गमूल-नाभि-हृत्-कण्ठ-भ्रूमध्यगतानि चतुःषट्दशद्वादशषोडशद्विदलानि ब्रह्मशिवविष्णुहंसभगवतीबिन्दुदैवतानि मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धबिन्दुनामकषट्चक्राणि मूलाधारानाहतबिन्दुचक्रस्थानि स्वयम्भुवाणेतरनामकानि त्रीणि लिङ्गानि भित्वा ब्रह्मरन्ध्रस्थाधोमुखसहस्रारपद्मं गत्वा तत्कर्णिकास्थशिवसायुज्यमासाद्य तदुपरिसर्गस्थानस्थचन्द्राग्निपतन्तीं मन्त्रमयीं लोहितामृतधारां यथेष्टं पीत्वा तेनैव पथा परावृत्य डाकिनी- राकिनी- लाकिनी- शाकिनी- काकिनी हाकिनीःषट्चक्रदेवता अमृतेन प्रीणयन्ती मूलाधारं गच्छति। एवं मुहुर्गतागतमभ्यस्यान्तरा मन्त्रं जपेदिति छिन्नादिदोषदुष्टा मन्त्राः सिध्यन्तीति निबन्धारः। एतदशक्तौ मायाबीजं कामबीजं वा श्रीबीजं वा आदौ दत्वा प्रणवपुटितं च मन्त्रमष्टोत्तरशतमष्टोत्तरसहस्रं वा जपेदेवं मन्त्रदोषशान्तिर्भवतीति संक्षेपः॥

अथ दीक्षितः शुभे दिने पुरश्चरणमारभेत। तत्र पूर्वदिने निरामिषमेकवारं भुक्त्वाग्रिमदिने स्नानादिकं विधाय अमुकमन्त्रस्य पुरश्चरणसिद्धये मयेयं गृह्यते

भूमिर्मन्त्रो मे सिद्ध्यतामिति ग्रामे क्रोशमात्रं नगरादौ क्रोशयुगं पर्वतादौ यथेच्छं भूपरिग्रहं विधाय क्षीरवृक्षोद्भवान् वितस्तिपरिमितानष्टौ कीलकान् विधायास्त्रमन्त्रेण प्रत्येकमेकदा वा दशवारं शतवारं वाभिमन्त्र्य तेष्वस्त्रदेवतां संपूज्य परिगृहीतक्षेत्रमध्ये क्षेत्रपालं संपूज्य तस्मै बलिं दद्यात् ।

तत्र प्रकारः ।

नीलाञ्जनाद्रिनिभमूर्द्ध पिसङ्गकेशं
वृत्तोग्रलोचनमुपात्तगदाकपालम् ।
आशाम्बरं भुजगभूषणमुग्रदंष्ट्रं
क्षेत्रेशमद्भुततरं प्रणमामि देवम् ॥

इति ध्यात्वावाह्य क्षौंक्षेत्रपालाय नम इत्यर्घादिभिः पूजयेत् । ततः ओँ एह्येहि विदुषि मुरुमुरु भञ्जय भञ्जय नर्त्तय नर्त्तय विघ्न विघ्न महाभैरवक्षेत्रपाल बलिं गृह्ण गृह्ण स्वाहा एष बलिः सपरिवाराय क्षेत्रपालायनम इति माषभक्तबलिं सोपदंशं बृहत्पिण्डं तत्करस्थकपाले दद्यात् । ततोन्येभ्योपि दद्यात् ।

यथा

ओँ ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
मातरोप्युग्ररूपाश्च गणानामधिपाश्च ये ॥
विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिता ।
सर्वे ते प्रीतिमनसः प्रतिगृह्णन्त्विमं बलिम् ॥

इत्यष्टदिक्षु दद्यात् । ततः भूतानि यानीह वसन्ति भूतले
बलिं गृहीत्वा विधिवत् प्रयुक्तम् ।
अन्यत्र वा संपरिकल्पयन्तु
क्षमन्तु तान्यत्र नमोस्तु तेभ्यः ॥

इत्यष्टदिक्षु भूतबलिं दद्यात् ।

ततः परिगृहीतक्षेत्रस्य पूर्वसीमां गत्वा

ये चात्र विघ्नकर्त्तारो दिवि भुव्यन्तरीक्षगाः ।
विघ्नभूताश्च ये चान्ये मम मन्त्रस्य सिद्धिषु ॥
मयैतत्कीलितं क्षेत्रं परित्यज्य विदूरतः ।
अपसर्पन्तु ते सर्वे निर्विघ्नं सिद्धिरस्तु मे ॥

इति पठन्नेकं कीलकमारोप्य तत्रेन्द्रमावाह्य चतुर्थ्यन्तनाम्ना संपूज्य एष माषभक्तबलिरिन्द्रायनमः इति बलिं दद्यात् । एवमेवाग्नेयादिषु सप्तसु दिक्षु पूर्वमन्त्रेण कीलकार्पणं विधाय तत्तद्दिक्पालनाम्ना पूजाबलिदाने कुर्यादिति ।

यदि च विघ्नशङ्का नास्ति तदैव तदपि न विधेयम् बीजाभावात्। अत-एवोपरागादौ तेन विनैवानुष्ठानमिति निबन्धारः।

ततः परिगृहीतक्षेत्रमध्ये कूर्मचक्रं विचिन्त्य तस्य मुखे वातातपसहं यथास्वरूपं मण्डलं कुर्यादिति।

अथ पुरश्चरणारम्भे पूर्वतृतीयदिने हविष्यान्नेनैकवारं भुक्त्वाग्रिमदिने स्नानादिकं विधाय मन्त्रसिद्धिप्रतिबन्धकज्ञाताज्ञातपापक्षयार्थमयुतगायत्रीजपा-दिप्रायश्चित्तं विधाय भोजनादिना विप्रान् संतोष्य गुरुं तदसन्निधौ तद्बन्धुं काञ्चनबहुवस्त्रालङ्कारादिभिः सुप्रीतं कृत्वा तद्द्वारा मनसा वा तदनुज्ञां गृहीत्वा हविष्यान्नेनैकवारं भोजनं ततः कुशशय्यामधःशयीत। ततोऽग्रिमदिने ब्राह्मे मुहूर्त्ते उत्थाय ब्रह्मरन्ध्रोपरिष्टसहस्रदलपद्मे व्याख्यामुद्राकरं परमात्मस्वरूपं गुरुं ध्यात्वा तत्पादस्रुतामृतधारया क्षालितं देहं विचिन्त्य हृदम्बुजे देवतां चिन्त-यित्वा तत्प्रभामण्डलव्याप्तं देहं विचिन्त्य प्रणम्यानुज्ञां गृहीत्वा मन्त्रार्थं संस्म-रन् जलाशयं गत्वा स्वगृह्योक्तविधिना स्नात्वा पश्चात् स्वमन्त्रस्य ऋष्यादिन्या-सपूर्वकं तज्जले इष्टदेवतां ध्यात्वा तीर्थमन्त्रेणाङ्कुशमुद्रया तीर्थमावाह्य वं इति धेनुमुद्रयामृतीकृत्य अस्त्रेण संरक्ष्य तज्जले देवतामूर्त्तिं ध्यात्वा मनसा मन्त्र-मुच्चरन् वारत्रयं निमज्य मन्त्रजप्ताद्भिरात्मानमभिषिञ्चेत्। ततस्तर्पणान्तं कर्म कृत्वा मूलमन्त्रमष्टाविंशतिवारं जप्त्वा अष्टाविंशतिवारं देवं तर्पयेत्। तत्र प्रकारः—जले देवतायाः पीठं विचिन्त्य सकृत् सकृत संतर्प्य तत्र देवतामावाह्य सर्वोपचारबुद्ध्या जलेनैव संपूज्य धेनुमुद्रया तोये तर्पणद्रव्यं संपाद्य सुवर्ण-चकषीकृतेनाञ्जलिना मूलान्ते अमुकं तर्पयामीति देवतामुखे तर्पयेत्। तत आत्मानं मन्त्रजप्ताद्भिरभिषिच्य एकैकाञ्जलिना परिवारान् तर्पयित्वा ततः कलशमुद्रया त्रिवारमात्मानमभिषिच्य तत्तद्देवगायत्रीं दशकृत्वो जपेत्। ओं घृणि सूर्य आदित्येत्यष्टार्णेनान्येन वा भानवेऽर्घं दत्वा मूलेन दशधाजप्तज-लैराचम्य दिक्पालान् प्रणम्य प्राङ्मुखः कुशाक्षतयवान्यादाय संकल्पं कुर्यात्। यथा ओं अमुकमन्त्रस्यसिद्धिकामोऽद्यादि इयत्संख्यतन्मन्त्रजप-तद्दशांश-तन्मन्त्रकरणकहोम-तद्दशांशतर्पण-तद्दशांशमार्जन-तद्दशांशब्राह्मणभोजनात्मक-पुरश्चरणमहं करिष्ये इति संकल्पयेत्।

उपरागे तु एतत्कालाद्येतदुपरागविमोकपर्यन्ततन्मन्त्रजपेति वाक्यमेवमद्या-दीत्यत्र चन्द्रोपरागे एतन्निशादीति वक्तव्यम्। एकाहसाध्ये सूर्योपरागे त्वद्येति विशेषः।

केषाञ्चिन्मते जपदशांशेनैव होमतर्पणमार्जनानि देवताचिन्तनं च दशांशेन ब्राह्मणभोजनं तु तत्राङ्गमिति न तत्र दशांशान्वयः। यत्र तु होमसंख्यायां कल्पविशेषस्तत्र तथैव संकल्पोऽपि।

ततोऽमुकमन्त्रस्यामुकऋषिरमुकं छन्दोमुका देवतामुकबीजममुकशक्तिः पुरश्चरणजपे विनियोगः। इति कुशजलेन संकल्पान्तरं कुर्यात्। ततो द्वारनिकटं गत्वा प्रणवेन सामान्यार्घं कृत्वा तज्जलेन द्वारमभ्युदय ऊर्द्ध्वशाखायां दक्षमध्ये वामक्रमेण विघ्नेशमहालक्ष्मीसरस्वतीः संपूज्य दक्षशाखायां विघ्नेशं वामे क्षेत्रपालं च पूजयेत्। ततो दक्षिणवामशाखयोः गङ्गायमुने एवं धातृविधातारौ शङ्खनिधिपद्मनिधी संपूज्य देहल्यामस्त्रं द्वारपालांश्च प्रतिद्वारं पूजयेत्। ततो वामशाखायां स्पृशन् मण्डपं प्रविश्य नैर्ऋते कोणे वास्त्वीशं ब्रह्माणं च संपूज्य चतुर्धा मण्डपं संस्कुर्यात्।

तत उपविश्य पीठस्याग्नेयादिकोणेषु पूर्णकुम्भचतुष्टयं स्थापयित्वा तत्र क्रमेण गणेश-सरस्वती-दुर्गा-क्षेत्रपालान् संपूज्य पद्धतिक्रमेण भूतशुद्ध्यादिनैवेद्यदानान्तं विधाय बलिदानं यथा—

ओँ ये रौद्रा रुद्रकर्माणो रौद्रस्थाननिवासिनः।
योगिन्योप्युग्ररूपाश्च गणानामधिपाश्च ये॥
विघ्नभूतास्तथा चान्ये दिग्विदिक्षु समाश्रिताः।
सर्वे ते प्रीतिमनसः प्रतिगृह्णन्त्विमं बलिम्॥

इत्यष्टदिक्षु बलिदानम्।
ततो भूतबलिः। यथा—

भूतानि यानीह वसन्ति भूतले बलिं गृहीत्वा विधिवत् प्रयुक्तम्।
संतोषमासाद्य व्रजन्तु सर्वे क्षमन्तु तेन्यत्र नमोस्तु तेभ्यः॥

अथवा संकल्पानन्तरमेव द्वारपूजादिकं विनैव मण्डपं प्रविश्य पद्धत्युक्तक्रमेणासनोपवेशनादिमेवारभ्य पूजां कुर्यात्। ततः पूजां समाप्य जपं कृत्वा देवताहस्ते विसर्जयेत्। यद्वा पुष्पमाघ्राय देवतां हृदब्जे उद्वास्य मानसैरुपचारैरिष्ट्वा ऋष्यादिन्यासं करन्यासं च विधाय प्राणायामान् कृत्वा देवतां ध्यायन् यथाविधि जपेत्। जपश्च प्रहरद्वयमेव कर्त्तव्यः। प्रत्यहं न्यूनाधिकसंख्यो न कर्त्तव्यः।

अथ जपसंख्यायां समाप्तायां यथोक्तद्रव्यैर्यथासंकल्पं होमं कुर्यात् । तद्यथा—स्रुक् स्रुवौ व्यजनं पूर्णपात्रं अग्निस्थापनपात्रं आज्यस्थाली प्रोक्षणीपात्रं अगर्भदर्भमुष्टिः परिधित्रयं साग्रकुशपत्रचतुष्टयं दर्भाः समित्षट्कं शुष्केन्धनं गव्यघृतं कल्पोक्तहोमद्रव्यं गन्धपुष्पाद्युपचाराः बलिद्रव्याक्षतादीनि संनिधाप्य कर्मार्थं कुशाच्छादितमुदकपात्रं संनिदध्यात् ।

ततो भूतशुद्धिमातृकान्यासतत्त्वन्यासप्राणायामादिकं यथाकल्पं विधाय गोमयलिप्ततुषकेशशर्करादिरहितशुद्धभूभागे कुण्डमारभेत । यथा मूलेन कुण्डस्थानं निरीक्ष्य फडिति प्रोक्ष्य फडिति कुशैस्ताडयित्वा हूमिति कुशोदकेनाभ्युक्ष्य फडिति खननं, फडिति मृदुद्धारः, नम इति किंचिन्मृत्तिकान्तरप्रक्षेपः, फडिति समीकरणं, हूमिति सेचनं, फडिति कुट्टनं, हूमिति मार्जनं, हूमिति गोमयोदकेनोपलेपनं हूमिति सोमसूर्य- वह्निकलारूपचिन्तनं, हूमिति त्रिसूत्रीकरणं, तच्च सूत्रेण त्रिधावेष्ट्य, नम इति अर्चनं फडिति वज्ररूपतया चिन्तनं, नम इति प्रागग्रै रुदगग्रैः कुशैर्मध्ये स्थापितैश्चतुः पथीकरणं हूमिति अक्षपाटनं, तच्च भागं परिकल्प्य मध्ये आवसथ्यः पूर्वभागे सभ्यः पश्चिमे आहवनीय उत्तरे अन्वाहार्यः दक्षिणे गार्हपत्य इति चिन्तनरूपम् । वस्तुतः क्षपाटना राक्षसाः तच्छून्यत्वभावनं तत् । एवमष्टादशकुण्डसंस्कारान् कुर्यात् ।

अथवा मूलमन्त्रेण वीक्षण फडिति प्रोक्षणं फडिति कुशैस्ताडनं हूमित्यभ्युक्षणमिति चतुष्टयमेव कुर्यात् ।

अथवा नित्यनैमित्तिके तथा काम्येऽपि स्वल्पहोमे स्थण्डिलमेव कुर्यात् । तच्च हस्तायतं चतुरङ्गुलोच्छ्रितं अङ्गुलोच्छ्रितं वा यद्वा अरत्निमात्रायतं अङ्गुष्ठपर्वोन्नतं वालुकानिर्मितं स्थानम् ।

ततः कुण्डे स्थण्डिले वा नम इति मन्त्रेण प्रागग्रा विष्णुशिवशक्रदेवताकास्तिस्रो रेखाः उदग्राश्च ब्रह्मवैवस्वतेन्दुदेवताकास्तिस्रो रेखाः कुशेनोल्लेखनीयाः । यद्वा षट्कोणमेव लिखेत् । पक्षद्वयेऽपि मध्ये त्रिकोणं विलिख्य तन्मध्ये ह्रीं रेखाषट्कस्य वा बहिर्दलाष्टकयुतं सकेसरं पद्मं चतुर्द्वारभूपुरावृतं लिखेत् ।

ततः ओंकारेण सर्वमभ्युक्ष्याधारशक्त्यादिधर्मादिवाङ्ज्ञानात्मपर्यन्तं संपूज्य पूर्वाद्यष्टकेसरेषु जया विजया अजिता अपराजिता नित्या विलासिनी दोग्ध्री अघोराः मध्ये मङ्गलां संपूज्य ह्रीँ वागीश्वरीश्वरयोर्योगपीठात्मने नमः इति पीठमभ्यर्चयेत् । यद्वा वागीश्वरीयोगपीठात्मने नमः इत्येवमेव पीठं पूजयेत् । तत्र

ऋतुस्नातां नीलेन्दीवरधारिणीं ध्यात्वा वदवद वाग्वादिनि स्वाहा नम इति वागीश्वरीं पञ्चोपचारैः पूजयेत्। ततः कुण्डं वागीश्वरीशरीरमिति विचिन्त्य सूर्यकान्त्यादिभवमरणिज वा श्रोत्रियगेहजं वा वह्निं सुवर्णकांस्यमृत्तिकाद्यन्यतमपात्रे वह्निबीजेन निधाय तस्माज्ज्वलदग्निमादाय नैऋत्यां कवचमन्त्रेण क्रव्यादांशं परित्यज्य देवांश शेषमग्निं चतुर्धा संस्कुर्यात्। यथा मूलेन वीक्ष्य फडिति कुशैस्ताडयित्वा हूमित्यभ्युक्षयत् (क्षेत्) । ततः औदार्येण भ्रूमध्यस्थितेन चाग्निना भौमस्याग्नेरैक्यं विचिन्तयन् रं इति बीजेन वह्नौ चैतन्यं विचिन्त्य औंकारमन्त्रितं वं इति धेनुमुद्रयामृतीकृतं फडिति रक्षितं हूमित्यवगुण्ठितं गन्धाद्यर्चितमग्निं कुण्डोपरि प्रदक्षिणं त्रिः परिभ्राम्य जानुस्पृष्टमहीतलः स्वाभिमुखं संयोगसंभूतशिवबीजबुद्ध्या वागीश्वरीयोनौ ओं इति मन्त्रेण मूलेन वा निः क्षिपेत्।

ततः प्रादेशमितां घृतप्लुतां समिधमग्नौ निः क्षिप्य वृतं ब्रह्माणं तदभावे कुशवटुकादिकमग्नेर्दक्षिणतः कुशोपरि ओं अस्मिन् होमकर्मणि कृताकृतावेक्षकस्त्वं मे ब्रह्मा भव इत्युपवेशयेत्। ततः मिथुनान्तधिया वागीश्वरीश्वरयोः क्षालनादिजलमाचमनीयं च दद्यात्। ततो ज्वालिनीं मुद्रां प्रदर्श्य चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा इति मन्त्रेणाग्निं प्रज्वालयेत्। ततः सप्तजिह्वाख्यांमुद्रां प्रदर्शयेत्। ततः

ओं अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्।
सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम्॥

इति वह्निमुपतिष्ठेत्। ततो वैश्वानरेत्यादिमन्त्रस्य भृगुऋषिः गायत्री छन्दोऽग्निर्देवता रं बीजं स्वाहा शक्तिरग्निमुखे विनियोग इति स्मृत्वा शिरसि ओं भृगवे नमः रसनायां ओं गायत्र्यै नमः हृदि ओं अग्नये नमः गुह्ये रं पादयोः स्वाहेति विन्यस्य स्वस्वनामसमानवर्णाः सत्त्वादिगुणभेदेन त्रिधा भिन्नास्तेजोरूपा वह्निजिह्वाः स्वशरीरे न्यसेत्। तत्र सात्त्विके शुभकर्मणि लिङ्गे स्य्र्रूँ हिरण्यायै नमः गुदे ष्य्र्रूँ गगनायै नमःशिरसि श्य्र्रूँ रक्तायै नमः मुखे ल्य्र्रूँ कृष्णाय नमः घ्राणे व्य्र्रूँ सुप्रभायै नमः नेत्रयोः वय्र्रूँ बहुरूपायै नमः सर्वाङ्गे व्य्र्रूँ अतिरक्तायै नमः इति न्यसेत्। राजसवश्यादिषु लिङ्गे स्य्र्रूँ पद्मरागायै नमः गुदे ष्य्र्रूँ

सुपर्णायै नमः शिरसि श्य्र्ऊँ भद्रलोहितायै नमः मुखे व्य्र्ऊँ लोहितायै नमः घ्राणे ल्य्र्ऊँ श्वेतायैनमः नेत्रयो वय्र्ऊँ धूमिन्यै नमः सर्वाङ्गे व्य्र्ऊँ करालिकायै नमः इति। तामसेषु मारणादिक्रूरकर्मसु लिङ्गे स्य्र्ऊँ विश्वमूर्त्यै नमः गुदे ष्य्र्ऊँ स्फुलिङ्गिन्यै नमः शिरसि श्य्र्ऊँ धूम्रवर्णायैनमः मुखे व्य्र्ऊँ मनोजवायै नमः घ्राणे ल्य्र्ऊँ लोहितायै नमः नेत्रयोः व्य्र्ऊँ करालायै नमः सर्वाङ्गेषु व्य्र्ऊँ काल्यै नमः इति न्यसेत्। ततः स्वशरीरे कराङ्गन्यासौ तत्र मन्त्राः सहस्रार्चिषे हृदयाय नमः स्वस्तिपूर्णाय शिरसे स्वाहा उत्तिष्ठपुरुषाय शिखायै वषट् धूम्रव्यापिने कवचाय हूँ सप्तजिह्वाय नेत्रत्रयाय वौषट् धनुर्धराय अस्त्राय फट् इति। ततो वह्निमूर्त्तीः शक्तिस्वस्तिकराः विचिन्त्य शरीरे न्यसेत् यथा मूर्ध्नि अग्नये जातवेदसे नमः। वामांसे ओँ अग्नये सप्तजिह्वाय नमः। वामपार्श्वे ओं अग्नये हव्यवाहनायनमः। वामकट्यां ओं अग्नये अश्वोदरजाय नमः। लिङ्गे ओं अग्नये वैश्वानरायनमः। दक्षिणकट्यां ओँ अग्नये कौमारतेजसे नमः। दक्षिणपार्श्वे ओं अग्नये विश्वमुखाय नमः। दक्षिणांसे ओ अग्नये देवमुखाय नमः। ततोऽग्नावग्नेः पीठपूजां कुर्यात्। यथा आधारशक्त्यादि धर्मादिवा अग्निमण्डलान्तं संपूज्य पूर्वाद्यष्टदिक्षु पीताश्वेतारुणाकृष्णाधूम्रातीव्रास्फुलिङ्गिनीरुचिराःमध्ये ज्वालिनीमिति पीठशक्तीः संपूज्य रं वह्नियोगपीठात्मने नमः इति पीठं पूजयित्वा मूलेन मूर्त्तिं परिकल्पयेत्। ततः

इष्टं शक्तिं स्वस्तिकाभीतिमुच्चै
दीर्घैर्दोर्भिर्धारयन्तं जवाभम्।
हेमाकल्पं पद्मसंस्थं त्रिनेत्रं
ध्यायेद् वह्निं बद्धमौलिं जटाभिः॥

इत्येवं ध्यात्वा मेखलोपरि शुद्धजलेन परिषिच्य मध्यमेखलायामग्रभेदर्भैः पूर्वपश्चिमयोरुदगग्रैः दक्षिणोत्तरयोः प्रागग्रैः परिस्तरणम्। एकमेखले मेखलाया अधः द्विमेखले द्वितीयमेखलायां स्थण्डिलपक्षे तद्बहिः सेचनानन्तरं परिस्तरणमिति विशेषः। ततस्तत्रैव बाहुप्रमाणान् मध्यमेखलामानान् वा आर्द्रानेकवृक्षोद्भवान वैकङ्कतकाश्मर्यवैणुखादिरौदुम्बराणामन्यतमान् परिधीन् दक्षिणपश्चिमोत्तरक्रमेण विन्यस्य तेषु यथाक्रमं ब्रह्मविष्णुशिवान् संपूज्य ओं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मन्त्रेण यथोक्तरूपं वह्निं संपूज्य मध्ये षट्कोणेषु पूर्वोक्तमन्त्रैर्न्यस्तपूर्वा वह्नेः सप्तजिह्वाः प्रपूज-

येत। केसरेष्वग्न्यादिकोणेषु ओँ सहस्रार्चिषे हृदयायनमः ओँ स्वस्तिपूर्णाय शिरसे स्वाहानमः ओँ उत्तिष्ठपुरुषाय शिखायै वषट्नमः ओंधूमव्यापिने कवचाय हूँनमः अग्रकेसरे ओँ सप्तजिह्वायनेत्रत्रयायवौषण्नमः। पूर्वादिकेसरेषु ओँ धनुर्धराय अस्त्राय फट् नमः। पूर्वादिदलेषु ओँ अग्नयेजातवेदसेनमः ओँ अग्नये सप्तजिह्वायनमः ओँ अग्नये हव्यवाहनाय नमः ओँ अग्नये अश्वोदरजायनमः ओँ अग्नयेवैश्वानरायनमः ओँ अग्नये कौमारतेजसेनमः ओँ अग्नये विश्वमुखायनमः ओँ अग्नये देवमुखायनमः। प्राच्यादि दशदिक्षु इन्द्रादीन् तद्बहिः तदस्त्राणि च पूजयेत्। ततः स्ववाम भागे पूर्वाग्रान् दर्भानास्तीर्यायोवक्त्राणि प्रोक्षण्यादिपात्राणि तेषु स्थापयेत्। ततः पात्राण्युत्तानीकृत्य प्रोक्षणीपात्रं वारिणा परिपूर्य तत्र तीर्थमन्त्रेण तीर्थमावाह्य तज्जलैः कूर्चेनासादितद्रव्याणि मूलेनाभिषिच्याग्नेरुत्तरतः पात्रंधारयेत्। ततःस्रुक्स्रुवौ अधोमुखौ त्रिःप्रतप्य वामहस्तेनादाय दक्षिणहस्तेन कुशात्रयाग्रमूलमध्यैर्यथाक्रमं तदग्रमूलमध्यानि त्रिः संमृज्य संप्रोक्ष्य पुनः प्रतप्य सम्मार्जनकुशानग्नौ प्रक्षिप्य दक्षिणतः कुशोपरि तौ निदध्यात्। तत आज्यस्थालीं पुरतः कृत्वा अस्त्रजप्तजलेन प्रक्षाल्य तत्र प्रादेशमात्रे पवित्रे निधाय आज्यं मूलेन वीक्ष्य अस्त्रमन्त्रेण प्रोक्ष्य तेनैव कुशैस्ताडयित्वा कवचमन्त्रेणाभ्युक्ष्याज्यस्थाल्यां निवपेत्। तत आज्यषट्कसंस्कारान् कुर्यात्। वायव्यां दिशि किञ्चिदङ्गारान् पृथक्कृत्वा तत्र हृन्मन्त्रेणाज्यस्थालीं निवेशयेत् इति तापनम्। दर्भयुग्मं संदीप्य हृन्मन्त्रेणाज्ये प्रक्षिप्यानले क्षिपेदिति पवित्रीकरणम्। दर्भयुग्मं संदीप्य कवचमन्त्रेणाज्यं नीराज्य दर्भयुग्मं वह्नौ क्षिपेदिति अभिद्योतनम्। दर्भान् प्रज्वाल्यास्त्रमन्त्रेण घृते प्रदर्श्य तानग्नौ क्षिपेदिति उद्योतनम्। ततोऽङ्गारान् घृतमुत्तार्य तानङ्गारानग्नौ संयोज्य जलं स्पृष्ट्वा प्रादेशमात्रं दर्भद्वयमङ्गुष्ठानामिकाभ्यां गृहीत्वास्त्रमन्त्रेण वह्न्यभिमुखं त्रिरुत्पूयादित्युत्पवनम्। तद्वत् घृताभिमुखं तन्मन्त्रेणैव त्रिःक्षिपेदिति संप्लवनम् इत्याज्यं संस्कृत्य प्रादेशमात्रं सग्रन्थिदर्भयुग्मं घृतान्तरे प्रक्षिप्य वामदक्षिणभागयोः शुक्लकृष्णौ विचिन्त्य वामभागे ईडां दक्षिणभागे पिङ्गलां मध्ये सुषुम्नां ध्यात्वा होममारभेत। होमस्तु यत्र वह्नेर्ज्वाला तत्र विधातव्यः। हृदयमन्त्रेण दक्षिणभागात् स्रुवेणाज्यमानीयाग्नेर्दक्षिणलोचने ओं अग्नये स्वाहेति जुहुयात्, तेनैव वामभागादाज्यं गृहीत्वा वामलोचने ओं सोमाय स्वाहा। हृदयमन्त्रेणैव मध्यभागादाज्य-

मानीय ललाटलोचने ओं अग्नीषोमाभ्यां स्वाहा। इयमाहुतिर्नृसिंहातिरिक्त-विष्णुमूर्त्तिहोमे नास्तीति केचित्। पुनर्दक्षिणभागाद् हृदयमन्त्रेणाज्यं गृहीत्वा अग्नेर्मुखे ओं अग्नये स्विष्टिकृते स्वाहा इति जुहुयात्। आज्याहुतिषु ·········स्यग्नौ हुत्वा ········· दक्षिणादिभागेषु शेषाज्यप्रक्षेपः। इत्यग्निनेत्रवक्त्रो-द्घाटनम्। ततः ओं स्वाहा ओं भूः स्वाहा ओं भुवः स्वाहा ओं स्वः स्वाहा ओं भूर्भुवःस्वः स्वाहा इति व्याहृतिहोमं विधाय वैश्वानरेत्यादिवह्निमन्त्रेणा-हुतित्रयं दत्वाग्नेर्गर्भाधानादिकाः क्रियाः बुद्धिस्थीकृत्य प्रत्येकं ओं स्वाहा इत्याहुत्यष्टकं जुहुयात। नामकरणेतु अमुकाग्निस्त्वमसीति उच्चारणपूर्वकमिति विशेषः। तानि च कर्माणि गर्भाधानं पुंसवनं सीमन्तोन्नयनं जातकर्म नामकरणं उपनिःक्रमणं अन्नप्राशनं चूड़ाकरणं उपनयन महानाम्यं महाव्रतं उपनिषत् गोदानं समावर्त्तनं उद्वाहश्च। मारणादिक्रूरकर्मसु मारणमपि। ततः सप्तजिह्वाह्वयां मुद्रां प्रदर्श्य वागीश्वरी-वागीश्वरौ संपूज्यात्मनि संयोज्य मूलेन मूलाग्रघृताप्लुताः पञ्च समिधो जुहुयात्। ततो न्यस्तजिह्वानां मन्त्रै-र्नमः स्थाने स्वाहायुक्तः सप्ताहुतीर्जुहुयात्। ततः ओं सहस्रार्चिषे हृदयायनमः स्वाहा ओं स्वस्तिपूर्णाय शिरसे स्वाहा ओं उत्तिष्ठपुरुषाय शिखायैवषट्स्वाहा ओं धूमव्यापिने कवचाय हुँ स्वाहा ओं सप्तजिह्वायनेत्रत्रयाय वौषट् स्वाहा ओं धनुर्धरायास्त्राय फट्स्वाहा इत्यङ्गमन्त्रैर्हुत्वा मूर्त्तिमन्त्रैर्जुहुयात्। यथा ओं अग्नये जातवेदसे स्वाहा ओं अग्नये सप्तजिह्वायस्वाहा ओं अग्नये हव्य-वाहनाय स्वाहा ओं अग्नये अश्वोदरजाय स्वाहा ओं अग्नये वैश्वानराय स्वाहा ओं अग्नये कौमारतेजसे स्वाहा ओं अग्नये विश्वमुखाय स्वाहा ओं अग्नये देवमुखाय स्वाहा ततः ओंनमः इति चतुर्द्वारं स्रुवेण स्रुचि घृतं दत्वा अधोमु-खेन स्रुवेण च पिधाय वौषडन्तेन वैश्वानरेत्याद्यकमन्त्रेण एकाहुतिं मुखे जुहुयात्। तत उपविश्य महागणेशमन्त्रेण चतुर्दशाहुतीर्जुहुयात्। यथा ओं स्वाहा, ओं श्रीँस्वाहा, ओंश्रींह्रींस्वाहा, ओंश्रींह्रींक्लींस्वाहा, ओंश्रींह्रींक्लींग्लौं स्वाहा, ओंश्रींह्रींक्लींग्लौंगं स्वाहा, ओं श्रींह्रींक्लींग्लौंगंगणपतये स्वाहा, ओंश्रींह्रींक्लीं ग्लौंगंगणपतये वरवरद स्वाहा, ओंश्रींह्रींक्लींग्लौं गणपतये वरवरद सर्वजनं मे स्वाहा, ओंश्रींह्रीं क्लीं ग्लौंगंगणपतये वरवरद सर्वजनं मे वश-मानय स्वाहा। ततः समस्त मन्त्रेणाहुतिचतुष्टयं इति प्राञ्चः एकैकाक्षरवृद्ध्या त्रयोदशाहुतयः समस्तेन चैका। वरवरदेति पदद्वयमिति चतुर्दशाहुतयः इति केचित्।

तत इष्टदेवतायाः पीठमग्नौ संपूज्य तत्रेष्टदेवतामावाह्य वह्निरूपां तां संपूज्य तन्मुखे पञ्चविंशतिवारं मूलमन्त्रेणाज्येन जुहुयादिति वक्त्रैकीकरणम्। ततो वह्निदेवतयोरात्मना सहैक्यं संभाव्य मूलेनैकादशाहुतीर्जुहुयादिति नाडी-संधानम्। ततः साध्यदेवताया अङ्गाद्यावरणानामेकैकाहुतिं घृतेन हुत्वा यथोक्त-संख्यं यथोक्तद्रव्येण होमं कुर्यात् ।

ततो महाव्याहृतिहोमः। ओं भूरग्नये पृथिव्यै महते च स्वाहा। ओं भुवो वायवे चान्तरिक्षाय महते च स्वाहा। ओं स्वरादित्याय च दिवे च महते च स्वाहा। ओं भूर्भुवः स्वः चन्द्रमण्डलनक्षत्रेभ्यो दिग्भ्यश्च महते च स्वाहा। इत्याहुतिचतुष्टयं हुनेत्। प्रत्येकमेवाहुतिर्भूरादीनामिति केचित्।

ततः पूर्णाहुतिः। वामहस्तेन स्रुचं धृत्वा दक्षिणहस्तेन स्रुवेण घृतैरापूर्याधोमुखेन स्रुवेण पिधाय तदग्रे फलकुसुमादिकं दत्वा उत्थाय परमामृत-बुद्धया मूलेन जुहुयात्। तत उपविश्य ओं इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा इत्यनेनाष्टाहुतीर्जुहुयात्। तत इष्टदेवतां कुम्भे तदभावे स्वात्मानं संयोज्य पूर्ववद्वह्नेजिंह्वाङ्गमूर्त्तिमन्त्रै-रेकैकाहुतिं हुत्वा वह्निं जलेनाभिषिच्यात्मानं योजयेत्। ततो ब्रह्मदक्षिणां दद्यात्। ततो नित्यातिरिक्तहोमे सपरिवारान् परिधीनग्नौ निःक्षिपेदिति संक्षेपः।

केषांचिन्मते राशिमण्डलं विलिख्य राश्यादिवलिदानम्। यथा एषबलिः ओं मेषाश्विनीभरणीकृत्तिकापाददेवताभ्यो दिवानक्तं चारिभ्यः सर्वे-भ्यो भूतेभ्यो नमः। एवं एष बलिः ओं वृषकृत्तिकाशेषपादत्रयरोहिणीमृगशिरः पूर्वार्धदेवताभ्यो दिवानक्तं चारिभ्यः सर्वेभ्यो भूतेभ्यो नमः। एषबलिः ओं मिथुनमृगशिरउत्तरार्धार्द्रापुनर्वसूपादत्रयदेवताभ्यो दिवा नक्तं चारिभ्यः सर्वेभ्यो भूतेभ्यो नमः। एष बलिः ओं कर्कटपुनर्वसूशेषपादपुष्याश्लेषादेवताभ्यो दिवा नक्तंचारिभ्यः सर्वेभ्यो भूतेभ्यो नमः। एष बलिः ओं सिंहमघापूर्वफल्गुनी-पूर्वपाददेवताभ्यो दिवानक्तं चारिभ्यः सर्वेभ्यो भूतेभ्योनमः। एष बलिः कन्योत्तरफल्गुनी अन्तपादत्रयहस्तचित्रापूर्वार्धदेवताभ्यो दिवानक्तंचारिभ्यः सर्वेभ्यो भूतेभ्योनमः। एष बलिः ओं तुलाचित्रोत्तरार्धस्वातीविशाखादयपा-

द्वयदेवताभ्यो दिवानक्तंचारिभ्यः सर्वेभ्यो भूतेभ्यो नमः। एष बलिः ओं मकरोत्तराषाढ़ान्त्यपादश्रवणधनिष्ठार्द्धदेवताभ्यो दिवानक्तंचारिभ्यः सर्वेभ्यो भूतेभ्यो नमः। एष बलिः ओं कुम्भधनिष्ठोत्तरार्धशतभिषपूर्वभाद्राद्य-पादत्रयदेवताभ्यो दिवानक्तंचारिभ्यः सर्वेभ्यो भूतेभ्यो नमः। एष बलिः ओं मीनपूर्वभाद्रान्त्यपादोत्तरभाद्ररेवती देवताभ्यो दिवानक्तंचारिभ्यः सर्वेभ्यो भूतेभ्यो नमः।

ततो वारबलिदानम्। यथा एषबलिः ओं सूर्यवारायनमः। एवं चन्द्रादीनां षण्णामपि दद्यात्।

ततस्तत्तद्राशिक्षेत्रे एष बलिः ओं मेषाधिपतये मङ्गलाय नमः। एवं ओं वृषाधिपतये शुक्राय ओं मिथुनाधिपतये बुधाय ओं कर्कटाधिपतये सोमाय ओं सिंहाधिपतये सूर्याय ओं कन्याधिपतये बुधाय ओं तुलाधिपतये शुक्राय ओं वृश्चिकाधिपतये कुजाय ओं धनुरधिपतये बृहस्पतये ओं मकरा-धिपतये शनैश्चराय ओं कुम्भाधिपतये शनैश्चराय ओं मीनाधिपतये बृहस्पतये। ततः एष बलिः ओं सूर्यग्रहाय नमः। एवं ओं चन्द्रकुजबुधबृहस्पतिशुक्रशनैश्चर-राहुकेतुभ्यो दद्यात्। ततो मीनमेषयोरन्तराले वरवानरकौरवतैत्तिरगरवणि-जरिष्टिभ्यः प्रत्येकं बलिं दद्यात्।

ततो देवतां संपूज्य दण्डवत् प्रणम्य आत्मनि संयोज्य स्वतन्त्र-होमपक्षे त्विदानीमेव कर्मदक्षिणां विधाय ब्राह्मणान् भोजनादिना तोषयेदित्यलं विस्तरः।

त्वरावशेन तु स्वगृह्योक्तविधिनाऽग्निस्थापनं सामान्यहोमं च विधायाग्नौ साध्यदेवतां च समावाह्य संपूज्य यथोक्तद्रव्येण होमं समाप्याज्ञाद्यावरणेभ्य एकैकामाहुतिं दत्वा संस्रवप्राशनं पूर्णाहुतिञ्यायुषपर्यन्तं स्वगृह्योक्तविधिना कुर्यादिति माधवमानसोल्लासादिनिबन्धस्वरसेन परमगुरुचरणाः।

यद्वा प्रत्यहमेव जपदशांशेन होमं कुर्यात्।

ततो यथासङ्कल्पं तर्पणम्। यथा जले देवतायाः पीठं विचिन्त्य सकृत सकृत् पीठदेवताः संतर्प्य तत्र देवमावाह्य सर्वोपचारबुद्ध्या तोयैरेव संपूज्य परिवारानपि पूजयित्वा एकैकाञ्जलिना तान् तर्पयेत्। ततो मूलमुच्चार्यामुकं

तर्पयामि इति। देवमञ्जलिना तर्पयित्वा पुनरङ्गादिभ्य एकैकाञ्जलिं दद्यात्। ततो देवं सपरिवारं हृदि उद्वासयेत्। केषांचिन्मते मूलान्तेऽमुकं तर्पयामि नमः इति मन्त्रः।

ततो मार्जनम्। यथा आत्मानं देवरूपं ध्यात्वा मूलमन्त्रं नमोन्तमुच्चार्य कुम्भमुद्रया जलं मूर्ध्नि क्षिपेत्। अन्ते अमुकमभिषिञ्चामीति मार्जनमन्त्र इति केचित्।

ततो दशांशेन ब्राह्मणभोजनम्। यथा ब्राह्मणानामन्ड्यासनं दत्वा देवतां तदङ्गे मूलेन समावाह्य देवरूपं तमभ्यर्चयेत्। ततो नानारसोपेतमन्नं भोजयेत्। तदन्ते महतीं पूजां कुर्यात्। दक्षिणां दत्वा ब्राह्मणान् भोजयेत्। गोभूहिरण्य-वस्त्राद्यैर्गुरुं संपूज्य प्रणम्य बन्धुभिः सह मिष्टान्नं भुञ्जीत। तद्दिने महान्त-मुत्सवं कुर्यात्।

अथ पुरश्चरणनियमाः। त्रिसंध्यं द्विसंध्यं एकसंध्यं वा स्नानं देवता-पूजनं च नित्यनैमित्तिकाचरणं काम्यवर्जनं च तत्त्वजप्तान्नपानादिभोजनं स्त्रीशूद्रोच्छिष्टपतितादीनामसंभाषणमनवलोकनं च सत्यभाषणं लघुपक्वोष्ण-हविष्यभोजनं कुशास्तरणशयनं दिने दिने शयनीयवस्त्रक्षालनं दिवाभोजन-कांस्यपात्रभोजनदेवतानिवेदितभोजनवर्जनं उष्णोदकस्नान - गीतादिश्रवण-नृत्याद्यवलोकन-स्त्रीशूद्रादिस्पर्शनमर्घदानं च वर्जयेत्।

असंभवे तीर्थाद्बहिरुपादानम्। तदसम्भवे दिनभोजनोपादान मेवेति मन्त्रकौमुद्यां विस्तरः।

अयं च साधारणो विधिः। विशेषस्तु यत्र मंत्रे यथास्ति यत्र वा यथानियमानियमयोरभिधानं तत्र तथा विधेयमिति संक्षेपः।

अथ वीरसाधना।

सम्यक्सिद्धैकमन्त्रस्य नासाध्यं विद्यते क्वचित्।
बहुमन्त्रवतः पुंसः का कथा शिव एव सः॥
यः कश्चित् कुरुते वीरसाधनां सुसमाहितः।
प्राप्नोति परमां सिद्धिं नात्र कार्या विचारणा॥
अष्टम्यां च चतुर्दश्यां कृष्णपक्षे विशेषतः।
शवं वापि चितायां वा नीत्वा गत्वा यथासुखम्॥

साधयेत् स्वहितं मन्त्री मन्त्रध्यानपरायणः ।
भयं नैव च कर्त्तव्यं हास्यं तत्र विवर्जयेत् ।
दिशो नैव निरीक्षेत मन्त्रमेव सदाभ्यसेत् ॥

तत्र क्रमः । गृह एव सामिषान्नबलिमुत्पादयेत् । सामिषान्नबलिस्तु मधुमांसगुडान्नम् । ततो बलिं बल्यर्थच्छागं पिष्टकपुष्पादिकं दुग्धसहितं चादाय सार्धप्रहरोपरि रात्रौ सुहृदेकेनकसङ्केनापि निर्भयश्चितास्थानमागत्य अवेक्षकं तु कतिपयदूरे धृत्वा चितापश्चिमदिश्युपविश्य पूर्वाभिमुखो वा अञ्जलिं बद्ध्वा

ये चात्रैव स्थिता देवा राक्षसाश्च भयानकाः ।
ते प्रयच्छन्तु मे सिद्धिं ममत्वेनानुकम्पया ॥

इति वारत्रयं नमस्कृत्य सिद्धार्थान् विकिरेत् । षट्पात्रे बलिं कृत्वा उदीच्यादि दिशि धृत्वा प्रदक्षिणं दुग्धेन ओं हूं श्मशानस्तम्भ इमं सामिषान्नबलिं गृह्ण गृह्ण गृह्णापय गृह्णापय विघ्नं निवारय मम सिद्धिं प्रयच्छ स्वाहा । इति श्मशानस्तम्भाय बलिं दद्यात् । विघ्नं निवारयेत्यत्र विघ्ननिवारणं कुरुकुर्विति मत्स्यसूक्ते पाठः । एवं ओं हूं भैरवभयानक श्मशानाधिप इममित्यादि भैरवाय । ओँ हूँ कालभैरव श्मशानाधिप इममित्यादि कालभैरवाय । ओं हूं महाकाल श्मशानाधिप इममित्यादि महाकालाय ।

कालरात्रि महाभीमे कालिके घोरनिःस्वने ।
गृहाणेमं बलिं मातर्देहि सिद्धिमनुत्तमाम् ॥

हूं कालिके स्वाहा इति महाकालसमीपे बलिमुत्सृजेत् । प्रथममेतद्बलिदानं ततो ये चात्रेतिपाठः ततो बलिचतुष्टयमिति मत्स्यसूक्तस्वरसः ।

ततो यथोक्तप्रकारेण प्राणायामादिकं विधाय इष्टदेवतां संचिन्त्य जपेत । जपकाले न व्यग्रचित्तता न भयं कार्यम् । एकाक्षरमन्त्रेऽयुतं द्व्यक्षरे मन्त्रे अष्टसहस्रं त्र्यक्षरे मन्त्रे अयुतार्धं ततश्च परं सर्वमन्त्रेषु अष्टोत्तरसहस्रमेव जपसंख्या । जपान्ते देवताप्रत्यक्षे सति तत्पूजनं बलिदानं च । ततो देवता यदि देहि देहीति भाषते तदा छागबलिं दत्त्वा प्रार्थयेदिति ।

अथ मृतकपक्षे वीरसाधना लिख्यते । मृतकं पञ्चवर्षोपरि वयस्कमिति केचित् । सार्धप्रहरोपरि रात्रौ मृतकानयनं नदीतीरे चतुष्पथे वा मृतकं धृत्वा हूं मृतकानयनं हूमिति स्नपनं हूमित्युपवेशनम् । मृतकोपरि विधिवद्देवं संपूज्य बल्यादिकं दद्यात् । अत्र सर्वत्रायुतं जपः । तदन्ते छागबलिदानम् ।

नास्मात् परतरं किंचित् सत्वरं सिद्धिदायकम् ।
ऋषिभिश्चैव देवैश्च कथितं साधकेप्सितम् ॥
निर्भयश्च शुचिश्चैव अक्रोधो विजितेन्द्रियः ।
महाबलो दयालुश्च कथितोऽयमवेदकः ॥

इत्यवेदकलक्षणम् । मत्स्यसूक्ते इमं बलिमित्यादिकमुद्धृत्य

मन्त्रोयं नामपूर्वं तु प्रणवं प्रथमं वदेत् ।
द्वितीये प्रणवं माया तारं तारां तृतीयके ॥
तारं तारां तथा तारं चतुर्थे मनुरीरितः ।

तारा हूँ द्वितीयस्यादिबलिविशेषणं तारम् । पश्चान्मृतकाय हृदयं कल्पयेच्छिवः ।
तारं तारां समुच्चार्य तस्योपर्युपवेशनम् ।
हृदयं नमः शिरः स्वाहा ।
अस्त्रेण रक्षणं कृत्वा महासुदर्शनं जपेत् ॥

अथ जपमालाविधिः ।

निरामिषमेकवारं भुक्त्वा तदुत्तरदिने कृतनित्यक्रियः स्वयमेव साधकः समीचीनपुरुषान्तरद्वारा वा ग्रथयेत् । तद्यथा । यथालाभं यथाकामं मिथः सदृशरूपाणि नातिस्थूलकृशानि नवान्यक्षाणि द्विजपुण्यस्त्रीनिर्मितं ग्रन्थिशून्यं नवगुणं सूत्रं पट्टसूत्रं वा पृथक् पृथक् पञ्चभिर्गव्यैर्वा ततो गन्धोदकेन प्रक्षाल्य पद्माकारेण स्थापितेष्वश्वत्थनवपल्लवेषु स्थापयेत् । तत्तत्तेष्वक्षेषु सूत्रे च तारशक्तिपूर्वकं मातृकामन्त्रं विन्यस्य तत्र मातृकामावाह्य पूजयेत् । ततो यथाशक्ति अष्टोत्तरसहस्रमष्टोत्तरशतं वा हुत्वा संपाताज्येनाभिषिञ्चेत् । होमाशक्तौ होमसंख्याद्विगुणं चतुर्गुणं वा जपं कुर्यात् । ततो मणिमेकैकमादाय सूत्रे संयोज्य प्रत्येकमणिमध्ये ब्रह्मग्रन्थिं दद्यात् । गायत्रीमन्त्रेण ग्रथनमिति केचित् । गोपुच्छसदृशीं सर्पाकारां वा मालां कुर्यात् । सजातीयमेकाक्षं मेरुं कल्पयेत् ।

एवं मालां कृत्वा सद्योजातं प्रपद्यामि सद्योजाताय
... ... ... भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः इतिमन्त्रेण पञ्चगव्येन सञ्जलेन

च शतवारं प्रक्षाल्य चन्दनागुरुगन्धाद्यैः वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः सत्त्व ··· शमनाय ··· मनोन्मनाय नमः इति मन्त्रेण चन्दनादिना शतवारं घर्षयेत् । ततोऽघोरेभ्योऽथघोरेभ्यो घोरघोरतरेभ्यः सर्वतः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः इतिमन्त्रेण चन्दनादिना शतवारं धूपयेत् । ततः तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयादिति मन्त्रेण शतवारं चन्दनादिना लेपयेत् ।

एवं मालां संस्कृत्य प्राणप्रतिष्ठां कुर्यात् । यथा, प्राणमन्त्रस्य ब्रह्मविष्णुशिवा ऋषयः ऋग्यजुः सामानि छन्दांसि प्राणशक्तिर्देवता प्राणस्थापने विनियोगः । इति स्मृत्वा ऋषिछन्दोदैवतानि शिरोवदनहृत्सु विन्यस्य कं खं गं घं ङं आकाशवायुतेजोजलपृथिव्यात्मने हृदयायनमः इत्यङ्गुष्ठयोः चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने शिरसे स्वाहा इति तर्जन्योः टं ठं डं ढ णं श्रोत्रत्वक्चक्षुरसनघ्राणप्राणात्मने शिखायैवषडिति मध्यमयोः तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने कवचाय हूँ इत्यनामयोः पं फं बं भं मं वचनादानगतिविसर्गानन्दात्मने नेत्रत्रयाय वौषडिति कनिष्ठयोः यं रं लं वं शं षं सं हं लं क्षंः अस्त्राय फडिति करतलयोर्विन्यस्य दिशो बद्ध्वा तानेव मन्त्रान् हृदयशिरःशिखाकवचनेत्रपाणितलेष्वपि न्यसेत । ततो रक्ताब्धे रक्तपोते रक्तपद्मे स्थितां रक्तां षड्भुजां पाशाङ्कुशधनुर्बाणमूलकपालहस्तां देवीं ध्यायेत् । ततः प्रागुक्तमन्त्रं आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हंसः सोहं अमुष्य प्राणा इह प्राणा आं ह्रीं क्रों यं रं लं वं शं षं सं हौंहं सः सोहं अमुष्य जीव इह स्थितः आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः सोहं अमुष्य सर्वेन्द्रियाणि आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हंसः सोहं अमुष्य वाङ्मनश्चक्षुः श्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । आं ह्रीं क्रों इति मन्त्रं मालां स्पृष्ट्वा यथाशक्ति जपेत् । अङ्गन्यासादिकमप्यत्र नेति केचित् ।

एवं मालां संपाद्य तत्र प्रथमं मातृकामन्त्रं जपेत् एवं सकलमन्त्रजपाधिकारो भवति । मूलमन्त्रेण ग्रथने तन्मात्रजपाधिकार इति निबन्धारः ।

ततो ब्राह्मणाय दक्षिणां दद्यात् । ततो गुरुं संपूज्य तद्धस्तात् मालां गृह्णीयात् ।

जीर्णे सूत्रे सूत्रान्तरं दत्वा शतवारं मातृकामन्त्रं जपेत् । एवं प्रमादाद्धस्तपतनेऽप्यशुचिस्पर्शे पञ्चगव्यक्षालनमप्यधिकम् । अन्यच्च मन्त्रकौमुद्यां विस्तरः ।

अथ यन्त्रविधिः

यथाकामं कल्पोक्तद्रव्येण यन्त्रं विलिख्य पट्टसूत्रादिना संवेष्ट्य प्रथमं पञ्चगव्येन ततः पञ्चामृतेन ततो गन्धोदकेन प्रक्षाल्य यन्त्रराजाय विद्महे महायन्त्राय धीमहि तन्नो यन्त्रः प्रचोदयादिति यन्त्रगायत्रीं जपन् यन्त्रदेवतापीठत्वेन यन्त्रं ध्यायन् ताम्रादिपात्रे संस्थाप्य तत्र तद्देवतामावाह्य पुष्पाञ्जलिं दत्वा यन्त्रे प्राणान् संस्थाप्य यन्त्रेष्टदेवतां संपूज्य वस्त्रालंकरणादिना संतोष्य कुशादिना स्पृष्ट्वा मूलमन्त्रमष्टोत्तरसहस्रं शतं वा जपेत् । ततस्तावदेव हुत्वा संपाताज्येनाभिषिञ्चेत् । तदशक्तौ होमसंख्याद्विगुणं वा जपेत् । यथाशक्ति दक्षिणां दद्यात् ।

ततः कनकादिबद्धं यन्त्रं शुभदिवसे धारयेत् । कनकादिबन्धनानन्तरमेव प्रतिष्ठादिकमिति केचित् ।

एवमेव प्रतिमादिप्रतिष्ठापनम् । परन्तु तत्र पञ्चामृतक्षालनानन्तरं यवगोधूमचूर्णादिनोद्वर्त्तनमुष्णोदकेन स्नपनमिति विशेष इत्यस्माकं परमगुरुचरणपङ्कजपरिशीलिता सिद्धान्तपद्धतिरित्यलं विस्तरः ।



मीमांसास्मृतितर्कतन्त्रकवितालंकारकोषागम-
ज्योतिर्वेदपुराणभारतमतिर्यस्तर्कपञ्चाननः ।
देवोऽसौ कमतेश्वरक्षितिपतिस्तं देवनाथं चिरात्
संस्थाप्य स्वयमादरेण विदधे विद्वन्मुदे कौमुदीम् ॥

इति नरनारायणकारितायां महामहोपाध्यायतर्कपञ्चानन – श्रीदेवनाथकृतायां तन्त्रकौमुद्यां पद्धतिपरिच्छेदः ॥ २० ॥

समाप्तश्चायं ग्रन्थः ।

शाके १६०७ पौषकृष्णचतुर्थ्यां शुक्रे सभुआग्रामे श्रीश्रीपतिमिश्रेण स्वार्थमिदमलेखि । इति । शुभमस्तु । श्रीरस्तु ।

## तन्त्रकौमुद्यां नामत उल्लिखितानां ग्रन्थानां ग्रन्थकाराणां च सूची अक्षरानुक्रमेण—

—:०:—